# GĪTĀBHĀṢYAVIVECANAM

Dr. SWAMINATHAN, C. R.
(Kariakar)



Akhila Bharatiya Sanskrit Parishad
Lucknow

Publishers :
**Akhila Bharatiya Sanskrit Parishad**
Mahatma Gandhi Marg, Hazratganj
Lucknow-226001



First Edition
1982

Price : Rs.65.00

Printers :
PNAR MUDRAK
117, Nazirabad
Lucknow-226001

## Publishers' Note

One of the aims and objects of the Akhila Bharatiya Sanskrit Parishad, Lucknow is to publish important works in Sanskrit and Indology. The Parishad has already presented to the world of scholars some thirty such works, which have won universal appreciation. In publishing the present work—*Gītā-bhāṣyavivecanam*—the Parishad has made a further attempt to achieve its aim.

The *Bhagavadgītā* is one of the most popular Hindu Scriptures, the other two being the Upaniṣads and the Brahma-Sūtras. All the great Ācāryas or propounders of different sects among the Hindus have written commentaries on these three. Among them, the *Gītā* has the largest number of expositions, for a good many of the followers of the different sects have written glosses on the main commentaries of their great Ācāryas. It can be stated without any hesitation that there is no other Hindu Scripture which has been so frequently commented upon.

The commentary of one Ācārya differs from another and sometimes one is found even opposed to the other. Those who believe in the purity of the textual traditions will see that the Ācāryas have even tried to interpret the text to somehow suit their school of thinking. Dr. Swaminathan has tried to expose such attempts made by pedagogical interpretations.

The author, Dr. C. R. Swaminathan, is a renowned scholar of Sanskrit. In the present work he has critically analysed and examined all important Sanskrit commentaries on the *Bhagavad-gītā* and has presented a comparative study of these

commentaries in a lucid style. Though engaged in Government service, Dr. Swaminathan has been able to maintain his academic interest and has produced several works in Sanskrit. Some years back the late Dr. T. G. Mainkar also produced a similar study which was published as '*A Comparative Study of the Commentaries on the Bhagavadgītā*'. However, this is a more elaborate attempt in Sanskrit for the first time. The Parishad is proud of bringing out this scholarly and comparative study of the commentaries of the *Bhagavadgītā* from the pen of an erudite scholar, as Dr. Swaminathan is. It is earnestly hoped that all the lovers of the *Bhagavadgītā*, both the serious thinkers as well as the cursory readers, will find sumptuous food for their thought in it.

I shall be failing in my duty if I do not place on record my sense of gratitude to Shri Vishva Mohan of the Pnar Mudrak for bringing out the book against heavy odds.

Vasanta Pañcamī<br>Jan. 20, 1982.

Gopal Chandra Sinha<br>Secretary

# प्रास्ताविकम्

श्रीः

श्रीमद्भगवत्पादाचार्यैः प्रणीतानि सूत्रोपनिषद्गीताभाष्याणि प्रस्थानत्रय-भाष्यत्वेन व्यवह्रियन्ते। प्रस्थानत्रये सुखेन प्रवेशाय तैः विवेकचूडामणिप्रभृतयोऽनेके प्रकरणग्रन्थाः प्रवर्तिताः। इमे च प्रस्थानत्रयाध्ययने प्रवृत्तानां महान्तमुपकारमादधते। भाष्यगतनिगूढाशयस्यावगमने साहाय्यमिम आचरन्ति। चिरन्तनास्तीक्ष्णधिषणा अतिसूक्ष्मानपि पदार्थान् हेलयैवावगन्तुं यथाविधि ब्रह्मचर्यपरिपालनेन शक्तिसम्पन्ना अभूवन्। गुरुमुखात्सकृच्छ्रवणमात्रेण यथायथं विषयानध्यगच्छन्। आयतौ शक्त्या बुद्धिबलेनायुषाऽऽचारेण तपसा च विहीना लोका गभीरवस्तुग्रहणेऽसमर्था भवेयुरिति चिरन्तनास्सरलसरलान् ग्रन्थान् प्रणीयास्मानन्वगृह्णन्। सर्वोऽयं प्रयासः कस्मै फलायेति विचिन्त्यमाने स्फुटं प्रतिभायात्—यद्विदितोऽप्यविदितः, अविदितोऽपि विदित इति विरोधपरिहारायेति। सत्यमेव वयं महति सङ्कटे निपतितास्स्मः-स्वस्वरूपं जानन्तोऽपि न जानीमः। यश्चात्मानं जानामीति वदति स नूनमात्मानं न जानाति। ज्ञाते तस्मिन् कः प्रेक्षावान् जानामीति प्रयुञ्ज्यात्? तथा यदि प्रयुङ्क्ते, तर्हि स वस्तुतो न जानाति। जानातिक्रियायाः कर्तैव खलु तस्याः कर्मापि। कर्तृकर्मणोरैक्यावस्थितिरेव स्वस्वरूपावस्थितिः। शब्दतोऽवस्थितिमिमां नूनं जानीयात्, न त्वर्थतः। यावन्नार्थत इयमवस्थितिर्नापतति तावत्सोऽज्ञः। स्वगताज्ञत्वावगमन एव मानवेन प्रयतनीयम्। कतिपयपदार्थज्ञानमात्रेण न मानवो ज्ञानी परिगण्यते। ज्ञानगततरतमभावेन ज्ञानिषु, विषयगततारतम्येन ज्ञानेषु च प्रभेदा भवन्त्येव। संज्ञानम् विज्ञानम् प्रज्ञानम् इति सन्ति ज्ञानप्रभेदाः—

'वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम् ।
कामिनीकनकेभ्योऽपि न सुखं शान्तचेतसाम् ॥'

इत्यभियुक्तोक्त्या मानवप्रकृतिप्रयुक्तो विषयाणां व्यवस्थितत्वाभावः । विषयाश्च मानवान् विसिन्वन्ति, किन्तु ते कतिपयान् परिपक्वमतीनवाप्य कुण्ठितशक्तयो भवन्तीत्यत्र सन्ति बह्न्युदाहरणानि । तत्र हेतुः क इति विमृश्यमाणे संज्ञानवतो विज्ञानवान् गरीयान्, विज्ञानवतश्च प्रज्ञानवान् गरिष्ठ इति स्वीकर्तव्यम् । प्रज्ञानवत्स्वपि तरतमभावः शास्त्रेषु परिगणितः । ब्रह्मवित्, ब्रह्मविद्वरः, ब्रह्मविद्वरीयान्, ब्रह्मविद्वरिष्ठ इति । अत्र चावस्थाभेदेनैव भेदः, वस्तुतस्तु समाना एवेमे ।

स्थितप्रज्ञस्य स्वरूपविवरणप्रसङ्गे गीतासु व्याख्यातृभिः प्रपञ्चितमिदं रहस्यं द्वितीयेऽध्याये । सन्तीदृशानि रहस्यान्यनेकानि गीतासु । तानीमान्युद्घाटयितुं भगवत्पादा रामानुजाचार्या मध्वाचार्या अन्ये च व्याख्यातारः प्रवृत्ताः । क्वचिदेभिर्विरचितेषु भाष्येषु व्याख्यासु च मिथो विरोधः परिदृश्यते । तेषु स्थलेषु साध्वनुसन्धीयमानेषु—

'स्वसिद्धान्तव्यवस्थायां द्वैतिनो निश्चिता दृढम् ।
परस्परं विरुध्यन्ते तैरयं न विरुध्यते ॥'

इति न्यायेन विरोधः परिहर्तुं शक्यते । 'तत्त्वमसि' इति वाक्यार्थविवेचनावसरे कामं भाष्यकाराणां विरोधः प्रतिभायात्, किन्तु 'अहं ब्रह्मास्मि' इत्युपासनावसरे तु सर्वेषामेकरूपत्वं सिध्यत्येव । तत्र तत्र प्रतीयमानो विरोध आपातत इत्यङ्गीकृत्य तत्परिहारे बुद्धेरुपयोगस्समुचितः । विरुद्धमतप्रकटनं भाष्यकाराणां कलहायेति न मन्तव्यमस्माभिः । वेदान्ते यावन्तस्सम्प्रदायाः प्रचलितास्सर्वे एव ते पूर्वाचार्याणां प्रतिभाप्रसूताः । अवैदिकमपि मतं वेदप्रसूतमिति साधयन्तो भट्टपादाः स्वीयमौदार्यं प्रकटयन्ति । भट्टनयमनुसरन्तो भगवत्पादा अपि तत्र तत्र तन्मतेन सह सत्यपि विरोधे तं परिहृत्य स्वाभिमतसिद्धान्तं व्यवस्थापयन्ति । तत्र च कारणमिदमेष्टव्यम्—यच्चिरन्तनात्कालादविच्छेदेन प्रवृत्तस्य सम्प्रदायस्य परिपालनम् । यावन्ति शास्त्राणि दर्शनानि वा सर्वाण्येव तानि सम्प्रदायत एव प्रवृत्तानीति साधनं न दुष्करम् । बुद्धिशक्तेर्विवर्द्धनाय दर्शनेषु वैविध्यमनुभवामः । यथा शिष्टैराहारायापि

परम्परा काचन परिपाल्यते—इदमेव भक्षणीयं नेदमिति, तथैव बुद्धेराहाराय सम्प्रदायः परिरक्ष्यते। अविच्छिन्नशिष्याचार्यसम्बन्धेन विद्याग्रहणमेव सम्प्रदायः कथ्यते। विद्याग्रहणसम्प्रदायेषु एकेनापरः खण्ड्यमानोऽपि स्वसम्प्रदायं परित्यज्य सम्प्रदायान्तरमवलम्बितवानिति न क्वापिश्रृणुमः। एकस्सम्प्रदायः खण्डित इति व्यवहारोऽध्ययनाध्यापनधाराविच्छेदमेवावद्योतयति। अतः सर्वेषां मूलमेकमवधार्य तेषां समन्वये दृष्टिमादध्यादिति पन्था एष्टव्यः। तस्य तस्य दर्शनस्य निरूपणीयविषयभेदे सत्यपि तुरीयपुरुषार्थप्राप्त्युपायप्रदर्शने पर्यवसानं तावत्तुल्यं समेषां दर्शनानाम्। तुरीयपुरुषार्थप्राप्त्यनन्तरं सर्वस्समान एव। मुक्तेषु न कश्चन तरतमभावः, नाप्युच्चनीचभावः।

मुक्तिशब्दो मोक्षशब्दो वा साकाङ्क्षः—कस्मादिति। तत्पूरकतया वक्तव्यं भवति—संसारबन्धादिति। निगडे हि निर्ज्ञाते निगडितस्य मोक्षाय यत्नः कर्तव्यो भवति। संसारे च वयमात्मनो बद्धत्वेन निगडितत्वेन वा नानुभवामः। शृङ्खलया गजो वाश्वो वा यथा बद्धो भवति न तथा वयं संसारेणात्मनो बद्धानवगच्छामः। पुनः पुनर्जनित्वा स्वैरं विचरामः, प्राप्ते समये मृयामहे। शरीरिणां मरणं प्रकृतिः, एवं विजानन् मानवः कथमात्मानं बद्धं जानीयात्? अहं बद्ध इति ज्ञाने सति खलु तस्मादात्मनो मोचने प्रवृत्तिरुदियात्। कोऽयं बन्धः, कथं स बध्नाति, किं विनैव हेतुना स मां बध्नाति, यदि सहेतुको बन्धः तर्हि स हेतुः कः? हेतोर्बन्धनप्रकारः कः, बन्धनहेतुभूतस्य त्यागेऽधः पतनम्, तस्य परिग्रहे च संसारतरणं दुष्करम्। उभयथापि प्रवृत्तानां वेदवचसां कथं समन्वयः, इत्यादीनां सहस्रशः प्रश्नानां समाधानाय प्रवृत्तं गीताशास्त्रम्। दैवं पुरुषकारश्चेति द्वयं सविशेषं प्रतिपादितं गीताशास्त्रे। तत्र दैवस्य प्राबल्ये पुरुषकार उपसर्जनम्, पुरुषकारस्य प्राबल्ये दैवमुपसर्जनम्, शब्दस्य व्यञ्जकत्वेऽर्थस्योपसर्जनत्वम् अर्थस्य च व्यञ्जकत्वे शब्दस्योपसर्जनत्वं यथा। क्वचिच्च समं प्राधान्यम्। एवमादीनामुदाहरणान्यनन्तानि सन्ति गीतासु। विरुद्धान्यपीमानि अधिकारिभेदेन नीतानि भगवत्पादैः। विरोधे प्रसक्ते तत्परिहाराय मानवश्चेष्टते, न तु विरुद्धार्थं प्रतिपादकमिदं शास्त्रमिति द्राक् प्रब्रूयादिति भाष्यकाराणामुद्यमः। विरोधपरिहारायैवोपक्रमादीनि लिङ्गानि शास्त्रेषु परिगणितानि। तान्यादाय सुन्दरो विरोधपरिहारप्रकारस्तत्र तत्र भाष्यकारैः प्रदर्शितः। शरीरेन्द्रियमनोबुद्ध्यहङ्कारातिरिक्तात्मास्तित्वे सन्दिहानाः सौगता आक्षिपन्ति—'त्यज्यतामेषो मूर्धाभिषिक्तः प्रथमो मोह आत्मग्रहो नाम। तन्निवृत्तौ आत्मीयग्रहोऽपि विरंस्यति।



अहमेव नास्ति मम कुतः

'यतस्तो वास्तु भयं यद्यहं नाम किञ्चन ।
अहमेव न किञ्चिच्चेद् भयं कस्य भविष्यति ॥'

इति । नूनमासूक्तिषु वैराग्यं विषयवैमुख्यञ्च प्रस्फुरतीव । आत्मास्तित्वप्रयुक्त एवात्मीयग्रहो भवति, आत्मीयग्रहश्च ममत्वाधायकः, स च दुष्टः । तत्प्रहाणायात्मग्रहः प्रयोजकीभूतस्त्यज्यताम्, स्वयमेवात्मीयग्रहो विरंस्यति इति प्रश्नो मधुर इव प्रतिभाति । प्रश्नमिमं साधु समाधत्ते गीताशास्त्रं तद्भाष्यञ्च । आवासाय कल्पितेषु गृहेषु शयनायोपयुज्यमानासु खट्वासु शय्यासु च वज्रदशनानामुन्दुराणां रक्तबीजानां मत्कुणानाञ्च बाधा वर्तत इति न कश्चन प्रेक्षावान् गृहान् खट्वाः शय्याश्च दहेत् । सत्यं ममत्वग्रहो बन्धकः, किन्तु स एव कण्टकोद्धरणन्यायेन बन्धनान्मोचकोऽपि भवितुमर्हति—यदि च स सर्वत्र भवेत् । ऐकात्म्यपक्षे वा नानात्मपक्षे वा आत्मीयग्रहप्रहाणायानेके प्रदर्शिता उपायाः गीतासु तद्भाष्ये च । एतदर्थमात्मनो हननं न समुचितम् इति स्पष्टं गीताध्येतॄणाम् । किमिदं जगत् ? कस्मादिदं प्रावर्तिष्ट ? अत्र जनिमतो मानवस्य कीदृशो व्यवहारः ? दैवं किम् ? पुरुषकारः कः ? स कदा फलति ? कर्मणामाचरणेन भक्तेः ज्ञानस्य च किं तत्प्रतिबन्धकम् ? भक्तिः का ? ज्ञानञ्च कीदृशम् ? ज्ञानभक्त्योः किं वैलक्षण्यम् ? कर्मज्ञानयोः कीदृशस्सम्बन्धः ? अर्जुनं निमित्तीकृत्य प्रवृत्तास्वपि गीतासु तटस्थानामस्माकं कथं ता उपयुज्यन्ते ? पापमिति पुण्यमिति च विवेकं कथं लभन्तां मानवाः ? गुरोरपि द्रोणाचार्यस्य पितामहस्यापि भीष्माचार्यस्य वधेनार्जुनः कथं न लिप्यते पापेन ? हिंसा का ? का चाहिंसा ? इत्यादीनां सहस्रस्य प्रश्नानां समाधानं गीताध्ययनेन लब्धुं शक्यम् । दुरुद्धरेण रोगेण ग्रस्तस्य मानवमात्रस्य महदौषधं गीताशास्त्रम् । निखिलवेदान्तानां सारोऽयं गीताग्रन्थः । निखिलधर्माणां पिण्डीभूतं हैय्यङ्गवीनं गीताशास्त्रम् । पुण्यपुञ्जोऽयं ग्रन्थः । गाढेऽन्धतमसि विचरतां मानवानां प्रकाशप्रदाता ग्रन्थमणिरयम् । सकलमोहनिवर्तनेन मसृणस्य पथः प्रदर्शकोऽयम् । आत्मबलसञ्चयस्य महान् खनिरयम् । व्यावहारिके जगति सर्वत्र समत्वदृष्टिनिक्षेपस्योपदेष्टायम् । चिन्तनाशक्तेः परिवर्द्धकं परिपोषकञ्चेदं गीताप्रतिपाद्यं तत्त्वम् । अशान्तिप्रवाहस्य सेतुरयं गीताग्रन्थः । समाजे जनताया भ्रातृभावेन सौहार्देन च वर्तितुमुपायोपदेशकोऽयं गीताग्रन्थः । मतान्तरावलम्बिभिरपि गीतागतं तत्त्वं विमृशद्भिः स्वस्वभावयानूद्य गीतारसः पीयते ।

अनुत्तमस्यास्य ग्रन्थस्य सर्वोपनिषदां सारभूतस्य भाष्यतद्व्याख्योपव्याख्याः सन्ति सङ्ख्यातीताः। प्रान्तीयभाषाभिर्विदेशीयभाषाभिश्चानूदितोऽयं विश्वस्मिन् जगति शान्तिदूतत्वेन परिगण्यते। अनारतं सांसारिकदुःखैरभिभूतानां शान्तिप्रदानायेदं शास्त्रं सुमहत्साधनमिति विदेशीया अपि मुक्तकण्ठं ब्रुवते।

तमिमं ग्रन्थमवलम्ब्य डा० श्री सी०आर० स्वामिनाथार्यः सुगमं कञ्चन निबन्धमनतिविस्तृतं विरचय्य गीतावाङ्मयं पर्यपूपुषदिति महतः प्रमोदस्य विषयः। स्वीये गीताभाष्यविवेचनाख्ये निबन्धे श्रीस्वामिनाथार्यः सारगर्भितमतिगभीरञ्च भगवत्पादभाष्यं विमृशन् भाष्यकाराणां हृदयं प्रविश्य पदार्थान् विशदयति। साकं भगवत्पादाशयविवेचनेन मतान्तरेषु श्रीरामानुजाचार्यप्रभृतिभिः स्वीय आशयस्तत्र कथमाविष्कृत इत्यादि प्रदर्शयति। स्थान इदं प्रदर्शनं विमर्शकानां महदुपकारकमिति मे प्रतिभाति। मनसश्शान्तये सर्वमतसिद्धसिद्धान्ताभिज्ञत्वमावश्यकम् यावत्परेषां सिद्धान्तान् यथायथं नावगच्छामः, तावन्न निश्चेतुं शक्नुमः—यदिदं तत्त्वमीदृशमेव, अत्रैव युक्तयः प्रबला विद्यन्ते, प्रमाणानि चाखण्ड्यानि अस्मिन्नेवार्थे आनुकूल्यमावहन्ति, अयमेव तात्त्विकोऽर्थ एष्टव्य इति। अतो मतान्तरसिद्धा अप्यर्था अवगन्तव्या इत्यवधार्य स्वामिनाथार्यस्तत्र तत्र विवादग्रस्तेषु स्थलेषु मध्वरामानुजाचार्याद्यभिप्रेतान् विषयानपि प्रदर्शयतीति निबन्धस्यास्योपादेयता। मनसश्शान्त्यर्थं सर्वाणि दर्शनानि शास्त्राणि च प्रवृत्तानीति प्रागवोचम्। शान्तिश्च 'य एव सर्वशास्त्रज्ञस्तस्य शान्तं मनस्सदा' इति वैयासिकवचनेन सर्वदर्शनसिद्धान्तेष्ववगतेष्वेव भवितुमर्हति। अयमेवाभिसन्धिर्निबन्धरचयितुः। विवादग्रस्ते विषये परैः किमभिप्रेयत इति ज्ञात्वैव खलु औचित्यानौचित्यविवेकः प्रवर्तेत। तज्ज्ञानं प्रति तत्र तत्र तन्निरूपणमावश्यकम्। तदनेन भाष्यकाराशयोऽधिगतो भवेत्। तेन च भाष्यविवेचनप्रयासस्सफलस्स्यात् इति निबन्धुरभिप्रायः।

अस्मिन्निबन्धे प्रामाण्यविचारः, गीताया मोक्षशास्त्रत्वम्, द्वितीयाध्यायविचारः, कर्मविचारः, योगविचारः, क्षेत्रक्षेत्रज्ञविचारः, मोक्षविचारः, उपसंहार इति अष्टपरिच्छेदाः कल्पिता निबन्धा। अन्ते चानुसन्धातॄणामत्यन्तमुपयोगि परिशिष्टं समायोजितम्, यत्र च गीतागतपदानां मतत्रयेण विवरणं कीदृशमिति तत्तद् भाष्यानुसारेण प्रदर्शितं श्रीस्वामिनाथार्येण। इदं सामयिकं छात्रोपयोगि चेति मन्यामहे। यथा—'नियतं कुरु कर्म त्वम्' इत्यत्र 'नियत'शब्दस्य भगवत्पादाशयं विशदीकुर्वन् मतान्तरे च नियतशब्दनयनं प्रदर्शयन् निबन्धप्रणेता विदुषां मनो रञ्जयति। एवं 'नासतो विद्यते भावः' इत्यत्रासत्पदस्य मतभेदेन विभिन्नार्थकत्वम्,

'शाश्वतोऽयं पुराणः' इत्यत्र 'पुराण'पदस्य नानार्थकत्वम् इत्येवं बहुषु स्थलेषु पदानां मतत्रयेण तद्भिन्नव्याख्यानुसारेण च येऽर्थाः तत्प्रदर्शनं परिशिष्टे निवेशयन् निबन्धस्योपादेयतमत्वमकरोत् स्वामिनाथार्य इति मनः प्रसीदति। लक्ष्मणपुरस्थाखिलभारतीय-संस्कृत-परिषद्द्वाराऽस्य निबन्धस्य प्रकाशनं स्थाने सञ्जातमिति परिषत्सञ्चालकेभ्यो धन्यवादान् वितरामि। निबन्धस्यास्य सर्वतः प्रचारं कामयमानः निबन्धप्रणेतुः श्रीस्वामिनाथार्यस्यैवमादिषु कार्येषु प्रवृत्ति-विशेषसिद्धये भगवन्तमुमारमणं प्रार्थयते।

पट्टाभिरामशास्त्री

# उपोद्घातः

श्रीगुरुगणेशाभ्यां नमः ।।

हैय्यङ्गवीनकणमङ्गुलिमध्यसक्तं
पश्यन् लिहन्नपमृजन्निजचोरचिह्नम् ।
सृष्ट्यादिकं प्रकृतिकृत्यमहं न कर्त्ते-
त्युद्बोधयन्तमनिशं प्रणुमो मुकुन्दम् ।।

भारतीयदार्शनिकग्रन्थेषु भगवद्गीताया अनितरग्रन्थसाधारणं स्थानं वरीवर्त्ति। आशङ्करभगवत्पादादाचारविन्दघोषात् नैकैश्चिन्तकैर्व्याख्यातृभिश्च गीतातात्पर्यनिर्णये प्रयत्नः कृतः, क्रियते चाद्यावधि। प्रस्थानत्रयान्तर्गतत्वात् उपनिषदां व्याससूत्राणां चाविरोधेन गीताया व्याख्यानं कर्तव्यमिति साम्प्रदायिकानामभिप्रायः। आधुनिकास्तु केचन उपनिषदां वेदान्तसूत्राणां वा परिचयं विनैव स्वतन्त्रशास्त्रत्वेन भगवद्गीतां परिगणयन्ति विवेचयन्ति च। ग्रन्थेऽस्मिन् पूर्वोक्तप्रस्थानत्रयान्तर्गतत्वमङ्गीकुर्वतां व्याख्यानान्येव तुलनात्मकाध्ययनाय स्वीकृतानि, न त्वन्यानि सम्प्रदायबाह्यानि। असाम्प्रदायिकेषु दोषबुद्धिर्नात्र कारणं, किन्त्वार्षवचनानामर्वाचीनदृष्ट्या मूल्याङ्कनं विवेचनं वा यद्यपि आपाततः समयोपयोगीव भाति, तथापि शास्त्रीयपरम्पराया विश्वसतामनधिकसङ्ख्याकानामप्यस्मादृशामवधेयतां नावहति, यावद्यथाकथञ्चिदपि शास्त्राणामध्ययनाध्यापनप्रणालिः प्राचीनसम्प्रदायानुसारेण जीवति। साम्प्रदायिकानां व्याख्यानानां मौलिकं सामञ्जस्यं कियदभूत मिथो भेदाश्च कियन्त इति निर्णेतुमस्य मन्दमतेरपि गुरुकृपाकटाक्षोपलब्धशेमुषीधिषणाऽत्र प्रयतते। गीतासम्बन्धिनामालोचनात्मकानां ग्रन्थानां लेखानां चासङ्ख्येयत्वात् विवेचनेऽस्मिन् कतिपया स्युर्विषया ये कैश्चिद्विपश्चिद्भिर्निरूपितपूर्वाः, येषां पिष्टपेषणत्वं कृपया मर्षयन्तु वाचकाः। तादृशसन्दर्भेष्विदमपि स्मर्तव्यं यत्केनाप्यन्येन निरूपिता इति जानताऽपि स्वकीयत्वसिसाधयिषया न तेऽत्र समायोजिताः, परं तु तेषामाशयाना-

मुक्तपूर्वत्वमजानतैव मया तेऽत्र निरूप्यन्त इति । अतस्तेषां पूर्वसूरिणामपरिचयात्मकस्यापराधस्यापि क्षमां याचे ।

ब्रह्मीभूतानां स्वनामधन्यानां महामहोपाध्यायनूरनी अनन्तकृष्णशास्त्रिणां सम्पर्कसौभाग्यमस्य जनस्य समभूत्केनापि प्राक्तनपुण्यातिशयेन । तदानीं तैराविष्कृता आशयाः "नोट्स"रूपेण सङ्गृहीताः । तामेव विचारसरणीमनुसृत्य कृत्स्नस्य ग्रन्थस्य विवेचनं मया कृतम् । स्वर्गीयानां पोलगं श्रीरामाशास्त्रिणां, डा० शंकरार्याणां, डा० वे० राघवार्याणां, श्रीक्षेत्रेशचन्द्रचट्टोपाध्यायानां च मार्गनिर्देशस्तदा तदा मया प्राप्तः । तेभ्यो विद्वत्तल्लजेभ्यो स्वाधमर्णतां प्रणामाञ्जलिद्वारा निवेदयामि ।

राजकीयसेवाव्यग्रेण मया १९५८ तमवत्सरादारभ्य १९६६ तमवत्सरपर्यन्तं सङ्कलितानां विषयाणां लेखनीद्वारा पुस्तकाकारताप्रदाने महान् विलम्बस्समजनि । पी-एच०डी० उपाधिरवश्यमर्जनीय इति स्वसुहृद्भ्यां श्रीरामकर्णशर्ममण्डनमिश्राभ्यां प्रचोदितः तान् विषयान् सङ्कलय्य शोधप्रबन्धोऽयं दिल्लीविश्वविद्यालये समर्पित उपाधिश्च लब्धः ।

निबन्धेऽस्मिन् द्वितीयाध्यायस्य प्रतिश्लोकं भाष्याणां विवेचनं कृतं, कर्मविचाराख्ये खण्डे तृतीयाध्यायस्य चतुर्थपञ्चमाध्याययोश्च कर्ममीमांसापराणां श्लोकानां विचारश्च कृतः । योगशब्दस्य बहुत्र बहुधा प्रयुक्तत्वात् योगभेदानां मुख्यत्वगौणत्वविषये ये मतभेदास्तत्र तत्र भाष्यकारैरादृतास्तेऽपि योगविचारखण्डे विचार्यन्ते । त्रयोदशाध्यायस्य व्याख्यावसरे भाष्यकाराणां मतवैषम्यं प्रायशः परां काष्ठां गच्छतीति हेतोः तस्याध्यायस्य विशेषाध्ययनं क्षेत्रक्षेत्रज्ञविचाराख्ये खण्डे कृतम् । प्रायशस्सर्वेष्वध्यायेषु विशिष्य षष्ठाष्टादशाध्याययोः यानि मोक्षपराणि वाक्यानि सन्ति तेषां, तत्स्वरूपभेदानां च चर्चा कृता मोक्षविचाराख्ये खण्डे । अन्ते च उपसंहाररूपेण गीतायाः परमं तात्पर्यमुपक्रमोपसंहारपरामर्शादिलक्षणैः शांकरमतानुरूपमिति निर्णेतुं ग्रन्थसन्दर्भा अधिकमुपकुर्वन्तीति प्रपञ्चितम् । अद्वैतवादस्यानितरसाधारणं परमतखण्डननिरपेक्षं सर्वसमन्वयत्वमेवाऽत्र कारणम् ।

अन्ते च श्लोकक्रमेण ये ये पारिभाषिकाश्शब्दाः दार्शनिकाः पदविन्यासाश्च सन्ति येषां व्युत्पादनविषयेऽन्वयावबोधने च भाष्यकाराणामभिप्राया भिन्नास्सन्ति तादृशाश्शब्दा प्रयोगाश्च परिशिष्ठरूपेण दत्ताः, तेषां पुरतः भाष्यकाराणां वचनानि तदतिरिक्ततया इतरव्याख्यासु विशेषेण यत्किञ्चिदुक्तं तदपि सूच्यते ।

श्रीमदानन्दतीर्थभाष्ये सङ्क्षेपेण सूचितत्वात् येषु स्थलेषु तस्य भाष्यवाक्यानि नोपलभ्यन्ते तेषु श्रीराघवेन्द्रोक्ता व्युत्पत्तयः स्वीकृताः। अन्ते शङ्करानन्द-श्रीधर-वेदान्तदेशिक-वेङ्कटनाथ-पैशाचभाष्यकृदानन्दगिरि-नीलकण्ठ-वल्लभ–पुरुषोत्तम-मधुसूदनसरस्वतीनां व्याख्याभ्यः नूतनानां ग्राह्याणां भाष्यत्रयेष्वनुपलभ्य-मानानां, भाष्यवचनानां विवेचनायोपयुक्तानां च वचनानामुल्लेखः कृतः। उपोद्घातरूपेण गीताया औपनिषदत्वं ब्रह्मविद्यात्वं, सुखस्वरूपनिर्णयः, तत्प्राप्तये प्रयतमानानां वैदिकमतानां मौलिकानि तत्वानि च सङ्क्षेपेण निरूपितानि।

शोधप्रबन्धस्य पुस्तकरूपेण परिष्करणे प्रकाशने च काठिन्यं ततो विलम्बश्चाभूत्। संस्कृतपुस्तकप्रकाशका वाणिज्यसंस्थास्सर्वे मम राजकीयकार्य-क्षेत्रे प्रायशस्सुपरिचितास्सन्ति। तेनैव हेतुना ग्रन्थस्यास्य प्रकाशनेऽसमर्थोऽभव-मति कथने विरोधाभासो नूनं वर्त्तते। किन्तु तथ्यमिदमेव यद्राजकीयाधिकारिणां स्वतन्त्रता विद्याक्षेत्रेऽपि सङ्कुचिता अस्ति। अतः ग्रन्थप्रकाशनाय वाणिज्य-क्षेत्राद्बहिः काञ्चन संस्थामन्विष्य तद्द्वारा कार्यमिति निर्बन्धोऽनुभूतः। भगवत्कृपया गतवत्सरे लक्ष्मणपुरीस्था अखिलभारतीयसंस्कृतपरिषन्नाम्नी संस्था कृत्यमिदं निर्वोढुमङ्गीचकार। परिषदे स्वकृतज्ञतां निवेदयामि। विशिष्य तदधिकारिभ्यां श्रीगोपालचन्द्रसिंह-डा० जे० पी० सिनहामहोदयाभ्यां ममाध-मर्णता निवेद्यते ययोरकैतवसौहार्देन प्रूफपठनादिकार्येषु नितरामुपकृतोऽस्मि। परिषदियं स्वायत्तसंस्कृतसंस्था; अतः प्रथमं कार्गलक्रयणेऽप्यसमर्था आसीत्। तदानीं कार्गलं दत्त्वा मह्यमुपकृतवद्भ्यः शेषशायिपेप्परबोर्ड-अधिकृतेभ्यः विशिष्य श्रीविश्वनाथार्याय श्रीनटराजशर्मणे च स्वकीयान् धन्यवादान् विज्ञापयामि।

ग्रन्थस्यास्य प्रास्ताविकं रचयन् मां विशेषेणानुगृहीतवद्भ्यः पद्मभूषणेत्यादि-विरुदावलीभिरलङ्कृतेभ्यः पं० पट्टाभिरामशास्त्रिमहोदयेभ्यः कृतज्ञतां निवेदयितुं वाचालापि मदीया वाणी स्वदौर्बल्यमेवाविष्करोति। प्रास्ताविकव्याजेनाहेतुकीं कृपाधारां वर्षयन् चातकायितममुं जनमाशीर्भिरेधयतां गुरुकल्पानां चरणनलिनयो-र्नमोवाकं विज्ञाप्य विरमति।

**स्वामिनाथः, सी० आर०**

## परिशिष्टप्रयुक्तसङ्केताः

| | |
|---|---|
| अ० त० | अमृततरङ्गिणी—पुरुषोत्तमकृता व्याख्या |
| गी० वि० | गीतार्थविवृतिः—श्रीराघवेन्द्रकृता |
| गू० दी० | गूढार्थदीपिका—मधुसूदनसरस्वतीप्रणीता |
| त० दी० | तत्वदीपिका—वल्लभाचार्यभाष्यम् |
| ता० बो० | गीतातात्पर्यबोधिनी—शङ्करानन्दकृता |
| पै० भा० | पैशाचभाष्यम्—हनुमत्कृतं गीताभाष्यम् |
| ब्र० गि० | ब्रह्मानन्दगिरिः—वेङ्कटनाथकृता गीताव्याख्या |
| भा० दी० | भाष्योत्कर्षदीपिका—धनपतिकृता |
| भा० भा० दी० | भारतभावदीपः—नीलकण्ठकृतः |
| मा० भा० | भगवद्गीता—माध्वभाष्यम् |
| रा० भा० | भगवद्गीता—रामानुजभाष्यम् |
| शा० भा० | भगवद्गीता—शाङ्करभाष्यम् |
| सु० बो० | सुबोधिनी—गीतायाः श्रीधरीव्याख्या |

# विषयानुक्रमणिका

# प्रथमः परिच्छेदः

## प्रामाण्यविचारः

मोक्षरूपं सुखमेव सर्वोत्तमं सुखमिति परिगण्यते। जननमरणसंसारादात्यन्तिकंविमोचनमेव मोक्ष इत्युच्यते। मलमूत्रभूयिष्ठे जननीगर्भे वासः, ततोऽवाक्शिरःपतनं, बाल्याद्यवस्थासु रोगपीडाक्षुत्पिपासादिक्लेशः, जरादौर्बल्यबन्धुविरहादिदुःखपरम्परा, अन्ते मृत्युरिति भयदुःखभूयिष्ठात्संसारात् विमोचनं नामात्यन्तिकी दुःखनिवृत्तिरेव नित्यनिरतिशयानन्दापरपर्यायभूतेन मोक्षशब्देन निगद्यते श्रुतिस्मृतिपुराणादिषु। तस्य मोक्षस्य प्राप्त्यै ब्रह्मात्माभेदज्ञानमेव मुख्यं साधनं, निष्कामकर्मयोगश्चामुख्यं कारणमिति शङ्करभगवत्पादः। अनन्या भगवद्विषयिणी भक्तिरिति श्रीरामानुजः श्रीमदानन्दतीर्थश्चाभिप्रेतः। त्रयोऽप्याचार्याः श्रुतिवचनमेव स्वप्रमाणत्वेन स्वीकुर्वन्ति। श्रुतिवचनानां तात्पर्यनिर्णये परं तेषां मतभेदा वर्तन्ते।

महात्मभिस्तपोनिष्ठैरवगन्तुं शक्यो वेदान्तेषु प्रतिपादितो स्मृतिपुराणाद्यैरुपबृंहितो मोक्षमार्गोऽस्मदादिभिर्मन्दमतिभिर्दुर्ग्राह्यो भवेत्कालेऽस्मिन् कलाविति मत्वा करुणावरुणालयेन भगवता कृष्णावतारकाले द्वापरयुगान्ते पार्थं निमित्तीकृत्य सर्वजनसुग्राह्यया रीत्या गीतोपदेशरूपेण मोक्षमार्गः प्रतिपादितः। तस्य गीताशास्त्रस्य लोकोपयोगितां मनसि निधाय वेदान्तदर्शनप्रवर्त्तकास्सर्वेऽप्याचार्याः स्वसिद्धान्तानुरूपेण तस्य व्याख्यानानि रचितवन्तः। तेषु सत्यपि वैमत्ये काचिन्मौलिकी समानता विद्यत एव। वेदप्रामाण्यं सर्वैरङ्गीक्रियते। कर्मभक्तिज्ञानानां निःश्रेयसोपयोगित्वं चाङ्गीकृतम्। तेषां पौर्वापर्यनिर्णये वैविध्यमस्ति। आत्मानात्मनोः आत्मेश्वरयोश्च सम्बन्धे मोक्षस्वरूपे च तेषां मिथो भेदोऽपि दरीदृश्यते। किन्तु लक्ष्यमेकमेव।

वेदस्य सर्वोत्तमप्रामाण्ये स्वीकृते तन्मार्गे वर्त्तमानानां मतानां कदाप्य-प्रामाण्यं न सम्भवति। वेदमूलका ये वादाः आचार्यैः स्वस्वमतोद्बलकत्वेन स्वीकृतास्तेषामन्यतमस्याप्यप्रामाण्यं वेदप्रमाणबाधकं स्यात्। अतः "परस्परं विवादे तु वयं पञ्च शतं च ते। परैः परिभवे प्राप्ते वयं पञ्चोत्तरं शत"मिति महाभारतोक्तरीत्या, मिथो विवदमाना अपि शाङ्कररामानुजीयमाध्वादिमतानु-यायिनः श्रुतिप्रतिष्ठापरा इति हेतोः, वैदिकमार्गबाह्यानां पुरतः अन्योन्यस्यापि अप्रामाण्यख्यापनेन स्वाधारभूतस्य वेदस्यैव प्रामाण्यं खण्डयन्तीति मनसि निधाय व्यवहर्तुमर्हन्ति। अधिकारिभेदेनावस्थाभेदेन वा तेषां स्वीकार्यत्वं संकुचितं विकसितं वा भवतु; किन्तु सर्वथा अस्वीकार्यं न कदाऽपि सम्भवति। सूत-संहितायां यज्ञवैभवखण्डे उक्तं यथा—

"अधिकारिविभेदेन नैकस्यैव सदा द्विजाः।
तर्कैरेते हि मार्गास्तु न हन्तव्या मनीषिभिः॥

× × ×

येन येन प्रकारेण जनैरेभिरुपासितः।
तत्तन्मार्गानुगुण्येन साधकत्वं ह्युपैति सः॥
तत्प्रसादात्क्रमान् मार्गान् विशिष्टानेति मानवः॥

× × ×

मार्गाणां ये विरुद्धांशाः वेदान्तेन विचक्षणाः।
तेऽपि मन्दमतीनां हि महामोहावृतात्मनाम्॥
वाञ्छा मात्रानुगुण्येन प्रवृत्ता न यथार्थतः।"[१] इति

अमुमेवार्थं विशदयन् पुरुषार्थप्रबोधाख्ये निजग्रन्थे ब्रह्मानन्दभारत्या उक्तम्—

"परस्परविरुद्धत्वेऽप्येतेषां सर्ववर्त्मनाम्
पुंविशेषान् समुद्दिश्य प्रामाण्यं केन वार्यते॥" इति॥

आचारव्यवहारधर्मभेदान् तत्तद्वर्णानां तत्तदाश्रमाणां चाधिकारिकतानुसारं विभज्य, तादृशभेदेषु सत्स्वपि स्वपरभेदबुद्धिं परित्यज्य वसुधैव कुटुम्बकमिति

———————

१. सूतसंहिता—यज्ञवैभवखण्डः—मार्गप्रामाण्यवर्णनम्—अध्याय—१२ : श्लोक ६, ११, १२, २४।

वर्तनं खल्वस्माकं सनातनधर्मानुवर्तिनी परम्परा । अतः तत्तदधिकारिभेदोद्दिष्टाः आचार्यैरुपदिष्टा मार्गाः सर्वेऽपि सन्मार्गा इति भावना परम्परागतधर्मानुरूपा स्यात् ।

तत्तदाचार्योपदिष्टानां मौलिकानां तत्त्वानां संग्रहोऽत्र प्रथमं दीयते—

अद्वैतमते ब्रह्मतत्त्वमेकमेव सत्यम् । द्वितीयं तदतिरिक्तं किञ्चिन्नास्ति । ब्रह्मणः अभिन्ननिमित्तोपादनकारणत्वं जगतः स्वीक्रियते । अर्थात् निर्गुणं निराकारं सच्चिदानन्दघनं स्वप्रकाशकं ब्रह्म जीवत्वेन ईश्वरत्वेन सकलप्रपञ्चाकारत्वेन च प्रतिभासते । तच्च प्रतिभासनमनादिमायाकार्यम् । परमार्थदशायां प्रतीयमानस्य निखिलस्य प्रपञ्चस्य मिथ्यात्वं बोधविषयमायाति । किन्तु व्यावहारिकदशायां जीवः, ईश्वरः, माया मायाविलासः प्रपञ्चः इति सर्वं सत्यमेव । तेषामुत्पत्तिः कदा समभूदिति निर्णेतुमशक्यत्वात् तेषामनादित्वमभ्युपगन्तव्यं भवति । मायाया द्विविधा शक्तिर्वर्त्तते; एकया समस्तं वस्तुजातमाविष्करोति, प्रकाशयति । सा विक्षेपशक्तिरिति व्यपदिश्यते । इतरा त्वावरणशक्तिः यया आव्रियते वस्तु; तस्याः स्वभावोऽप्यगोचरतां याति । विक्षेपशक्तेरेवापरं नाम माया । आवरणशक्तिरविद्येति निगद्यते । शुद्धचैतन्यं ब्रह्म मायासंवलितावस्थायामीश्वर इत्युच्यते, अविद्यासम्बद्धावस्थायां जीव इति व्यवह्रियते । सम्बन्धावपीमौ अनादी पूर्वोक्तरीत्या । विक्षेपशक्तिविशिष्टो ईश्वरः सर्वज्ञः, आवरणशक्त्यधीनो जीवः किञ्चिज्ज्ञः। किञ्चिज्ज्ञत्वमेव जीवस्य बद्धत्वे निदानम् । तस्माद्बन्धान्मोक्षाय, वेदोक्तानां नित्यनैमित्यिकानां कर्मणामीश्वरार्पणबुद्ध्या अनुष्ठानेन भगवद्भक्त्या च चित्तशुद्धिं सम्पाद्य सद्गुरुमुखात् 'तत्त्वमसी'त्यादिमहावाक्यार्थभूतजीवेश्वराभेदरूपमुपदेशं लब्ध्वा, तादृशोपदेशस्य शश्वच्चिन्तनरूपमनेन अनवरतचिन्तनरूपनिदिध्यासेन च ज्ञाननिष्ठा प्राप्तव्या । तदनन्तरं 'अहं ब्रह्मास्मी'ति महावाक्यस्य तात्पर्यभूतो जीवेश्वराभेदः जीवब्रह्माभेदश्चानुभवगोचरो भवति तेनापरोक्षज्ञानेन प्रपञ्चवासनाक्षयः प्रारब्धेतरकर्मनाशश्च सम्भवति । 'ब्रह्मविद् ब्रह्मैव भवती'त्युक्तरीत्या स्वं स्वरूपानन्दात्मकं ब्रह्मभावं प्राप्नोति यदेव मुक्तिरित्यभिधीयते । जीवन्मुक्तिर्विदेहमुक्तिरिति द्विप्रकारा मुक्तिः । 'अहं ब्रह्मास्मी'त्यनुभवबलेन प्रारब्धेतरेषां सर्वकर्मणां तत्कारणभूताया अविद्यायाश्च नाशानन्तरं, वर्तमानस्य शरीरस्य हेतुभूतं प्रारब्धं कर्म यावदवसीयते तावत् सर्वत्र निर्लिप्तोऽपि परेषामनिर्लिप्तमेवात्मानं दर्शयन् यो वर्त्तते स एव जीवन्मुक्त इत्युच्यते । स्थूलसूक्ष्मकारणसंज्ञकानां त्रिविधानामपि देहानां नाशानन्तरं यथा वा घटे विद्यमान आकाशः उपाधिरूपघटे नष्टे महाकाशे लीनो भवति तद्वत्, ब्रह्मभावेन वर्तनमेव विदेह-

मुक्तिः। उभाभ्यामतिरिक्ता क्रममुक्तिरिति काचनाङ्गीक्रियते। तत्र सगुणब्रह्मरूपमीश्वरमुपास्य पञ्चाग्निप्रभृतिभिर्विद्याभिः तदनुग्रहं लब्ध्वा, शरीरनाशोत्तरक्षणमेव अर्चिरादिमार्गेण सत्यलोकं गत्वा, तत्र चतुर्मुखब्रह्मणः सकाशात् तत्त्वोपदेशं प्राप्य विदेहकैवल्यावाप्तिरेव क्रममुक्तिरित्युच्यते।

'तत्त्वमसि' इति महावाक्ये तत्पदार्थः सर्वज्ञत्वविशिष्ट ईश्वरः, त्वंपदार्थः किञ्चिज्ज्ञत्वविशिष्टो जीवः। असि शब्दस्तयोरैक्यं च बोधयति। जीवभूतस्त्वमेव ईश्वर इति तात्पर्यार्थः। जीवस्य अविद्यारूपोपाधेः ईश्वरस्य मायारूपोपाधेश्च निरसनेन एकमेवाखण्डाकारं ब्रह्म प्रतीयते। इदमेव शांकरं मतम्।

श्रीमद्रामानुजमते ईश्वरो जीवः जडोऽयं प्रपञ्चः इत्येतेषां पृथगस्तित्वं सत्तात्वं चाऽभ्युपगम्यते। ईश्वरः सर्वज्ञत्वसत्यसङ्कल्पत्वाद्यनन्तकल्याणगुणविशिष्टः स्वतन्त्रः, जीवजडात्मकप्रपञ्चस्यान्तर्यामी तेषां शरीरी, नियामकः, शेषी च। ईश्वरस्य जीवस्य च पृथक्तया शेषित्वं, जीवस्य प्रपञ्चस्य च पृथक्तया शेषत्वं च वर्त्तते। देहेन्द्रियादयः शब्दादिविषयाश्च जीवस्य शेषिणः भोग्यरूपेण वर्त्तन्त इति हेतोः शेषसंज्ञिताः। परमात्मात एव शेषी यतस्तस्य चेतना जीवाः, तद्व्यतिरिक्तः अचेतनः प्रपञ्चश्च शेषभूताः। ईश्वरस्य शेषभूतः जीवः तस्यांशः, तच्छरीरभूतः ज्ञानगुणयुक्तः, अणुपरिमाणवान्। अनाद्ययाऽविद्यया जीवस्य पुरुषस्य ज्ञानगुणग्लानिर्भवति तेन च स संसरति। अतः पुरुषाः द्विप्रकाराः अचिन्मात्रावस्थाः विशुद्धावस्थाश्च। प्रकृतिपुरुषौ विविक्तावस्थायां संसृष्टावस्थायामपि सत्यौ। तयोः संसर्गवियोगौ गुणसंगासंगाभ्यां भवतः। गुणसंग एव पुरुषे ज्ञानगुणग्लानिमुत्पादयति। भगवच्छेषभूताभ्यां चिदचिद्वस्तुभ्यां विशिष्टः पुरुषोत्तमः शेषी अव्ययः, सर्वव्यापी, भर्त्ता स्वामी च। कर्माणि सत्वरजस्तमोगुणकार्याणि नात्मकृतानि। तेऽपि गुणाः पुरुषस्य जन्मान्तरीयकर्मफलानुरूपेण भगवतैव प्रेरिता भवन्ति कर्मणि। आत्यन्तिकदुःखनिवृत्तिरूपो मोक्षः पुरुषस्य भगवत्कृपयैव लभ्यते, सा च कृपा भक्तियोगैकप्राप्या। ज्ञानकर्मयोगाभ्यां प्रापणीयो भक्तियोग एव मोक्षहेतुः। स्वधर्मानुष्ठानं ज्ञानं वैराग्यं च भक्तिसाधनान्येव। वेदविहितानां नित्यनैमित्तिककाम्यकर्मणां फलाभिसन्धिं विना ईश्वराराधनारूपेणानुष्ठानं कर्मयोग इत्युच्यते। अनेन जीवेषु यत्कर्तृत्वं तदपि जीवस्य जन्मान्तरवासनानुगुणं भगवत्प्रेरणयैवेति तदीयत्वभावेन, तदाराधकोऽहं तद्भृत्यः तन्निर्देशानुसारेण तस्य तुष्ट्यै करोमीति भावेन कर्मकरणमेव कर्मयोग इति सिद्ध्यति। भगवतः सर्वकर्तृत्वावगमात् फलत्यागाच्च ईदृशे कर्मयोगेऽपि कर्तृत्वानुसन्धानरूपो ज्ञानांशो वर्त्तते। अत एव तन्मार्गेण प्रकृतिबन्धान्मोक्षः शीघ्रतरं भवति।

वैराग्यं नाम परमात्मव्यतिरिक्तेषु सर्वेषु विरक्तिः, कर्मयोगाङ्गभूतम्। ज्ञानं त्वात्मयाथार्थ्यज्ञानम्। देहेन्द्रियादिव्यतिरिक्तः आत्मा भगवच्छरीरभूतः, तस्य कर्तृत्वादिकमहं ममेत्यभिमानजन्यं, स केवलं ज्ञानाकार एवेति यो जानाति स प्रकृतिविमुक्तात्मभावं व्रजति। तस्यामवस्थायामात्मनः शेषिभूतस्य परमात्मनो दर्शनाय या उत्कटा त्वरा उदेति सैव परा भक्तिरित्युच्यते। भगवद्याथार्थ्यज्ञाने माया तिरस्करिणीरूपेण वर्त्तते। कर्मज्ञानयोगाभ्यां देहात्माभिमानरूपाया अविद्याया नाशेऽपि भगवद्याथार्थ्यज्ञानोपरोधिनी माया न नश्यति। सा पुरुषप्रयत्नेन न नाश्या। 'मम माया दुरत्यया'[1] इत्युक्तत्वात् तस्या भगवदधीनत्वात् तस्यैव कृपया सा व्यपोह्या। सा कृपा सर्वात्मभावेन तत्प्रपत्त्या लब्धुं शक्यते। परभक्त्याः परमकाष्ठा प्रपत्तिरथवा शरणागतिः। ज्ञानवैराग्यसम्पन्नानां जीवानां प्रपत्तिसौकर्यार्थमेव भगवान् करुणया रामकृष्णादिरूपेणार्चादिरूपेण चावतारान् गृह्णाति। एतेष्ववतारेषु तस्य परमेश्वरत्वाव्ययत्वसर्वज्ञत्वादयो गुणा अक्षुण्णा एव वर्त्तन्ते। जीवस्य जन्मग्रहणाद्यथा ज्ञानग्लानिर्भवति तथा ईश्वरस्य ज्ञानसंकोचो न भवत्यवतारावस्थायाम्। पुण्यपापफलैः नियतजन्मग्रहणं जीवस्य; भगवतस्तु स्वेच्छया अवतारः। स्वकर्मविपाककाले जीवो जन्माप्नोति; धर्मग्लानिरधर्मोत्थानं च यदा भवति तदा स्वयमवतरतीश्वरः। भगवदवतारकर्मफलं सुखदुःखमिश्रं न भवति। प्रकृतिविमुक्तात्मभावं गताः जीवाः विकसितज्ञानगुणाः शरणागतिधर्मेण गुणातीतावस्थां प्राप्य भगवद्ध्यानादिभिर्वैकुण्ठे भगवच्छरीरसरूपाण्यप्राकृतानि दिव्यमङ्गलशरीराणि प्राप्य भगवत्सान्निध्यकैङ्कर्याद्यानन्दमनुभवन्ति। इयमेवावस्था मुक्तिरिति व्यपदिश्यते। क्षरं नाम भगवतो बद्धविभूतिमत्ता; अक्षरं मुक्तविभूतिमत्ता; उभयोर्विजातीयः पुरुषोत्तम इति त्रयाणामपि पृथक्त्वं सत्यत्वं चाभ्युपगम्यते। अद्वैतप्रतीतिजनकानि श्रुतिवाक्यानि 'एकमेवाद्वितीयम्' इत्यादीनि परमात्मनः समानं किमपि नास्तीति वक्तुमेव प्रवृत्तानि, न तु तस्य विभूत्यंशभूतानां देवमनुष्यादिप्रपञ्चानां निषेधायेत्यवगन्तव्यम्। 'चोलनृपस्सम्राडद्वितीयः' इत्युक्ते तत्तुल्यो नृप एव वार्यते, न तु तत्पुत्रकलत्रादिपरिवारः। तत्त्वमसीति महावाक्येन सूक्ष्मचिदचिद्विशिष्टः शरीरी ईश्वरः स्थूलचिदचिद्विशिष्टः शरीरी ईश्वरश्चाभिन्नाविति प्रतिपाद्यते। अत एवाऽस्य मतस्य विशिष्टाद्वैतमिति प्रथा।

द्वैतिनां मध्वराद्धान्तानुयायिनां मते पञ्चप्रकारा भेदाः अनादिसिद्धा

---

१. गीता ८.२४

सत्याश्च स्वीकृताः । ते च जीवेश्वरभेदः, जीवपरस्परभेदः, जीवजडभेदः, जडपरस्परभेदः, जडेश्वरभेदश्चेति । जडपरस्परभेदे मृत्पाषाणकनकादीनां जडपदार्थानां मृत्पाषाणादितत्तत्स्वभाववत्वेन ज्ञानं समज्ञानमित्युच्यते । अतत्स्वभाववत्वेन ज्ञानं विपरीतज्ञानम् । जीवाश्च त्रिविधाः परिगण्यन्ते—नित्यसंसारिणः, नित्यनरकिणः, मुक्तियोग्याश्चेति । त्रिष्वप्येतेषु अवान्तरभेदास्सन्ति । जीवानामपि स्वरूपे पशुपक्ष्यादिभेदाः । मुक्तियोग्यव्यतिरिक्ता सर्वे कदाऽपि न मुच्यन्ते । मुक्तियोग्यास्तु जीवाः पशुपक्षिमृगादिस्वस्वरूपेणैव मुक्तिं प्राप्नुवन्ति । जीवस्वरूपेषु सात्विकराजसतामसभेदास्सन्ति । मुक्तियोग्याः सात्विकस्वरूपवन्तः । देवाः पितरः ऋषयः राजानः केचन मनुष्योत्तमाश्च सात्त्विकजीवाः । तत्तत्पूर्वजन्मानुष्ठितैः पापकर्मभिः सात्त्विका अपि जीवाः राजसतामसजन्मभाजो भवेयुः । तथापि तेषां स्वरूपाणां सत्त्वप्रधानतया सात्त्विकवृत्तिरेव तेषूद्बुद्धा भवति । 'बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते''[1] इति वाक्यानुसारेण ते बहुभिर्जन्मभिः क्रमशः ज्ञानं लब्ध्वा अन्ते मोक्षमेव प्राप्नुवन्ति ।

नित्यनरकयोग्यानां जीवानां स्वरूपं तामसजीवस्वरूपम् । भगवद्द्वेषिणः, वेदशास्त्रेष्वविश्वासं भजन्तः, पापकृत्यनिरता एव नित्यनरकयोग्याः । बहुजन्मानुष्ठितैः पापकर्मभिर्भगवद्दूषणेन च नित्यनरकं गच्छन्ति । तेषां पुनर्जन्मलाभो नास्ति । उपर्युक्तसात्विकतामसजीवाभ्यां विलक्षणाः राजसस्वरूपाः जीवास्ते भवन्ति ये इह लोके अनुष्ठितानां पापपुण्यानां फलानुगुणं स्वर्गादिफलमनुभूय 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति'[2] इत्युक्तरीत्या पुनरत्रैव जन्म लभन्ते । पुनरपि पापपुण्ये सम्पाद्य पुनस्तत्फलं भुङ्क्त्वा प्रतिनिवर्त्तन्ते । तेषां मोक्षो नास्ति नापि नित्यनरकम् । अत एव ते नित्यसंसारिण इत्युच्यन्ते । सत्त्वस्वरूपैः ज्ञानलाभात् मुक्तैरपि अनुभूयमाने आनन्दे स्वस्वोपासनानुगुणं तारतम्यमङ्गीक्रियते ।

तत्त्वमसि महावाक्यस्य त्वमीश्वरसमानरूपोऽसि इत्येवार्थः । अन्यत्र प्रायशः विशिष्टाद्वैतमतमेवानुसरन्ति द्वैतिनः ।

---

१. सैव ७.१९

२. सैव ९.२१

# द्वितीयः परिच्छेदः

## भगवद्गीतायाः मोक्षशास्त्रत्वम्

उपनिषच्छब्देन वेदेषु दार्शनिकाः ये भागाः संहिताब्राह्मणारण्यकानाम-वसानेषु दृश्यन्ते ते एव प्रायशः विवक्ष्यन्ते । तेषां कर्मकाण्डेभ्यो व्यवधानार्थं तत्र तत्र "इत्युपनिषद्" इति सूच्यन्ते ते भागाः । उप नि इत्युपसर्गद्वयघटितस्य सद् धातोः 'क्विप्' प्रत्यययोजनेन शब्दोऽयं व्युत्पाद्यते । अर्थात् गुरोर्निकट उपविश्य अतिरहस्यतया यदधीतं तदेव उपनिषद् । आत्मविचार एव प्रसिद्धेषु उपनिषत्सु मुख्यतया क्रियते । जीवस्य लक्षणं, तस्य शरीरेन्द्रियादिभिः सम्बन्धः, शरीराति-रिक्तस्य आत्मनो विवेचनम्, तस्य ईश्वरेण सम्बन्धः, संसारस्य दुःखहेतुत्वं, तस्मात् मोक्षस्य आवश्यकता, तत्र कर्मभक्तिज्ञानाद्युपायानां विचारः, मनोबुद्ध्-यहंकारादीनां परस्परसम्बन्धः, बन्धमोक्षयोर्विवेचनं, पञ्चकोशात्मकं शरीरं, तत्र शरीरी कः कुत्रेति विमर्शः, गुणत्रयनिरूपणं, प्रकृतिपुरुषयोः स्वरूपम्, कर्मकाण्डोपदिष्टानां कर्मणां मोक्षसाधनता वा न वेति चर्चा, मोक्षभेदाः, प्रारब्धादिकर्मभेदाः, वासनाच्छेदः, इन्द्रियनिग्रहः, मनोनाशः, प्रज्ञास्थिरीकरणम्, अपरोक्षज्ञानं, विद्याऽविद्याविचारः सदसद्विवेकः, आनन्दस्वरूपम् इत्यादयो बहवो विषयाः उपाख्यानैः, संवादैः, प्रश्नोत्तरप्रसंगैश्च यत्र प्रतिपादितास्ते वेदान्तभागाः एव उपनिषत्संज्ञया व्यपदिश्यन्ते ।

किन्तु महाभारते भीष्मपर्वणि पार्थपार्थसारथ्योः संवादरूपेण भगवद्गीतेति प्रसिद्धः सप्तशतश्लोकात्मकः ग्रन्थभागोऽपि उपनिषद्नाम्ना व्यवह्रियते । "भारतं पञ्चमो वेदः" इति महाभारतस्य अपि वेदत्वं सुप्रसिद्धम् । तत्र विद्यमानेषु सनत्सुजातीयादिषु बहुषु दार्शनिकप्रसंगेषु, गीतायाः किं नाम वैशिष्ट्यं येन तस्याः उपनिषदिति वेदान्तसमानो व्यपदेशः ? सन्त्येवाऽत्र हेतवः । भगवन्मुखोद्-

गतमिति तत्र प्रथमो हेतुः । सनकादीनां नित्यसूरीणां मरीच्यादीनां महर्षीणां, विरिञ्च्यादीनां प्रवृत्तिपराणां च प्रवृत्तिनिवृत्तिरूपं धर्मं वेदमुखेन उपदिदेश भगवान् नारायण इति श्रुतिस्मृतिपुराणैरवगम्यते । स एव भगवान् स्वयं वासुदेवरूपेण अवतीर्ण इति, तन्मुखात् यन्निःसृतं तत् वेदवाक्यात् अन्यूनमिति हेतोरपि "यस्य निःश्वसितं वेदाः" इति वचनप्रामाण्येनैव भगवद्गीतायाः श्रुतिसमानत्वं सिद्धम् । मनुष्यवर्गस्य प्रतीकभूतं नरावतारम् अर्जुनं प्रति उपदिष्टत्वात्, रथोपरि निकट एव रहोगुरुशिष्यसंवादरूपेण प्रवर्तितत्वात्, उपनिषत्प्रतिपादितस्य अध्यात्मतत्वस्यैव मुख्यविषयत्वेन प्रपञ्चितत्वात्, मोक्षोपयोगिमार्गविचारपरत्वात् सर्वोपनिषत्सारभूतत्वाच्च गीतायाः उपनिषत्संज्ञा स्वतः सिद्धा विभाति । शोकमोहोपहतचित्तोऽर्जुनः तत्वं जिज्ञासुः स्वयमाचार्यमुपसृत्य "शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्"[1] इति भगवन्तमाचार्यत्वेन वृणुते । अयमपि उपनिषत्सु निर्दिष्टः अधिकारिलक्षणलक्षितः गुरुशिष्यभावः शास्त्रस्यास्य औपनिषदत्वं व्यनक्ति । ये ये विषयाः उपनिषत्सु प्रतिपादिताः ते सर्वे पौर्वापर्यक्रमेण विवेचिताः, उपनिषद्बाह्यविषयाः न प्रतिपादिताः इति कारणेनाऽपि तस्य औपनिषदत्वं सुसम्पन्नम् ।

महाभारतकथाप्रसङ्गेन सेनावर्णनं, शङ्खनादादिसमरारम्भवर्णनं, दुर्योधनभीतिप्रदर्शनपरः द्रोणेन सह संवादः, अर्जुनस्य विषादाविष्करणं, भगवतो विश्वरूपप्रदर्शनम् इत्यादिसन्दर्भाः कथमुपनिषदङ्गानि भवितुमर्हन्ति इति विचिकित्सा सम्भाव्यैव । किन्तु तेषामपि सन्दर्भाणां प्रकृतदार्शनिकचर्चायां साक्षात् परम्परया वा उपयोगो वर्तते । परस्परनिधनेच्छया समागतयोः कुरुपाण्डवयोर्मध्ये अभिवन्द्यानां गुरूणां पितामहपितृव्यादीनां बान्धवानां च साक्षात् दर्शनेन खलु निर्वेद उद्बुद्धो भवत्यर्जुने, येन तस्य इहामुत्रफलभोगविराग उदेति, यो विरागः तत्त्वोपदेशग्रहणाय जिज्ञासुलक्षणभूतसाधनचतुष्टयेष्वन्यतमः मुख्यश्च परिगण्यते । शङ्खनादादिश्रवणेन प्रत्यासन्नं यद्युद्धं स्वकीयैरेव बान्धवैर्भविष्यतीति तद्विषयं वैराग्यं झटित्येव प्रकटीभवति त्वरयति चार्जुनमुपदेशग्रहणाय । अर्जुने समुत्पन्नमिदं वैराग्यं न युद्धे पराजयशङ्कया अपि तु बलिष्ठस्य जयाशंसिनः एव वैराग्यमिति प्रदर्शयितुमेव दुर्योधनस्य भीरुता स्वबलस्य अपर्याप्तत्वं प्रति चिन्ता च तद्वाक्यैः सूच्यते । एवमत्र प्रथमाध्याये वर्णिताः कथाभागाः शौर्यवीर्यसम्पन्नेऽप्यर्जुने युयुत्सायाः स्थाने उपदेशग्रहणायात्यन्तापेक्षितस्य वैरा-

---

१. गीता २.७

ग्यस्य संपादनाय पोषणाय च प्रभवन्तीति हेतोः तेषामपि आत्मज्ञानविचारपरेऽस्मिन् ग्रन्थोद्देश्ये परम्परासम्बन्धो नूनमस्ति। अतः कथाभागानाम् एषां समावेशेन गीतायाः औपनिषदत्वं न बाधितम्।

विश्वरूपप्रदर्शनं च यत् भगवतः एकादशाध्याये वर्णितं तदपि उपदिष्टस्य तत्वज्ञानस्य दृढीकरणार्थमेव। प्रसिद्धासु उपनिषत्सु सन्यस्तसर्वसंकल्पाः लोकातीताः मन्त्रद्रष्टारो ऋषय एव उपदेष्टारः। शिष्याश्च तेषां वाक्येष्वविशङ्कं विश्वसन्तः आप्तवाक्यत्वेन तेषां प्रामाणिकतां स्वीकुर्वन्तश्च। अत्र तु 'हे कृष्ण! हे यादव! हे सखेति'[1] आबाल्यात् "विहारशय्यासनभोजनेषु"[2] सखित्वमेव पालयतः अर्जुनस्य भगवदुक्तिषु अनार्षा इति कृत्वा कदाचित् प्रामाण्यबुद्धिः शिथिला भवेदिति, तत्शैथिल्यनिरसनार्थं स्वमहिमानं दृग्गोचरीचकार, भगवान् निजविराट्स्वरूपदर्शनेन। उपनिषद्भिः साकं वेदान् निजनिःश्वसितत्वेन यः प्रकटीचकार, यस्त्वात्मानं 'आदित्यानामहं विष्णुः', 'महर्षीणां भृगुरहम्' 'देवर्षीणां च नारदः' इत्यादिभिः दशमाध्यायोक्तवचनैः मन्त्रद्रष्टृणां महर्षीणां तादात्म्येन वर्णयति, यस्यैव च तेजोंशसम्भवैरेव भृगु-कुत्सात्रि-वसिष्ठ-विश्वामित्राद्यैः महर्षिभिः दृष्टत्वात् मन्त्राणां मन्त्रत्वं आर्षत्वं इतरनिरपेक्षं प्रामाण्यं च स्वीक्रियते, स एव वासुदेवरूपेण अत्र अर्जुनस्य ज्ञानोपदेशं करोतीति हेतोः, निजवाक्यानां प्रामाणिकत्वं न विशङ्कनीयमिति विश्वरूपप्रदर्शनेन विश्वासमुत्पादयति। 'ब्रह्माणमीशं कमलासनस्थं ऋषींश्च सर्वानुरगांश्च दिव्यान्'[3] 'कस्माच्च ते न नमेरन् महात्मन् गरीयसे ब्रह्मणोप्यादिकर्त्रे'[4] इत्यादिवचनैः स्वयमर्जुनः तस्य विराट्शरीरे सर्वान् ऋषीन् पश्यति—

'यो ब्रह्माणं विदधाति पूर्वम्
यो वै वेदांश्च प्रहिणोति तस्मै।
तं ह देवमात्मबुद्धिप्रकाशं
मुमुक्षुर्वै शरणमहं प्रपद्ये।'

इत्युक्तरीत्या ब्रह्मणोऽप्यादिकर्ता यो वेदान् प्रथममाविश्चकार तमेव पश्यत्यर्जुनः।

---

१. सैव ११.४१
२. सैव ११.४२
३. सैव ११.१५
४. सैव ११.३७

भगवति आप्तत्वबुद्धिः वेदान्तवाक्येषु इव तदुक्तिषु प्रामाणिकत्वं विश्वरूपदर्शनेनैव जायते। अतः विश्वरूपाध्यायेन न केवलं गीतायाः औपनिषदत्वम् अबाधितं परन्तु दृढीकृतमेव। एतदनन्तरमेव शिष्यस्यार्जुनस्य तदुपदेशेषु गौरवबुद्धिः समुत्पन्नेति—

'यच्चावहासार्थमसत्कृतोऽसि विहारशय्यासनभोजनेषु'[1]।

'पिताऽसि लोकस्य चराचरस्य त्वमस्य पूज्यस्य गुरुर्गरीयान्'[2]।

'प्रसादये त्वामहमीशमीड्यम्'[3]

'त्वमादिदेवः पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानम्'[4]।

इत्यादिवचनैः ज्ञायते।

वेदेषु यथा सन्ति उपनिषदस्तत्त्वानि तथा पञ्चमे भारताख्ये वेदे भगवद्गीतायामपि समानम् एव उपनिषत्पदनिर्देश्यं वस्तूभयत्रोपलभ्यते। सनत्सुजातीये, सनत्कुमारः धृतराष्ट्रं ब्रह्मविद्यामुपदिशति। किन्तु तस्य उपदेशस्य उपनिषदिति नाम्ना प्रसिद्धिर्नास्ति। यद्यप्याध्यात्मिको विषय एव तत्र प्रतिपाद्यते तथापि तद्ग्रहणे अनधिकारी धृतराष्ट्रः खलु तत्र श्रोता। पुत्रस्नेहात् धर्माऽधर्मयोः पुण्यपापयोश्च विषये मतिग्लानिमापन्नः द्विगुणीकृतान्ध्यः शाश्वतस्य श्रेयसो मार्गस्यानधिकारी। नाऽपि सनत्कुमारोपदेशेन तस्य मोहो निरस्यते यतः धृतराष्ट्रे इहामुत्र फलभोगविरागस्य गन्धोऽपि नासीत्। अतः सनत्सुजातीयस्य आध्यात्मिकविषयत्वेऽपि अरण्यरुदितप्रायत्वे आरण्यकत्वमौपनिषदत्वं न संगच्छते।

शरतल्पगतेन भीष्माचार्येण शान्तिपर्वणि युधिष्ठिरमुद्दिश्य विस्तरेण उपदेशः कृतः। तत्र यद्यप्यध्यात्मविषयिणी चर्चा समुदेति तथापि विषयान्तराणामपि समावेशः कृतः ये लोकव्यवहाराय उपयुक्ताः। राजधर्मः, स्त्रीधर्मः, गृहस्थधर्मः इत्यादिनानाविषयाः लोकयात्रासाधनभूताः तत्र वर्णिताः येषां मोक्षसाधनत्वं न वक्तुं शक्यते। युद्धानन्तरं बन्धुनाशजनितनिर्वेदेन पीडितोऽपि युधिष्ठिरः चक्रवर्तिपदमारुरुक्षुः आसन्नमरणात् भीष्मपितामहात् राज्यपालनोपयुक्तानि धर्मस्य

---

१. सैव ११.४२

२. सैव ११.४३

३. सैव ११.४४

४. सैव ११.३८

सूक्ष्मतत्त्वानि पृच्छति। स्वजननाशेन निर्विण्णः युधिष्ठिरो यद्यपि वैराग्य-सम्पद्युक्तः तथापि राज्याभिषेकोऽनिवार्य इति स्वयं जानाति तदुपयुक्तान् धर्मांश्च जिज्ञासते। भीष्मोऽपि प्रवृत्तिनिवृत्तिरूपौ उभावपि धर्मौ तस्मै उपदिशन् प्रवृत्तिमार्गस्यैव प्राधान्यं दर्शयति।

गीतायामपि अर्जुनस्य प्रवृत्तिमार्गे एव प्रचोदनं विदधाति भगवान्। किन्तु 'न कर्मणामनारम्भात् नैष्कर्म्यं पुरुषोऽश्नुते'[1], 'कर्मणैव हि संसिद्धिम् आस्थिताः जनकादयः'[2], 'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज'[3], 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते'[4] इत्यादिभिर्वचनैः ज्ञानमार्ग एव परमतात्पर्यमिति सूचितम्। शान्तिपर्वणि मोक्षधर्मादयः निवृत्तिपराणां धौम्यादीनां श्रोतॄणां कृते भगवच्चोदनया उपदिशति गाङ्गेयः। प्रवृत्तिपरा ये धर्माः त एव जितकाशिनः ज्येष्ठपाण्डवस्य कृते उपदिष्टाः। श्रोतारो बहव आसन् तत्र एषाम् अधिकार-भेदेन भीष्मोपदिष्टानां धर्माणां प्रायोगिकत्वं उद्दिष्टम्। अत्र तु गीतायाम् एकस्यैव श्रोतुः ज्ञानमार्गोपयोगिचित्तशुद्धिजनकत्वेन कर्मणः प्राशस्त्यं वर्णयतः भगवतः ज्ञानमार्ग एव परमं तात्पर्यम्। अतः विषयसाम्येऽपि विवक्षाभेदात् अधिकारिभेदात् च गीतायाः यदौपनिषदत्वं सिद्धं तत् भीष्मकृतोपदेशस्य न वक्तुं शक्यते।

महाभारतस्य वेदत्वं यदुच्यते तत् प्रशंसामात्रम्, न तु वास्तविकमिति केचन आक्षिपेयुः। पाराशरप्रणीतमिति पौरुषेयत्वं, आम्नायस्य क्रियार्थत्वात् आनर्थक्यमतदर्थानाम् इति न्यायेन क्रियार्थत्वपरवचनाभावात् अनाम्नायत्वं, विध्यर्थवादादीनाम् असत्वम्, ऐतिहासिकानां तत् समानकालीनानां राजन्यानां चरितगुम्फितत्वादर्वाचीनत्वं, विवाह-प्रणयसमरद्यूतदौत्यादिकाव्यसामान्य-विषयाणां वर्णनेन लौकिकत्वं, सौतिप्रतिपादितत्वेन अनार्षेयत्वं, इत्यादिभिः कारणैः महाभारतस्य वेदत्वं कथम् इत्याशङ्का स्यात्। न तावन्मात्रं वेदोपबृंहणार्थाय व्यासेन महाभारतं निर्मितमिति तत्रैवोक्तम्। यदुपबृंहणार्थाय भवति तदेव उपबृंह्यं न भवति। एवं महाभारतस्यैव वेदत्वे शङ्किते कथं तदन्तर्भूतायाः गीतायाः वेदान्तापरपर्याया उपनिषत्संज्ञा सम्भवति ? अत्रोच्यते। वेदोक्तानां

---

१. सैव ३.४
२. सैव ३.२०
३. सैव १८.६६
४. सैव ४.३७

निखिलानां धर्माणां, पुरुषार्थोपयुक्तानां कर्म-भक्ति-ज्ञानयोगानां, सत्य-अहिंसान-सूया-तितिक्षा-शमदमादीनां गुणानां किं बहुना आचण्डालात् आ चतुर्मुखब्रह्म सर्वाश्रमोपयुक्तानां सर्ववर्णोपयुक्तानां समेषां विषयाणां प्रतिपादनम् इतिवृत्त-संवादोपदेशकथानकैः अत्र निरूपितमिति हेतोः 'यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्'[1] इत्युक्तप्रकारेण वेदतुल्यत्वं महाभारतस्येत्यत्र नास्ति संशयलेशः। वेदतुल्येऽपि तस्मिन् साक्षाद् भगवन्मुखान् निस्सृतायाः गीतायाः अपौरुषेयत्वम्, औपनिषदत्वं च अङ्गीकर्तुं शक्यते। वेदभागो नास्तीति तत्र यदि विप्रतिपत्तिः तथाऽपि गीतायाः उपनिषत्सारभूतत्वे नाक्षेपो वक्तुं शक्यते—

'सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः।
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत्॥'[2]

इति खलु अभिजनोक्तिः। तदनुसारेण स्मृतिग्रन्थस्यास्य श्रुतिधेनुत्वानङ्गीकारे तद् दुग्धत्वं सर्वैराचार्यैः कथं स्वीक्रियते? गोदोहनकाले अङ्गुष्ठतर्जनीयोगेन धेनुस्तनग्रहणं यद् गोपालेन क्रियते तदेव भगवतः चिन्मुद्रात्वेन वर्णितम्। 'ज्ञानमुद्राय कृष्णाय गीतामृतदुहे नमः' इति प्राचीनानां वचनात् उपनिषद्गवीनां दोहनोपयुक्ता गोपालस्य करगता चिन्मुद्रा, गुणत्रयविवेचनेन प्रकृत्याः व्यवधा-नात् जीवब्रह्मणोरैक्यम् अङ्गुष्ठतर्जनीयोगेन द्योतयति। अनयैव खलु संज्ञया 'मौनव्याख्याप्रकटितपरब्रह्मतत्वेन' दक्षिणामूर्तिना वटतरुमूले सनकादीनाम् उपदेशः कृतः। एवं मौनव्याख्यया तत्वार्थमवगन्तुं सनकादिवत् अधिकारि-धौरेयो न भवति पृथापुत्र इत्यवगम्य स्वमुखारविन्दात् तद् व्याख्यानमयीम-मृतवाणीं गीताख्यां निरसारयत् भगवान् वासुदेवः। तत्र स्वस्य वसुदेवपुत्रत्वेन माभूत् कस्याऽपि पौरुषेयशङ्का इति मत्वा—

'यद्यद् विभूतिमत् सत्वं श्रीमदूर्जितमेव वा।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम्॥'[3]

इति स्वविभूतिम् उद्घुष्य—

'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥'[4]

---

१. महाभारतम्
२. गीतामाहात्म्यम्, श्लो० ६
३. गीता १०.४१
४. सैव १८.६६

इति प्रतिज्ञावचनेन निजसर्वेश्वरत्वं श्रुतिप्रतिपादितत्वं च प्रकटयति। तन्निःश्वसितभूतायाः गीतायाः उपनिषत्सारभूतत्वं केन अपलपितुं शक्यते ? तेनैव कारणेन हस्तलिखितेषु प्राचीनपुस्तकेषु प्रत्यध्यायान्तं 'भगवद्गीतासूपनिषत्सु' इति बहुवचनेन निर्देशः कृतः किम् ? उपनिषदन्यतमत्वं न गीतायाः, किन्तु उपनिषदः एव गीता इति खलु प्रतिभाति। अन्यथा 'भगवद्गीतायाम् उपनिषदि' इति स्यात् पुष्पिकावाक्यम्। 'ब्रह्मविद्यायां योगशास्त्रे'[1] इति तत् विलक्षणतया एकवचननिर्देशश्च उपर्युक्तामुत्प्रेक्षां साधूकरोति। अतः सर्वासाम् उपनिषदां सारभूतत्वात् समग्रतया तेषामन्तर्भावः भगवद्गीतायां विवक्ष्यते।

एवमेव गीतायाः ब्रह्मविद्येति व्यपदेशः दृश्यते। उपनिषदां बाहुल्येऽपि, दार्शनिकानां शास्त्राणां नैकत्वेऽपि तेषु प्रतिपादिता ब्रह्मविद्या एकैव। ब्रह्मविद्या नाम ब्रह्मविषयिणी विद्या, ब्रह्मबोधिनी विद्या या परा विद्येति अभिधीयते। अस्याः विद्यायाः प्रभावेण तां विद्वान् 'ब्रह्मविद् ब्रह्मैव भवति' इति श्रुत्यनुसारं न केवलं ब्रह्म जानाति किन्तु तदात्मको भवति। ब्रह्मविद्यातिरिक्ताः सर्वाः विद्याः 'अपरा विद्या' इत्यभिधीयन्ते। तासाम् परममुद्देश्यं वेदितव्यस्य वेदनमात्रेण न परिसमाप्यते। किन्तु ता विदितस्य निखिलस्य आनर्थक्यं द्योतयन्त्यः परायां विद्यायां जिज्ञासां जनयन्ति। अपराविद्याविषयभूतस्य निखिलस्य प्रपञ्चस्य सम्यग् ज्ञानेन न भवत्यात्यन्तिकदुःखनिवृत्तिः। ततः परं किञ्चिदस्ति ज्ञातव्यं यदेव दुःखात्यन्तविनाशाय प्रभविष्यतीति यावत् ज्ञायते तावदेव अपरानामकविद्यायाः प्रयोजनम्। एवं ज्ञात्वा परां विद्यां प्रति प्रेरितः पुरुषः 'तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया' इति विधिना गुरुमुपश्रित्य, 'अधीहि भगवो ब्रह्मेति' प्रार्थयितुं च व्यवस्यति। तदुपदेशानन्तरं जिज्ञासोत्पादनाय तावदुपयुक्ता अपरा विद्याऽपि निरर्था 'उभे सत्यानृते त्यक्त्वा येन त्यजति तत् त्यज' इत्युक्तरीत्या, त्याज्या च भवति। तादृशीं परां विद्यामेव भगवान् अर्जुनम् उपदिदेश। प्रकृते यद्यपि युद्धकर्मणि नियोजनमेव तत्कालोद्दिष्टं तथापि फलासक्तिं विना स्वधर्माचरणं मोक्षोपायत्वेन भवतीति प्रतिपादनात् ब्रह्मविद्यायाः उपदेशः एव गीतायाः परमोद्देश्यमिति ज्ञायते।

तत्र फलाभिसन्धिं विना स्वधर्मानुष्ठानेन या चित्तशुद्धिः सम्पाद्यते तया समाधिभक्तियोगाभ्यां च प्रत्यगात्मसाक्षात्कारात् मोक्ष इति शाङ्करं

---

१. सैव १८

मतम्। तादृशकर्मफलं भगवति प्रपत्तिबुद्धिं जनयति, तदनुग्रहेण निर्व्याज-भक्तिद्वारा ज्ञानान् मोक्ष इति विशिष्टाद्वैतिनां मतम्। कर्मयोगेन आत्मज्ञानं ततः परमात्मज्ञानं ततो निष्कारणा भक्तिः ततो मोक्ष इति मध्वमतम्। एषु मतेषु सत्यपि वैमत्ये स्वधर्मानुष्ठानस्य परम्परया मोक्षसाधनत्वं सर्वत्र अङ्गी-कृतम्; कर्मणः अनारम्भमात्रेण कर्मसन्यासस्य वा तज्जन्यज्ञानयोगस्य वा प्रसक्तिर्नास्ति इति सर्वैरङ्गीक्रियते। अतः सर्वथा निष्कामनया कर्मानुष्ठानमेव मोक्षद्वारकपाटोद्घाटनाय भवति। 'तस्मात् युद्ध्यस्व भारत'[1] इति पुनः पुनः युद्धाय प्रेरयतो भगवतः मुख्यमुद्देश्यं नैव युद्धम्। 'तस्मात् योगी भवाऽर्जुन',[2] 'बुद्धि-युक्तो जहातीह उभे सुकृतदुष्कृते'[3],'न हि ज्ञानेन सदृशं पवित्रमिह विद्यते'[4] इत्यादि-भिर्वचनैः ज्ञानमेव परमं लक्ष्यम् इति ज्ञायते। 'न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च'[5] इति युद्धस्य फलभूतेषु राज्यलाभादितः प्राक् एव विरक्तमर्जुनं प्रति जयभोगादिफलमुद्दिश्य न मन्दोऽप्युपदिशेत्। 'अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते'[6]इत्यामुष्मिकेषु वीरस्वर्गादिफलेभ्योपि विरक्तः अर्जुनः इति हेतोः तेषां कृतेऽपि तं युद्धाय प्रेरयितुम् अवकाशो नास्ति। अतः राज्यस्वर्गा-भ्यामप्यभिमततरं प्रयोजनमस्ति भगवदुपदेशस्य यदन्ये अविरक्ताः युयुत्सवः आप्तुं न प्रभवन्ति, विरक्तः भगवच्छरणं गतः अभिजातः अर्जुनसदृशो यः कश्चित् क्षत्रिय एव निस्संगेन स्वधर्ममनुष्ठातुं शक्नोति। तस्मात् अनासक्ति-योगस्य विशेषेण प्रायोगिकत्वमर्जुने पश्यता भगवता 'तस्मात् युद्धयस्व भारत'[7] इत्यादेशः पुनः पुनः क्रियते। सन्ति खलु लोके बहवो ये वाञ्छितफलसिद्धयर्थं कस्याऽपि प्रेरणां विना कर्मस्वक्सज्यन्ते। तादृशं लोकस्वभावभूतं कर्मानुष्ठानं प्रति यः कश्चित् प्रेरको भवितुं शक्नोति। न तु स्वयम् अवाप्तसमस्तकामो भगवान्। तस्मात् युद्धाय प्रेरणमपि ब्रह्मविद्यामार्गसंज्ञात्वेन न तु स्वतः लक्ष्यत्वे-नेति हेतोः भगवता या कर्मप्रशंसा कृता तया गीतायाः ब्रह्मविद्यात्वं नैव

---

१. सैव २.१८
२. सैव ७.४६
३. सैव २.५०
४. सैव ४.३८
५. सैव १.३२
६. सैव १.३५
७. सैव २.१८

बाधितम् । 'स्वकर्मणा तमभ्यर्च्य'[1], 'कर्मणैव हि संसिद्धमास्थिताः जनकादयः'[2] इत्यादि वचनैःसंसिद्धिसाधनभूते कर्मणि प्रेरणा दीयते न तु बन्धके । कर्मणा बन्धः, कर्मयोगेन मोक्षः इति व्यवस्था । कर्मयोगप्रशंसया ब्रह्मविद्यायाः अङ्ग-भूतस्य तदुपकारकस्यैव प्रशंसा भवति यया भगवद्गीतायाः ब्रह्मविद्यात्वं निर्बाधितम् ।

---

१. सैव १८.४६

२. सैव ३.२०

# तृतीयः परिच्छेदः

## द्वितीयाध्यायविचारः

प्रायशः सर्वे व्याख्यातारः गीतायाः शास्त्रत्वं द्वितीयाध्यायस्यैकादशश्लोकादारभ्य स्वीकुर्वन्ति, यत्र भगवान् 'अशोच्यानन्वशोचस्त्व'मिति उपदेशं प्रारभते। परन्तु तत्र प्रथमश्लोकादेवारभ्य व्याख्या सर्वैः कृता। अत्रायमेव हेतुः यदेतेषां व्याख्याप्रसङ्गेन प्रथमाध्यायस्यापि विचारः स्यादिति—

'तं तथा कृपयाविष्टमश्रुपूर्णाकुलेक्षणम्।
विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ।।'[1]

इत्यत्र 'कृपयाविष्ट'मित्यस्य पदस्य व्याख्यानावसरे प्रथमाध्यायवर्णितामर्जुनस्य विषादावस्थां गीतोपदेशस्य हेतुभूतां बहुधा निरूपयन्ति व्याख्यातारः। कृपापदस्य मोहविशेषत्वं केचन[2] स्वीकुर्वन्ति। कृपा हि नाम पररक्षणकर्तव्यतैकदृष्टिविशेषः। स तु गुणपरिणामः यद्यपि न मोहः, तथाप्यस्थाने स एव मोहः। अथवा कृपा नामाभ्यन्तरो मोहः, 'विषीदन्' इति वाह्यमोहः विवक्ष्यते।[3]

---

१. गी० २.१

२. 'तथापि स्वजनताव्यामोहस्तादृशचित्तवृत्तिरूपेण परिणतः प्रसिद्धकृपावैलक्षण्यात् तथा कृपेत्यर्थः।' बृ० गि० २.१

३. कृपा चान्तरो विषादः, ततः अश्रुपूर्णाकुलेक्षणं बाह्यशोकेनाप्याविष्टमित्यर्थः। ता० च० २.१

शंकरानन्दः[1] कृपाशब्दस्य संसारदुःखदर्शनरूपत्वं स्वीकरोति । आत्मविचारस्याधिकारः साधनचतुष्टयसम्पन्नस्यैव । तेषु मुख्यतमस्य वैराग्यस्य लाभाय संसारदुःखानुशीलनमावश्यकम् । अनेन व्याख्यानेन 'कुतस्त्वा कश्मल' मिति उत्तरश्लोकेन विरोधः सम्पद्यते । साधनचतुष्टयान्तर्गतं संसारदुःखदर्शनं कदापि कश्मलं न भवितुमर्हति ।

'कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्त्तिकरमर्जुन ॥'[2]

श्लोकेऽस्मिन् प्रथमाध्यायसूचितानामर्जुनगतानां विविधानां मोहानां निरसनोपयुक्ताः शब्दाः प्रयुक्ताः । 'अकीर्तिकर'मिति पदेन युद्धकरणे अशक्तिप्रकाशनरूपो 'वेपथुश्च शरीरे मे'[3] इत्यादि निर्वर्णितः मोहः निरस्यते । 'न च श्रेयोऽनुपश्यामि'[4] इति या पापभीरुताऽर्जुनेन वर्णिता तां निरस्यति 'अस्वर्ग्यम्' इति विशेषणम् । 'अनार्यजुष्टम्' इति प्रतिपादनेन कुलक्षयनिदानभूतः आततायिवधोऽपि पापाय भवतीति मोह आक्षिप्तः । सात्विकस्यार्जुनस्य कर्मणि तामसबुद्धिः, तेन हेतुना कर्मत्याग इत्यादिकं मोहनिबन्धनमेवेति द्योतयितुं 'कुतस्त्वा' इति प्रश्नः ।

ज्ञानेश्वरीव्याख्यायाम् अर्जुनस्वभावस्य कश्मलेन अभिभवः अन्धकारेण सूर्यस्यावरणमिव असम्भवः । 'कुतस्त्वा' इत्याक्षेपेण अन्धकारेण सूर्यकवलीकारोऽपि सम्भाव्यते, कश्मलमर्जुने सर्वथाऽसम्भावितमिति वर्णितम् ।

'कार्पण्यदोषोपहतस्वभावः'[5] इत्यस्य श्लोकस्यार्थं गूढार्थदीपिका, रामानुजीयव्याख्या, अन्याश्च तदनुयायिन्यो व्याख्याः शरणागतिपरतया वर्णयन्ति । अहं

---

१. 'सोऽहं भगवः शोचामि' इति श्रवणाद् कथं संसारसागरं तरिष्यामीति शोचतः परितप्यत एव गुरुरीश्वरश्च प्रसीदत इति सूचयितुम् ।
ता० बो०, २.६

२. गी०, २.२

३. सैव २.२९

४. सैव १.३१

५. कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्मसम्मूढचेताः ।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥
सैव, २.७

तव शिष्यः प्रपन्नः शरणागतश्च; त्वमेव प्राप्यः, प्रापको आराध्यदेवता च। 'यमेवैष वृणुते तेन लभ्यः, तस्यैष आत्मा विवृणुते तनुं स्वाम्'[१] इति यद्यपि भगवद्भक्तिरेव तत्र शरणं तथाऽप्याचार्यप्रपत्तिं विना परमात्मप्रपत्तिरपि न फलाय भवतीति कृत्वा प्रथममाचार्यरूपेण त्वामेव प्रपद्ये। स्पष्टमत्र मोक्षोपयोगी इहामुत्र फलभोगविराग उपक्षिप्यते। अस्मादेव 'न त्वेवाह'मित्यारभ्य आत्मतत्वोपदेशस्य औचित्यम्। गूढार्थदीपिकायाम् अधिकारिविशेषप्रदर्शनपरोऽयं सन्दर्भ इति निरूपितम्।[२] 'अवाप्य भूमावसपत्नमृद्धम्' इत्यैहिकफलभोगविरागः, 'सुराणामपि चाधिपत्यम्' इत्यामुष्मिकफलभोगविरागश्च सूच्यते। भगवद्रामानुजदृष्ट्या कार्पण्यं परित्याज्यस्यापरित्यागः, दैन्यवृत्तिस्तु गुरून् हत्वा कथं जीविष्यामीति चिन्ता। स्वभावपदेन उपहतधैर्यत्वं विवक्ष्यते। 'धर्मसम्मूढचेता' इत्यत्र धर्मपदार्थः आनन्दतीर्थादिभिः ब्रह्मेति व्याख्यातः। भगवद्रामानुजमते तु कर्तव्यक्रियाविशेष एव। अद्वैतिनस्तु श्लोकेऽस्मिन् ज्ञानोपदेशाङ्गं गुरूपसदनमेव विवक्षितत्वेन स्वीकुर्वन्ति।

अर्जुनः इहामुत्रार्थफलभोगविरागमात्रं जानन्नपि नित्यं किञ्चिदस्त्येवेति जानाति, न तु नित्यमात्मतत्वमिदन्तया शरीरातिरिक्तं नित्यात्मस्वरूपं जानाति। आत्मानात्मशबलितस्यैव अहमर्थस्यात्मत्वज्ञानात् युद्धादुपरत इति ज्ञापयितुं 'धर्मसम्मूढचेता' इति आनन्दगिर्यादिमते। भगवद्रामानुजमते तु अर्जुनस्य कर्तव्याकर्तव्याविवेकः परिशुद्धरूपेण प्रत्यगात्मानं न जानातीति हेतोः। अनात्मनि अहमित्यात्मताभिमानेन अर्जुनः 'न योत्स्य'[३] इति वदति। यावदात्मस्वरूपस्य वास्तविकस्य ज्ञानं न भवति, यावच्च नित्ये प्रत्यगात्मनि ज्ञातेऽपि युद्धमवश्यं कर्तव्यमिति न ज्ञायते, तावद्युद्धं न करिष्यत इति भावः। 'हृषीकेश'[४] पदेन धर्मतत्वस्यात्मतत्वस्य वोपदेशे अर्जुनेन्द्रियाणामपि नियमनेन तस्यापि सर्वविधमोहनिरसने सामर्थ्यं द्योतयति।

'न योत्स्य' इति वादः अहङ्कारमाश्रित्यैव। अहङ्कारश्चात्र कर्तृत्वाभिमानापरपर्यायः। तथा च—'यद्यहङ्कारमाश्रित्य न योत्स्य इति

---

१. क० उ०, २.२३

२. 'एतेनेहामुत्र भोगविरागो अधिकारिविशेषणत्वेन दर्शितः'।
गू० दी०, २.८

३. गी०, २.९

४. तमुवाच हृषीकेशः प्रहसन्निव भारत। सैव, २.१०

मन्यसे'[1] इति वक्ष्यमाणवाक्येन एकवाक्यता। अतो नात्र अहंभावस्य मोक्षदशायामिव भूतपूर्वगत्योपलक्षणतया उत्तमपुरुषप्रयोगः। 'प्रकृतिस्त्वां नियोक्ष्यति'[2] इति वक्ष्यमाणरीत्या स्वयमेव प्राचीनवासनानुसारं युद्धे प्रवर्तिष्यत एव। तथापि शरणागतस्य युद्धे प्रवर्तनं शरण्यस्य भगवतः कर्तव्यमेव। यथा वैद्येन रोगिणः कट्वासवग्रहणं कारयितव्यम्। एवं कृपापरवशः शरणागतत्राणपरायणो भगवान् निरुद्योगं पार्थमालोक्य प्रहसन्निवोवाच। अनायासेनैव शरणागतरक्षणं कर्तव्यमिति द्योतयितुं प्रहासः। तस्मै आत्मपरमात्मयाथात्म्यतत्प्राप्त्युपायभूतकर्मयोगज्ञानयोगभक्तियोगगोचरं 'नत्वेवाहं' मित्यारभ्य 'अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः' इत्यन्तमुपदेशभूतं वचनमुवाचेति भगवद्रामानुजा मन्यन्ते।[3] अस्मिन्मते 'अशोच्यानन्वशोचस्त्वम्' इति श्लोकोऽपि परिहासच्छायापन्नः। प्रहसन्निवेत्यंशेन तस्य श्लोकस्यान्वयं परिहासपरं वेदान्तदेशिकोऽपि स्वीकरोति।[4]

'अशोच्यानन्वशोचस्त्व' मित्यारभ्य आत्मयाथात्म्याद्युपदेश इति श्रीमदानन्दतीर्थः, वल्लभाचार्यः, चैतन्यश्च मन्यन्ते। श्रीमद्रामानुजस्तु 'न त्वेवाहं'-मित्यनन्तरश्लोकमारभ्यैव आत्मतत्वोपदेश इति।[5]

फलतस्तु सर्वेषामाचार्याणां मते अर्जुनाय शोचते विवेकमुत्पादयितुं पाण्डित्याभिमाननिरासे तात्पर्यं सिध्यति। आत्मयाथात्म्योपदेशोपक्रमः 'न त्वेवाहं' मित्यत एवेति न वैषम्यम्।'

'तत्त्वमसि' इति महावाक्ये तत्पदार्थस्य त्वंपदार्थस्य च निरूपणे विवेचने च खलु प्रायशः वेदान्तिनां विभिन्नाः सरणयः दृश्यन्ते। श्लोकद्वयेनानेन[6] पदार्थद्वयस्य शोधनं विवक्षितमिति अद्वैतिनः। तत्र त्वंपदार्थविषये 'अशोच्या-

---

१. गी०, १८.५१

२. रा० भा०, पृ० ३९

३. 'यद्वाऽत्र अशोच्यानिति श्लोकः प्रहसन्निवेत्यस्य विषयः।'
ता० च०, पृ० ३८

४. 'प्रथमं तावदात्मनां स्वभावं शृणु' इति रामानुजभाष्यस्य टीकायाम्।
ता० च०, पृ० ३९-४०

५. छा० उ०, ६.८.७

६. गी०, २.११, १२

नन्वशोचस्त्व'मिति निरूपिते व्याख्यातॄणां मतभेदो नास्ति। त्वंपदार्थस्य जीवात्मनो याथात्म्यमजानन् अर्जुनः भीष्मादिवधे शोकमनुभवति। तज्ज्ञाने सति शोकावसरो न स्यादिति हेतोः त्वंपदार्थशोधनं प्रधानकर्तव्यमिति सूचयितुम् 'अशोच्यानन्वशोचस्त्व'मिति सर्वेषां समानं मतम्। 'गतासून् अगतासूंश्च' इत्यत्र मतवैषम्यमस्ति। श्रीमद्रामानुजः एवं मन्यते—गतासून् देहानगतासून् आत्मनश्च नानुशोचन्ति पण्डिताः; त्वं तु न देहस्वभावं जानासि न चाऽऽत्मानमिति 'प्रहसन्' इति पूर्वेणान्वयं साधयति। श्रीमदानन्दतीर्थः—आसन्नमरणान् जीवतश्च सूचयतः इमौ शब्दाविति व्याचष्टे। अद्वैतमतानुसारेण गतप्राणा अगतप्राणाश्च विवक्षिताः। साम्प्रतमर्जुनस्य दुःखं भीष्मादीनामासन्नमरणत्वं मत्वैवेति सत्यमस्त्यौचित्यं श्रीमन्मध्वमते। देहात्मनोरविवेकेनायं शोकः, तद्विवेके तु न शोकस्यावकाश इति रामानुजमतन्तु नितरां गभीरम्। भगवत्पादास्तु जीवब्रह्मैक्यज्ञानवादिनः। ज्ञानयोगस्य कर्मनिरपेक्षत्वं ज्ञानकर्मसमुच्चयनिरासेन प्रस्तौति। ततो ज्ञायतेऽनेन विवक्ष्यमाणः ज्ञानयोगः 'तत्त्वमसि' महावाक्यार्थ-ज्ञानमेवेति। अन्ये आचार्याः सन्दर्भेऽस्मिन् त्वंपदार्थशोधनमात्रमेव विवक्षितत्वेन स्वीकुर्वन्ति। भगवत्पादास्तु 'प्रज्ञावादांश्च भाषसे' इत्यनेन तत्पदार्थशोधनोप-क्रमोऽपि कृत इति मन्यन्ते। 'अशोच्यानन्वशोचस्त्व'मिति त्वंपदार्थशोधनं 'प्रज्ञावादांश्च भाषसे' इति तत्पदार्थशोधनं 'गतासूनगतासूंश्च' इति असिपदार्थ-शोधनं चेति महावाक्यस्थानीयत्वमस्य श्लोकस्य फलति। तेन च महावाक्योप-देशेन गीताया उपक्रम इति श्लोकस्यास्य गीतोपक्रमत्वमपि सुष्ठु लगति। त्वंपदार्थशोधनमात्रमत्रेति स्वीकारेऽपि नास्ति क्षतिरद्वैतिनाम्। शोधितस्त्वं-पदार्थ एवाद्वैतमते ब्रह्म। पण्डितशब्देन जीवब्रह्मैक्यज्ञानमेव विवक्ष्यते। अतः नास्ति ज्ञानकर्मसमुच्चयनिरासन्दर्भस्य विरोधलेशोऽपि प्रकरणेऽस्मिन्। शोधि-तस्य त्वंपदार्थस्य ज्ञानेन कर्मणो विरोधः सर्वेषु मतेषु स्वीकृतः। शोधितत्वं-पदार्थज्ञानं कर्मयोगस्यात्यन्तमुपकारकमद्वैतमतेऽपि यावत् तत्पदार्थशोधनम्।

अत्र देहात्मविवेकमात्रं मुख्यतया विवक्षितं, यतो देहो नाऽऽत्मा भवितुम-र्हति। स्थूलदेहस्य अनात्मत्वमाबालगोपालविदितम्। अत एव स्वप्ने नाऽयं देहोऽनुभूयते। तथैव सूक्ष्मदेहस्य सुषुप्तावनुपलम्भेन नात्मत्वम्। सर्वथा भीष्मा-दीनां स्थूलदेहवियोगो भवितेति नास्ति शोकस्यावसरः। इदमेवाभिप्रेत्य वदति 'गतासूनगतासूंश्च नानुशोचन्ति पण्डिता' इति। एवं च अहंपदार्थ एव आत्मेति मत्वाऽपि शोकस्यावसरो नास्तीति विवेचितुं सर्वमतसाधारण्येनापि। अस्यैवोपोद्-बलकत्वेन—

'न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।
न चैव न भविष्यामः सर्वे वयमतः परम् ॥'[1]

इति श्लोकस्यारम्भः ।

प्रागभावप्रध्वंसाभावनिषेधेन स्थूलसूक्ष्मदेहौ नात्मानौ भवितुमर्हत इति दर्शयत्यनेन श्लोकेन । उभयत्र जन्यत्वात् प्रागभावो न निषेध्यः । कारणशरीरं यद्यप्यनादिप्रागभावरहितं, नश्वरत्वात्प्रध्वंसाभाववत् । अतः त्रिविधशरीर-विलक्षण आत्मेति श्लोकार्थः । अतः शास्त्रपरिशीलनेन आचार्योपदेशाच्च आत्म-तत्वमेतादृशमिति यो जानाति स पण्डितो गतासूनगतासूंश्च नानुशोचतीति तत्वम् । योगवासिष्ठे निर्वाणप्रकरणे आत्मनः चिन्मात्रस्वरूपं सम्यग्वर्णितम् ।[2] तत्र 'संविन्मात्र'पदप्रयोगेण आत्मनः ज्ञानाश्रयत्वमहंरूपत्वं वा न पारमार्थिक-मिति प्रतिपाद्यते । 'अहं' 'त्व'मित्यादिप्रयोगस्तु भूतपूर्वगत्या । तत्रैवोक्तम्—

संविदो नास्ति संवेद्यं स्वयं संवेद्यतामिता ।
चित्वादतो विशालाक्ष द्वित्वैकत्वे क्व वा स्थिते ॥[3] इति ।

अनेन आत्मभेदः स्पष्टं निषिध्यते । लोकानुभवोऽपि वस्तुतो मुख्यस्याऽहमर्थस्य बहुत्वं वारयति । यत्र यत्र बहुत्वमवगतं तत्र तत्र सजातीय-भेदोऽनुभूयते यथा---घटाः, ते, इमे, यूयमित्यादौ सजातीयव्याप्यो बहुवचन-प्रयोगः । केवलमहमर्थमादाय बहुवचनप्र योगस्तु अहम् अहम् इति कुत्राऽपि न भवति । अतो ज्ञायते अहमर्थस्य न सजातीयो भेदः । भेदप्रतीतिस्तु शरीरो-पाधिमाश्रित्यैव । शरीरभेदमादायैव कथञ्चन 'सर्वे वयम्' इत्यादिप्रयोगः ।

---

१. गी०, २.१२

२. संविदाकाशमेवाऽहं भवानपि जना अपि ।
म्रियामहे नो कदाचित् संवित्किल कदा मृता ॥
यो० वा० निर्वाण प्र० उ० १०१–७
संविन्मात्राहते तस्माद्भूतं किमिव कथ्यताम् ।
कथ्यतां म्रियते तच्चेत्तदद्येमे कुतो वयम् ॥
तत्रैव, १०१–९

३. तत्रैव, १०१–८

सर्वेषु मतेषु आत्मनित्यत्वं स्वीकृतम् । आत्मस्वरूपे तावत्सन्ति विप्रतिपत्तयः । भगवद्रामानुजादयो अहमर्थमेव मुख्यमात्मानं मन्यन्ते । स च धर्मभूतज्ञानाश्रयः । धर्मभूतज्ञानमपि नित्यम्, आत्मा त्वणुपरिमाणः, प्रतिशरीरं स्वरूपतोऽपि भिन्नः । केवलं परमात्मा एक एवेत्यभिप्रयन् वदति—'औपाधिकात्मभेदवादे हि आत्मभेदस्याताात्त्विकत्वेन तत्वोपदेशसमये भेदनिर्देशो न संगच्छते' इति । स्वरूपेण तु जीवात्मा परमात्मा च अभिन्नावित्यद्वैतवादोऽनेन निरस्यते ।

'नित्यो नित्यानां चेतनश्चेतनाना'[1]मिति श्रुत्यनुसारेण नित्ययोः चेतनयोः जीवपरमात्मनोः पार्थक्यं स्पष्टम् । अद्वैतानुसारेण एकत्वाङ्गीकारे श्रुत्यनुपपत्तिः । आत्मयाथात्म्यसाक्षात्कारानन्तरं निवृत्ताज्ञानतत्कार्यतया, ज्ञानिनां कदापि अज्ञानकृतद्वन्द्वदर्शनं न भवति । उपदेशस्यापि नास्त्यवकाशः । आत्मज्ञानानन्तरमपि भेदज्ञानमनुवर्तते अतः स्वयमुपदेष्टा भवितुमर्हतीति चेत्तदपि न साधु । तदानीं परमेश्वरः (साक्षात्कृतात्मतत्वः) स्वप्रतिबिम्बाय कथमुपदिशति ? उन्मत्तः खलु दर्पणगतं स्वप्रतिबिम्बं शिष्यत्वेन स्वीकुर्यात् । जीवात्मनामपि परस्परैक्यस्वीकारे एकस्यात्मतत्वज्ञानेन सर्वेषां ज्ञानात् एकमुक्तौ सर्वमुक्तिः, अतोऽपि तत्वज्ञानिनः उपदेशग्रहणार्हः कोऽपि न स्यात् । अत आत्मभेदः परमार्थः, अवश्यमभ्युपगन्तव्यः इति विशिष्टाद्वैतिनां निर्णयः । इदमेव शतदूषणीनाम्नि ग्रन्थे वेदान्तदेशिकेन सोपपत्ति निरूपितम् ।[2]

श्रीमद्रामानुजाचार्याणामप्ययमेवाशयः[3]—

अहमर्थविनाशश्चेत् मोक्ष इत्यध्यवस्यति ।
अपसर्पेदसौ मोक्षः कथाप्रस्तावगन्धतः ।।

भगवत्पादैस्तदनुयायिभिश्च पूर्वोक्तयोगवासिष्ठगतैः प्रमाणैरेवं सिद्धान्तितम्—अहमर्थातिरिक्त एवात्मा । स च चिन्मात्रस्वरूपः । तद्भेदस्तु न केवलं शरीरभेदमात्रेण किन्तु तत्संबन्धेन भिन्नतया प्रतीयमानैरपि आत्मभिः व्यावहारिक एवेति । श्लोकेऽस्मिन् 'न त्वेवाहं जातु नासम्' इति वदता भगवता परमात्मनः स्वस्याप्युत्पत्तिविनाशयोर्निषेधः किमर्थं कृत इति विचार-

---

१. क० उ०, ५–१३
२. श० दू०, १५३–१५५
३. श्रीभाष्यम्, पृ० ९७

णीयम् । युद्धेनानेन भगवतोऽपि बधो भवियष्तीति नार्जुनस्य विषादः । अद्वैतातिरिक्तेषु सर्वेषु मतेषु भगवतः स्वोत्पत्तिविनाशनिषेधः व्यर्थ एव स्यात् । अद्वैतमते दृष्टान्तार्थं भगवतोऽप्युत्पत्तिविनाशनिषेधवचनमिति स्थानेऽयं प्रसङ्गः । अयं च दृष्टान्तदार्ष्टान्तिकभावः आत्मैक्यद्योतनार्थैवेति तेषां मतम् । न हि देहादावात्माभिमानेन भीष्मादिवधं तन्मरणं वा शङ्कमानस्यार्जुनस्य श्रीकृष्णे परमात्मताबुद्धिः, स्वस्य भीष्मादीनां वा देहातिरिक्तात्मस्वरूपविज्ञानं साम्प्रतमस्ति । येन तेषामात्मनो अनित्यत्वमाशङ्कमानं प्रति तन्नित्यत्वमुपदिश्येत भगवद्दृष्टान्तेन । आत्मानित्यत्वशंका देहादावात्मत्वबुद्धिदशायामेवेति दृष्टान्ततया प्रतिपादयितुं भगवतोऽपि निर्देशः । योगवासिष्ठोक्तदिशा चिन्मात्रस्वरूपात्मैक्याभिप्रायेणैवेति बक्तव्यम् । तथा च जीवेश्वरभेदः स्वाभाविको नैव किन्तु कल्पित एवेति अत्राभिप्रायः ।

तथा चात्मसदानन्दः[1]—

‘देहाद्युपाधिभेदेन भेदोऽहं त्वमिमे त्विति
नाऽत्र स्वाभाविको भेदोऽप्यात्मनो विष्णुनेरितः ।।
त्वंपदार्थविशुद्ध्यर्थं भेदमुद्दिश्य लौकिकम् ।
आत्मनो नित्यताद्वारा वैलक्षण्यं शरीरतः ।।
शास्त्रस्योपक्रमे यस्मात्सिसाधयिषितं हरेः ।
उपदेश्योपदेशादिव्यवहारोऽस्ति कल्पितः ।
भेदस्तेनैव तत्सिद्धिर्न वास्तव इहेष्यते ।।”

एतेन औपाधिकभेदं स्वीकुर्वतामद्वैतिनां मते तत्वोपदेशसमये ‘अहं’ ‘त्वं’ ‘इमे’ इति भेदनिर्देशः व्यावहारिकः नानुपपन्नः । तथा च श्लोकेऽस्मिन् न स्वाभाविको जीवेश्वरभेदः किन्तु कल्पितो भेदोऽभिमतः ।

अज्ञानादेव कल्पितभेदव्यवहारः । कल्पितस्य कल्पितमितत्यजानता जीवेन तस्य सत्यत्वेन स्वीकारः । ईश्वरेण तु कल्पितं कल्पितत्वेन जानता तस्य सत्यत्वं कदापि नाङ्गीक्रियते । किन्तु औदासीन्येन व्यवहारे सत्यवत् मिथ्यामपि स्वीकर्तुं व्यवहर्तुं च प्रभवति । बालानां क्रीडावसरे लोष्टादिषु पित्रादिरूपेण व्यवहारो

---

१. भावप्रकाशः

दृश्यते । तेषां सन्तोषाय माता तन्मिथ्यात्वं जानन्त्यपि बालदृष्ट्यैव व्यवहरति सत्यत्वमिथ्यात्वौदासीन्येन । अन्ते च अवसरे प्राप्ते तन्मिथ्यात्वमुपदिशति बालाय । एवमेव आत्मज्ञानसम्पन्नोऽपि कल्पितभेदव्यवहारं कुर्वते देहात्मबुद्धिवशात्तन्मिथ्यात्वमनभिमन्यते शिष्याय उपदेशं कर्तु प्रभवति 'अहं' 'त्वम्' इत्यादिभेदनिर्देशैः । तेन तस्यात्मैक्यज्ञानहार्निन शंकनीया ।

विशिष्टाद्वैतिनामन्य आक्षेपः परमात्मनः स्वप्रतिविम्बानां जीवानामुपदेशमधिकृत्य । अयं त्वाक्षेपः श्रीमदानन्दतीर्थपक्षीयाणां न भवति । 'नित्यः सर्वगतः स्थाणु'[1] रित्यादौ तैः जीवस्याणोरपि सर्वगतत्वमीश्वरप्रतिविम्बत्वात् युज्यत इति स्वीकृतम् । तेषां मते प्रतिबिम्बेन साकं व्यवहारो नानुपपन्नः । भगवद्रामानुजमते जीवः परमात्मनः शरीरमेवेति सिद्धान्तः । सर्वपरमात्मनः स्वशरीरभूतेभ्यः जीवेभ्यः उपदेशो यदि घटते, किमपराद्धमद्वैतिनां परमात्मना ?

निवृत्ताज्ञाना अपि गुरवः प्रारब्धकर्मवशादुपदेष्टृत्वं स्वीकुर्वन्तोऽपि सर्वथा ब्रह्मभावमापन्ना इत्यत्र नास्ति संशयावकाशः । दुष्यन्तादिवेषधारिणा स्वस्वदुष्यन्तत्वमारोपितमिति जानताऽपि दुष्यन्तवद्व्यवहारः लोके दृश्यत एव ।

भगवद्रामानुजमतेऽपि प्रत्यगात्मस्वरूपज्ञानिन एवोपदेष्टारः । ते च भगवच्छरीरतयाऽऽत्मानमवगच्छन्ति । ते किमेतेन शरीरेण, उत शरीरान्तरेण उपदिशन्ति ? उभयथा न सामञ्जस्यमस्ति । स्थूलशरीरेण चेत् भगवदंशत्वात् नास्त्युपदेशावकाशः । मुक्तात्मरूपत्वात् सूक्ष्मशरीरेणेति चेत् के वा त इति कुतोऽवगन्तव्यम् ? यदि शास्त्रपरिशीलनेन स्वयमपरोक्षज्ञानरहिता अपि मुक्तकल्पास्तत्त्ववेदितारोऽत्र विवक्ष्यन्ते तर्हि अद्वैतवादेऽपि किमियं सरणिर्दण्डवारिता ? अद्वैतमते मुक्तावस्थायामहमर्थस्य न विनाशः, किन्तु अहमवस्थायाः बन्धस्यैव । बद्धस्य मुक्तिर्नाम न सर्वथा नाशः; बन्ध एव नश्यति ।

तत्तत्सम्प्रदायपक्षपातिभिः तत्तन्मतानुसारिणीं व्यवस्थामनुसन्धाय तत्तदाचार्यप्रवर्तितमार्गेणैव गमनं यावत्कर्मयोगभक्तियोगाधिकारं कर्तव्यम् । यावद् ब्रह्मलोकावाप्तिः केवलाद्वैतदृष्ट्याऽपि मतान्तरेष्विव भेदव्यवहारः उपदेशादिकं च सर्वमुपपन्नम् ।

'न त्वेवाहम्' इति पूर्वार्द्धेन इदानींतनजन्म नेदं प्रथमम्; किन्तु जन्मान्तरमपि पूर्वमासीदिति ज्ञापयति—

---

१. गी० २.२४

'मातापितृसहस्राणि पुत्रदारशतानि च ।
संसारेष्वनुभूतानि भान्ति भास्यन्ति चापरे ।।

हर्षस्थानसहस्राणि भयस्थानशतानि च ।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ।।

इति भारतसावित्रीप्रतिपादितोऽर्थः संगृह्यतेऽत्र[1] ।

उत्तरार्द्धगतं भाविजन्मसत्वं सूचयितुमुच्यते—

'देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ।।'[2] इति ।

मायाशबलितानामात्मनां नानात्वस्वीकारे नास्त्यद्वैतिनामपि विरोधः । मुक्तात्मनां विषये अहमर्थत्वं नास्ति । न तत्प्रत्ययभेदमात्रेण भेदः साधयितुं शक्यते । शरीरभेदेऽपि जन्मान्तरेषु आत्मभेदो न दृश्यत इति पूर्वश्लोकस्य विवक्षितम् । तादृशमात्मैक्यमेव द्रढयितुं दृष्टान्तदर्शनाय अयं श्लोकः । कौमारादिनानावस्थासु आत्मैकत्वं यथा तथैव जन्मान्तरेष्वपि इति दृष्टान्तेन वर्णयति ।

अथवा—मुक्तात्मनः मा नामास्ताम् उत्पत्तिविनाशौ । अन्येषामात्मनामुत्पत्तिर्विनाशश्च लोके दृश्यते । यद्यात्मा अमुक्तोऽपि नोत्पत्तिविनाशशाली 'न हिंस्यात् सर्वा भूतानि' इति निषेधशास्त्रं, ब्रह्महत्याया महापातकत्वं, तत्प्रायश्चित्तविधायकादिशास्त्रमन्यानि बहूनि शास्त्राणि निरर्थकानि स्युरिति शंकायामयं श्लोकः ।

प्रकृतशरीरवियोगशरीरान्तरसंयोगयोरेव मृतः जातः इति व्यवहारः । स्थूलशरीरवियोगेऽपि सूक्ष्मशरीरेण साकमेव स्वप्नादौ बाल्याद्यवस्थास्विव आत्मनः सत्वम् । स्थूलशरीरस्य वियोगसंयोगावववर्जनीयाविति वक्ष्यते । सूक्ष्मशरीरावच्छिन्नस्यात्मनो विनाशस्तु शस्त्रादिभिरसाध्यः । अन्येन केनाऽपि स न नाशयितुं शक्यते । स नित्यः । स्थूलशरीरस्य नाशोऽनिवार्य इति हेतोः शोकस्य नास्त्यवकाशः । अविनाश्यस्य सूक्ष्मशरीरावच्छिन्नस्य नाश एव न भविता । एवमुभयत्र शोकस्य नावसरः इत्यनेन प्रतिपाद्यते ।

———————

१. भारतसावित्री—XI.2–12
२. गी०, २.१३

देहिनो जीवस्य, देहे ममताभिमानपात्रे शरीरे बाल्याद्यवस्थापरिवर्तनेऽपि यथा आत्मा न परिवर्तते तथैव न नश्यति वा, तथा शरीरान्तरग्रहणेऽपि नात्मभेदः, चिन्मात्ररूपस्यात्मन ऐक्यात्। जाग्रदवस्थायामिव शरीरस्य बाल्याद्यवस्थान्तरप्राप्तावपि नास्त्यात्मभेद इति प्रत्यभिज्ञायते। तथैव स्वप्नाद्यवस्थासु मरणानन्तरं वा शरीरे भिन्नेऽपि आत्मनोऽभेद इति ज्ञायते। एवमन्ततो गत्वा स्थूलशरीरविनाशेऽपि आत्मनो न नाश इति ज्ञानेन शोकावसरो न भविता। 'न हिंस्यात् सर्वा भूतानि' इत्यादिशास्त्रेण द्वेषादिहेतुना अविधिपूर्वमाचरितं शरीरवियोगं शरीरनाशो वा निषिध्यते। युद्धं तु क्षत्रियाणां विहितः पन्थाः। 'पापमेवाश्रयेदस्मा'[1] निति युद्धादुपरतिर्न युक्ता।

'मम, तव, एतेषां जनाधिपानां' इति पूर्वश्लोके आत्मभेदं बहुत्वसूचकं गृहीत्वा तेषामविनाशित्वमुपपादयितुमस्मिन् श्लोके 'देहिनः' इति एकवचनेन निर्दिशति। किं बहुना। अत्र प्रकरणे सर्वत्र एकवचनप्रयोग एवात्मविषये दृश्यते शरीरविषये बहुवचनप्रयोगश्च। अविनाशि तु तद्विद्धि[2]; अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः[3]; य एनं वेत्ति हन्तारम्[4]; न जायते म्रियते वा[5]; तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही[6]; नैनं छिन्दन्ति शस्त्राणि[7] इत्यादौ।

अनेन आत्मैक्यमेव मनसि निधाय गीताचार्यैरेकवचनप्रयोगः आत्मविषये कृत इति ज्ञायते, शरीरविषये बहुवचनं च। उत्तरत्र 'कामात्मनः शब्दपराः'[8], 'ये मे मतमिदं नित्यमनुतिष्ठन्ति'[9] इत्यादौ कुत्रचिदात्मनो विषये बहुवचनप्रयोगः दृश्यत इति द्वैतिनः 'देहिनोऽस्मि'न्नित्यादि स्थलेषु जात्यभिप्रायेणैकवचननिर्देश

---

१. गी०, १.३६
२. सैव, २.१७
३. सैव, २.१८
४. सैव, २.१९
५. सैव, २.२०
६. सैव, २.२२
७. सैव, २.२३
८. सैव, २.४३
९. सैव, ३.३१

इति वदन्ति । 'देहिनः' इत्यत्र देहपदं कर्माधीनमिति भगवद्रामानुजानुयायिनः । कर्मफलानां भोगायतनभूतस्य शरीरस्यैव न तु मुक्तात्मनां लोकसंग्रहार्थ प्रारब्धोपचयार्थं चोद्दिष्टस्य शरीरस्य परामर्शः देहिपदेनेति रामानुजीयः सिद्धान्तः अद्वैतिनामपीष्टः ।

श्लोकोऽयमात्मन एकत्वं नित्यत्वं च प्रतिपादयन् पूर्वश्लोकेनान्वेतीति भगवत्पादमतम् । भगवद्रामानुजस्तु—यथा एकस्मिन् देहे बाल्याद्यवस्थाभेदेऽपि आत्मा नष्ट इति न शोचति तथैवान्यदेहप्राप्तावपि न शोचति बुद्धिमान् । नित्यानामात्मनाम् अनादिकर्मवशगानां बन्धनिवृत्तये शास्त्रविहितं वर्णाश्रमोचितं युद्धादि कर्म कर्तव्यमेव । तच्चानभिसंहितफलं करणीयम् । तादृश-कर्माचरणे अवर्जनीया मात्रास्पर्शाः क्षन्तव्याः इत्युत्तरश्लोकेनास्य सम्बन्धम-भिप्रेति । श्रीमन्मध्वमते देहातिरिक्तस्य देहिन एवाप्रसिद्धिमाशंक्य तत्साधनार्थं जन्मान्तरसाधनार्थं वाऽयं श्लोक इति विवृतम् । सर्वथा त्वात्मा शरीरातिरिक्तः साध्यते, यस्तु नित्य इति पूर्वश्लोके प्रतिपादितम् । एवं सति, उत्तरश्लोकद्वयं मिलित्वा 'अगतासु'पदेन विवक्षित आत्मा नित्य इति निष्कर्षः । शरीरान्तरेऽपि-स एवात्मेति कुतो निर्णयः ? जातमात्रस्य पूर्वसंस्कारवशात् स्तन्यपानादौ प्रवृत्तिदर्शनात्स एवात्मा शरीरान्तरेऽपीति निर्णेतुं शक्यते । इयं तु युक्तिः सर्वैः स्वीक्रियते ।

'मात्रास्पर्शास्तु कौन्तेय'[1] इति श्लोकः योगवासिष्ठे निर्वाणप्रकरणस्य पूर्वार्धे ५४ सर्गे विवृतः । सुखदुःखादिकं तत्कारणं शीतोष्णादि सर्वं मिथ्याभूत-स्यान्तःकरणस्य धर्मः नात्मानं स्पृशति । सुखदुःखे नात्मन इति मत्वा तितिक्षा कर्तव्येति प्रकृतश्लोकार्थः । 'आगमापायिनः' इति षष्ठ्यन्तेन पदेन अन्तःकरणा-देरेव ग्रहणम् । तेषामेव धर्मः सुखदुःखादि । आत्मधर्मत्वेन प्रतीतिस्तु भ्रम एव । एवं ज्ञानं तितिक्षाया हेतुः । तितिक्षां विना बन्धनाशो न सम्भवतीति श्लोकार्थः । कामादीनामन्तः करणधर्मत्वं श्रुतिसिद्धम् । 'प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान्'[2] इति गीतावाक्ये स्पष्टमिदम् । सुखदुःखादेर्मनोधर्मत्वं श्रीमदानन्दतीर्थैरन्यैरपि स्वीकृतम् । भीष्मादयोऽविनाशिनो यद्यपि, तथापि शस्त्रपातेन मन्निमित्तं तेषां दुःखं भविष्यति, अथवा तद्वियोगेन तेषां शरीरे

---

१. यो० वा०, नि० प्रकरण पू०, पृ० ९०३

२. गी०, २.५५

रक्तपातादिदर्शनेन वा ममैव दुःखं भविष्यति; तस्माद्युद्धादुपरम एव वरमिति योऽर्जुनस्याशयः तन्निरासार्थमयं श्लोकः । अत्र शीतोष्णयोः सुखदुःखयोश्च पृथक्-ग्रहणं क्रियते । यथा शीतोष्णे शरीरधर्मत्वात् नात्मनो धर्मौ, शरीरात्मनोः तादात्म्याध्यासेन आत्मधर्मवत् व्यवह्रियेते, तथा मनोधर्मे अपि सुखदुःखे आत्म-मनसोः तादात्म्याध्यासेन आत्मधर्मवद् व्यवह्रियेते इति ध्वनिः । शीतोष्णयो-रिष्टानिष्टत्वमनियतं, सुखदुःखयोस्तु नियतमिति कृत्वा तयोर्द्वन्द्वयोः पृथग्ग्रहण-मिति केचिन्मन्यन्ते । विषयेन्द्रियसंयोगे आत्मनोऽभिमान एव सुखदुःखादि-कारणम् । सुषुप्तौ तदभावात् न शीतोष्णयोस्सुखदुःखदत्वमिति सूचयितुं न शीतोष्णमात्रग्रहणमिति मध्वमतानुयायिनः । विषयेन्द्रियादावभिमानपरित्याग एव तितिक्षाहेतुरिति सिद्धम् । 'मात्रा' इति स्त्रीलिङ्गेन विषयणां निर्देशः, स्त्रीणामिव दर्शनमात्रेण व्यामोहकत्वमनर्थनिदानत्वं च सूचयितुम् । 'आगमा-पायिनः' इत्यत्र षष्ठ्यन्तेन व्याख्या योगवासिष्ठे, मधुसूदनसरस्वत्या सदानन्देन च स्वीकृता । भगवत्पादाः अन्ये तदनुयायिनः, भगवद्रामानुजाः श्रीमदानन्द-तीर्थादयश्च प्रथमान्तत्वेनैव तत्पदं व्याचक्षते । षष्ठ्यन्तेन व्याख्याने 'आगमापायिनः' 'अनित्या' इति पुनरुक्तिदोषो न भवतीति स्पष्टम् । प्रथमान्तग्रहणेऽपि सुखदुःखादेर्नित्यात्मधर्मत्वशंका नैव भविष्यति । ताच्छील्ये णिनि प्रत्ययान्तस्य तस्य प्रयोगेण क्षणकालावस्थायिनि तितिक्षा सुकरेति तदपि पदं सार्थकं, न पुनरुक्तिदोषः ।

फलतस्तु न कोऽपि विशेषः सर्वेषु मतेषु व्याख्यानेषु च । साक्षात्सुखदुःखा-देरेव आगमापायित्वमनित्यत्वं च वक्तव्यम् । सुखदुःखादिहेतूनां मात्रास्पर्शाना-मपि आगमापायित्वनिर्देशः सुखदुःखादेरागन्तुकत्वं, तेनैव कारणेन नात्मस्व-भावत्वमिति सूचयितुम् । सुखदुःखे अपि आत्मनो धर्मभूतज्ञानावस्थाविशेष एवेति वादः सर्वथानादरणीयः ।

पूर्वोक्तायास्तितिक्षायाः फलं ज्ञानं तद्द्वारा मोक्ष इति प्रतिपादयति उत्तर-श्लोकेन यथा—

यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥[1]

---

१ सैव, २.१५

यावत्तत्वज्ञानं यावन्मोक्षप्राप्तिर्वा तावत् स्ववर्णाश्रमधर्माणां युद्धादीनां कर्तव्यत्वं ज्ञापयति ।

संस्थिता स्पर्शमात्राख्या मात्रास्पर्शौ भ्रमात्मकः ।
समदुःखसुखो धीरः सोऽमृतत्वाय कल्पते ॥[1]

इत्यपि पूर्वोद्धृतयोगवासिष्ठश्लोकेनाऽस्य सम्बन्धः । स्पर्शानां विषयाणां, मात्राणामिन्द्रियाणां च आख्यानं सत्यताप्रतीतिः संस्थिता उपशान्ता इत्यन्वयः । इन्द्रियविषयभ्रमात्मको जीवः स्वीयं भ्रमं परित्यज्य तत्वदर्शी समदुःखसुखश्च भूत्वा अमृतत्वाय कल्पत इति योगवासिष्ठोक्तरीत्या श्लोकस्यास्याऽयमर्थो घटते—एते आगमापायितया मिथ्यात्वेन वा निर्णीता मात्रास्पर्शाः इन्द्रियाणि तद्भोग्यविषयाश्च यं पुरुषं जीवं न व्यथयन्ति स समदुःखसुखो भवति । इमे मिथ्यात्वेन आत्माऽसंस्पर्शितया वा तत्वदर्शिना अनुभूयन्ते, दूरं तस्मादपसरन्ति च विषयेन्द्रिययोः आत्मनः ममत्वं न विद्यते । एकेन विना इतरः न किञ्चित्कर्तुं प्रभवति । तस्मादुभावपि तस्मिन् व्यर्थौ । दुःखमनुपादेयं न केवलं तत्वज्ञानिनः किन्तु सर्वेषां दुःखं न पुरुषार्थः । तथैव वैषयिकं सुखमपि अमृतत्वप्राप्तये विरोधीति कृत्वा त्याज्यं भवति । दुःखे त्याज्यत्वं सुखे ग्राह्यत्वं च मात्रास्पर्शभ्रमात्मके जीवे संगच्छते । सुख-दुःखे केवलं द्वन्द्वशरीर-स्यैव, न तु तदसम्बद्धस्यात्मन इति विजानतो जीवस्य उभे अपि त्याज्ये एव । शरीरधर्माविति मत्वा सहते यावत्प्रारब्धकर्मनाशम् । अतस्त्वमपि हे पुरुषर्षभ ! शस्त्रपातादिक्रूरस्पर्शान् तज्जन्यान् राज्यलाभादिसुखान्यपि तृणाय मत्वा फलाभिसन्धिं विना युद्धं कुर्विति । अस्मिन् श्लोके पुरुषपदेन योगवासिष्ठदिशा मात्रास्पर्शात्मको जीवो विवक्ष्यते । श्रीमन्मध्वमते तु 'पुरि शरीरे शेत' इति व्युत्पत्या शरीरेणासंबद्ध इति व्याख्यातम् । राघवेन्द्रस्तु क्षेत्रज्ञ इति व्याचष्टे ।

अनन्तरश्लोकोऽपि मात्रास्पर्शानां मिथ्यात्वनिरूपणायेति योगवासिष्ठात् ज्ञायते ।

नासतो विद्यते भावः नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्वदर्शिभिः ॥[2]

---

१. यो० वा० निर्वाण प्र० पू० ५४-४
२. गी०, २.१६

अस्य श्लोकस्य विवरणं योगवासिष्ठस्य ५५ सर्गे दत्तमस्ति ।[1] आत्मा एक एव सत्यः । कार्यकारणरूपपरित्यागेन, कार्यकारणानुगतमधिष्ठानं चिन्मात्रमवशिष्यते । इदमेव सद् । इतरत् सर्वं सद्रूपेण प्रतीयमानं मिथ्यैव । इदं तु यावन्न तत्वज्ञानं तावन्न निश्चेतुं पार्यते । तथापि तत्त्वदर्शिनामुपदेशेन तत्तत्वं परोक्षतोऽपि ज्ञातुं शक्यते । एवं ज्ञाते मात्रास्पर्शानां तितिक्षा च कर्तुं शक्या । अत्र आत्मनः सत्यत्वस्य तदितरेषां मिथ्यात्वस्य च अनुसन्धानमेव प्रधान उपाय इति प्रतिपाद्यते । भगवत्पादतदनुयायिनां सर्वेषां तदनुसारेण व्याख्यानं दृश्यते । अत्र श्लोके 'असत्'[2] पदं योगवासिष्ठे मात्रास्पर्शादिप्रपञ्चजातमधिकृत्येति विवृतम् । ब्रह्मव्यतिरिक्तमनाद्यविद्याजनितं कार्यजातम् । 'सत्' पदं त्वधिष्ठानभूतचैतन्यमात्रमिति तत्रैव व्यक्तम् ।

'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्'[3]

इति श्रुत्यर्थ एवोपबृंहितोऽस्मिन् श्लोके ।

असतः—सद्रूपतया प्रतीयमानस्य सर्वस्य प्रपञ्चस्य, भावः—सत्ता, न नास्ति; प्रपञ्चस्याबाध्यत्वं नास्ति । ब्रह्मसाक्षात्कारेण निखिलः प्रपञ्चो बाधितो भवति । रज्जौ सर्पभ्रमे सति सर्पज्ञानं निश्चितमबाध्यमेव प्रतिभाति । किन्तु तद् ज्ञानं रज्जुतत्त्वसाक्षात्कारेण बाधितं भवति । यथा सर्पस्याबाधो नास्ति (बाधो भवति) तथाऽबाध्यत्वेन प्रतीयमानस्य प्रपञ्चस्यापि अबाधो नास्ति; बाधोऽवश्यं भवति । सद्रूपेण प्रतीयमानस्य प्रपञ्चस्यात्मज्ञानेन यदि बाधः तर्हि परस्पराध्यासात् प्रपञ्चे बाधिते तदधिष्ठानस्यात्मनः कथं न बाध इत्याशङ्कायां वदति 'नाभावो विद्यते सत' इति । सतोऽधिष्ठानस्य अभावः बाधो नास्ति । परस्पराध्यासो हि तदा वक्तुं शक्यते यदा सति जगतोऽध्यास इव जगति सतोऽप्यध्यासो यदि स्यात् । आत्मज्ञानेन जगतः सर्वतो नाशः । जगतः ज्ञानेन आत्मनः तिरोधानमेव न तु नाशः । इदं तिरोधानमध्यस्तस्य जगतोऽपगमं

---

१. यो० वा० निर्वाण प्र० ५५, पृ० ९०४-९०७

२. नासतो विद्यते भावो नाभावो विद्यते सतः
नास्त्येव सुखदुःखादि परमात्मास्ति सर्वगः ॥
तत्रैव पृ० ५४-७

३. छा० उ० ४.१-४

यावत्। तदपगमे अनावृतस्य जगतः स्फूर्तिर्भवति। अतः परस्पराध्यासो नास्त्यत्र येन प्रपञ्चे बाधिते अधिष्ठानस्यापि बाधा स्यात्। 'सन् घटः' इत्यादौ यावत्सत् प्रतीयते तावज्जगतः तदनुविद्धतया अप्रतीतिः। अतः सतो जगन्नाधिष्ठानम्। इदमेव परिणामिकार्यकारणविषये विशदतरं भाति। 'मृद्घटः' इति प्रतीतौ मृदो घटस्य च परस्परतादात्म्येऽपि मृदेव घटस्य कारणं, न तु घटो मृदः। विनाऽपि घटं मृदिति प्रतीतिः संभवति। एवमेव 'सन् घटः' इत्यत्र घटप्रतीत्या सह या सत्प्रतीतिः सैव घटाभावेऽपि 'सन् पटः' इत्यत्रोपलभ्यते। 'सदेव सौम्य इदमग्र आसीत्'[1] इति श्रुत्या प्रपञ्चं विनाऽपि, अनुत्पन्नेऽपि प्रपञ्चे, अधिष्ठानस्य सत्तामात्रस्य प्रतीतिः प्रमाणीक्रियते। अतः 'सत्' सर्वत्रानुवर्तते।

भगवद्रामानुजस्तु 'गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः' इत्यत्र यदात्मनो नित्यत्वं देहानां स्वाभाविकं नाशित्वं च शोकानिमित्तमुक्तं तदेवोपपादयितुं 'नासत'[2] इत्यादिश्लोकत्रयेण प्रकरणान्तरारम्भ इति मन्यते। यद्यप्यसत्पदेन तुच्छस्यैव ग्रहणं स्वरसं तथाप्यत्र सतश्चेत्यस्यानुषङ्गेण असतः सत इति योजनया देहस्य ग्रहणमिति वेदान्तदेशिकः।[3] विनाशिस्वभावस्येति यावत्। भावः सद्भावः, अविनाशिस्वभावो नास्ति। एवं सत आत्मनोऽभावः असद्भावः, विनाशिस्वभावोऽपि नास्ति। भगवद्रामानुजमते देहात्मनोर्विनाशाविनाशावेव विवक्षितावत्र; न तु सर्वस्य प्रपञ्चस्य मिथ्यात्वम्। सत्कार्यवादस्य प्रकृते नास्ति उपयोगः। शोकशान्त्यै यदुपयुक्तं तदेवाऽत्र विवक्षितं स्यात्। देहात्मविवेकाज्ञानेन शोकमोहोपहतस्यार्जुनस्य देहात्मविवेक एव बोद्धव्यः, न तु सर्वप्रपञ्चमिथ्यात्वम्।

श्रीमदानन्दतीर्थस्तु आत्मनित्यत्वे व्याप्तिस्थलं दर्शयितुमयं श्लोक इति मन्यते।[4] असतः—कारणभूतस्य प्रकृतेः, सतः—आत्मनश्च अभावो नास्ति।

---

१. छा० उ०, ६. २-१

२. नासतो विद्यते भावः नाभावो विद्यते सतः।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्वदर्शिभिः॥
गी०, २.१६

३. ता० च०, पृ० ४८

४. 'नित्य आत्मेत्युक्तं, किमात्यैव नित्य आहोस्विदन्यदपि ? अन्यदपि, तत्किमिति आह'
मा० भा०

प्रकृतिं दृष्टान्ततया स्वीकृत्य आत्मनोऽविनाशित्वं दर्शयितुमयं श्लोक इति व्याचष्टे। ईश्वरवज्जीवात्माऽपि नित्यः। एतन्मते देहस्य विनाशिस्वभाववर्णने नास्ति तात्पर्यमत्र। न तत् प्रकृते युज्यते। श्रीराघवेन्द्रः असच्छब्देन असाधुकर्म, सच्छब्देन साधुकर्म, भावाभावशब्दाभ्यां सुखदुःखे च निरूपिते इति वदति। सत्कर्मणा सुखम्, असत्कर्मणा दुःखं, इति स्थिते, युद्धकरणेन पापमेवाश्रयेदिति पार्थस्य चिन्ता न युक्ता। असत्पदेन रजस्तमोगुणयोः संबन्धः प्रकरणविरोधीव भाति।

श्रीवल्लभाचार्यः देहात्मनोर्विनाशाविनाशावत्र प्रतिपादिताविति मन्यते। तत्तत्सम्प्रदायानुसारेण देहात्मनोः, पापपुण्ययो, जीवेश्वरयोः प्रपञ्चब्रह्मणोर्वा, अन्तः विनाशित्वाविनाशित्वे, दुःखत्वसुखत्वे, अविनाशित्वमात्रं, मिथ्यात्वसत्यत्वे तत्वदर्शिभिः निर्णीयन्त इति उत्तरार्धस्यार्थः। श्रीराघवेन्द्रः 'अन्त' पदं संप्रदायपरं मन्यते।

अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्।
विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति॥
अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः।
अनाशिनोऽप्रमेयस्य तस्माद्युद्ध्यस्व भारत॥[1]

इदं श्लोकद्वयं प्रपञ्चात्मनोः मिथ्यात्वसत्यत्वे कारणनिर्देशपूर्वकं निरूपयतीत्यद्वैतिनः। आत्मा अव्यभिचारि सर्वजगद्व्यापक इति हेतोस्तस्य पारमार्थ्यम्। आत्मनोऽनुवर्तमानत्वं तस्य सत्त्वे हेतुः। सतोऽभावो नास्तीति युक्तम्। येन सदात्मना सर्वमिदं कार्यजातं ततं-व्याप्तं (अधिष्ठानतयाऽनुविद्धम्) तदविनाशि-अबाध्यं (परमार्थम्)। कुतस्तस्याविनाशित्वं ज्ञातमिति पृष्टे 'विनाशमव्ययस्यास्य' इत्युत्तरार्द्धेन विवरणम्। बाधो हि तस्यैव भवति यस्य विनाशिस्वभावः। 'न सोऽस्ति प्रत्ययो लोके यत्र सत्ता न भासते' इति न्यायेन सतः कुत्राऽपि न बाधः। न व्येतीत्यव्ययम्। तदेव व्येति यत् कार्य, कार्यत्वेन परिणामि वा। घटादि कार्यं नश्यति ध्वंसेन कार्यत्वात्। मृदादि परिणामिकारणं घटोत्पत्तौ नष्टं भवति। सदात्मा नैव कार्यं न च परिणामि; किन्तु विवर्तोपादानमात्रम्। अत आत्मा अव्ययः। यस्य नोत्पत्तिर्न विकारो न वा परिणामप्रचयथौ सोऽव्ययः। सर्वविशेषापगमेऽपि सर्वोपाधि-

---

१. गी०, २.१७-१८

नाशेऽपि सद्रूपमवशिष्यते । एवं सामान्यतः सदसतोः सत्यत्वमिथ्यात्वे प्रतिपाद्य विशेषतोऽर्जुनस्य शोकनिरसनप्रसङ्गमवलम्ब्य वदति 'अन्तवन्त इमे' इत्यादि । सदेकमेवाखण्डमव्ययम् इति वक्तव्ये, नश्वराणां देहानां विचारः प्रकृतं भीष्मादि-वधपरं संशयं निरसितुं क्रियते । 'शरीरिणः' इत्येकवचनं, 'देहा' इति बहुवचनं चात्मैक्यद्योतनायेति पूर्वमेवोक्तम् । तेन सत्यं वस्त्वेकमेव भवितुमर्हति असत्यानि तु बहूनीति सिद्ध्यति । 'अप्रमेयं' नाम इदमिति ज्ञानागोचरमित्यर्थः । यद्यद्विनाशि तत्तत्प्रमातुः चैतन्यस्याध्यस्ततया 'इदम्' इति ज्ञानविषय एव दृश्यते । आत्मा तु तादृशज्ञानगोचरो न भवति; इदन्तया, इयन्तया, ईदृक्तया वा न निर्देश्यः । तस्मात् अप्रमेयः । एवं सति तादृशात्मविनाशभीत्या युद्धादु-परमोऽनुचित इति युद्धाभ्यनुज्ञानमेव विवक्षितमत्र । संविद्रूप आत्मा स्वयं संविद्विषयो न भवति स्वप्रकाशत्वात् । मतान्तरेषु यत्रात्मनोऽनुभाव्यत्वमेव स्वीक्रियते तत्र तत्पदमन्यथैव व्याख्येयम् ।

भगवद्रामानुजस्तु येनात्मतत्त्वेन अणुपरिमाणेनाऽपि विकसितावस्थायां धर्मभूतज्ञानस्वरूपेण सर्वत्र व्याप्तं तदतिसूक्ष्मं सर्वगतमात्मस्वरूपं न विनाश्यमिति व्याख्याति । शस्त्रादि यद् आत्मनाशकं मन्यते तस्याप्यन्तरात्मा वर्तत इति न तेन शस्त्रेणात्मनो विनाशः । अद्वैतमते ईश्वरः आत्मनो नाशको न भवितुमर्हति स्वशरीरत्वात् । यद्यप्यात्मा विमर्शनवेलायां प्रमेयः तथापि सर्वदा प्रमातृत्वेनैव उपलभ्यते । अतोऽप्रमेयपदेन प्रमातृरूपं विवक्ष्यते । देहात्मनोर्विलक्षणत्वात् तयोरन्योन्याध्यासेनैव आत्मनि विनाशशंका । तेन युद्धादुपरतिर्न युक्तेति युद्ध-प्रवृत्तौ योजयितुं 'तस्माद्युध्यस्व' इति ।

श्रीमन्मध्वमते यद्यद्देशतोऽनन्तं व्यापकं तत्सर्वं नित्यम् इति भगवतो नित्यत्वे व्याप्तिप्रदर्शनमनेन श्लोकेनेति व्याख्यातम् । अणुपरिमाणस्य आत्मनो व्यापकत्वमीश्वरप्रतिबिम्बत्वादेव । बिम्बोपाधेरसान्निध्येऽपि जीवात्मनो न नाशः । अत्र ईश्वरो बिम्बः, जीवः प्रतिबिम्बः, शरीरमुपाधिः कथमुपाधिनाशेऽपि प्रतिबिम्बस्य न नाश इत्याकाङ्क्षायां वदति 'अन्तवन्त इमे देहा' इति । अनेन जीवस्योपाधिभूतो देहः नायं परिदृश्यमानः स्थूलदेहः, किन्त्वन्य एव नित्यो देहः । दृश्यमानदेहस्य नाशेऽपि जीवस्य नित्यत्वं न हीयते । अत एवोक्तं 'शरीरिणो नित्यस्य इमे देहाः' इति । अत्र शरीरिण इत्येकवचनं प्रतिबिम्बत्वेनैकत्वमादाय । न तावता आत्मभेदविरोधः । देहानामन्तवत्वेऽपि देहिनो नित्यत्ववर्णनेन जीवेश्वरयोर्वैलक्षण्यं सूच्यते । उभे अपि नित्ये इति खलू-क्तम् । कथं वैलक्षण्यमिति चेदुच्यते—

अनित्यत्वं. देहहानिर्दुःखप्राप्तिरपूर्णता ।
नाशश्चतुर्विधः प्रोक्तस्तदभावो हरेर्मतः ॥[1] इति

चतुर्विधनाशाभावः ईश्वरस्यैव । जीवस्य केवलमनित्यत्वरूपनाशाभावः । अन्ये त्रिविधा नाशा जीवस्य सन्त्येव । अस्मिन् मते 'अप्रमेयस्येति पदस्य अपरिच्छिन्नस्येत्यर्थः, न त्वनुभाव्यस्येति—

य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥
न जायते म्रियते वा कदाचि—
न्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥[2]

भगवता उपदेक्ष्यमाणः अनासक्तियोगः सारतो योगवासिष्ठे निर्वाणप्रकरणे[3] संगृहीतः । अत्र अनयोः श्लोकयोरुद्धारः कृतः, किन्तु गीतादृतस्य क्रमस्य वैपरीत्यं दृश्यते । कठोपनिषदि[4] द्वौ मन्त्रावेतत्समानार्थकौ योगवासिष्ठादृतक्रमेणैव

---

१. यद्यपि नित्यत्वं जीवस्याप्यस्ति तथापि सर्वप्रकारेणाविनाशित्वं विष्णोरेवेति 'तु' शब्दः । 'अनित्यत्वं···हरेर्मतः' इति महावराहे ।
गीतातात्पर्यनिर्णयः, २.१२ ।

२. गी०, २. १९, २०

३. तमर्जुनाभिधं देहं प्राप्तकार्यैकसिद्धये ।
हरिर्बुद्धेन देहेन बोधयिष्यति राघव ॥
न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥
य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥
अनन्तस्यैकरूपस्य सतः सूक्ष्मस्य खादपि ।
आत्मनः परमेशस्य किं कथं केन नश्यति ॥
योः वा०, निर्वाण प्र० पू० ६.५२, पृ० ८९७-९८

४, क० उ०, २. १८, १९

आम्नातौ । तत्र 'येयं प्रेते विचिकित्सा मनुष्ये, अस्तीत्येके नायमस्तीति चैके । एतद्विद्यामनुशिष्टस्त्वयाऽहं, वराणामेष वरस्तृतीयः ॥'[1] इति मृत्युं प्रति नाचिकेतसः प्रश्नः । स एष प्रसङ्गः अद्वैताचार्योक्तदिशा प्रत्यगभिन्नपरमात्मस्वरूपमेव आत्मतत्वमिति व्यवस्थापयति । श्रीमद्रामानुजादिमते तु मुक्तस्याप्यन्तर्यामी वर्तत इति निरूपितम् ।

काठके गीताश्लोकयोः समानार्थाभ्यां मन्त्राभ्यां शुद्धं प्रत्यगात्मस्वरूपमेव विविच्यत इत्यत्र शङ्कररामानुजयोर्न विवादः । किन्त्वियानेव विशेषः—अद्वैतमते स एव परमात्मेति मन्यते; श्रीमद्रामानुजमते स मुक्तात्मा यस्यापि नियामकः परमात्मा ।

एवं शुद्धं प्रत्यगात्मानं शरीराद्विविक्तम् असङ्गं यं हन्तारं वेत्ति स न हननक्रियायाः कर्त्ता । कर्तृत्वमेव तस्य नास्ति, प्रकृतेरेव कर्तृत्वात् । हतमिति यं मन्यते तदप्यसाधु एवं मन्वानावुभावपि शुद्धस्य प्रत्यगात्मस्वरूपस्य अनभिज्ञौ । अत्र 'यश्चैनं मन्यते हतं' सोप्यज्ञः इति यदुक्तं तदेव द्वितीयश्लोकेन हेतुपूर्वं निरूप्यते । अयमात्मा न म्रियते । कुतः ? यतो न जायते । यो जायत इति लोके व्यपदिश्यते तस्यैव म्रियत इत्यपि व्यपदेशः । अयं न म्रियत इत्यत्र हेतुमाह—'नायं भूत्वा भविता वा न भूयः' इति । अयं भूत्वा पुनर्भविता नेति एका योजना । भविताशब्दस्यावृत्या 'न भविताऽपि' इति योजनान्तरम् । अयमभूत्वा भविताऽपि नेति भगवत्पादादृता योजना । अत्र उत्पत्तिनिषेधोऽपि सिद्ध्यति । द्वयोरपि नञोः द्वितीयपादे अन्वयः । श्रीमद्रामानुजमते—अयं कल्पादौ भूत्वा पुनः कल्पान्तरे न भवितेति न—इति योजना । ब्रह्मानन्दगिरिरपि इमामेव स्वीकरोति । श्रीमदानन्दतीर्थस्तु 'नायं भूत्वा'इति द्वितीयपादगत-नशब्दस्य पूर्वत्र 'न म्रियते वा' इत्यन्वयं स्वीकरोति । श्रीवल्लभाचार्योऽपि तदेवानुसरति । 'भूत्वा अभविता' इति पदच्छेदो भगवत्पादमत एव । पैशाचभाष्ये नायं भूत्वेति न शब्दस्य पूर्वेणान्वयः । भूत्वा भविता नेत्यत्र श्रीमद्रामानुजसरणिं स्वीकृत्य, 'भूत्वा उत्पत्तिक्रियां प्राप्य, भूयो न भविता—न परिणमत इति परिणामरूपावस्थान्तरमत्र निषिद्ध्यत इति निरूप्यते । गूढार्थदीपिकाभाष्योत्कर्षदीपिके च भगवत्पादमनुसरतः । 'अयं भूत्वा अभविता न' तथा पादस्यास्य आवृत्या 'अयं न भूत्वा पुनर्भविता न' इति योजनाद्वयं स्वीकुर्वतः । अयमेव

---

१. तत्रैव १.२०

निष्कर्ष: यद्भगवत्पादानां योजनायां न जायते न म्रियते चेत्युभयत्र द्वितीयपादे हेतूपन्यासः । अन्येषां मते द्वितीयपादेन परिणामरूपं विकारान्तरं निषिद्ध्यते । शाङ्करमते विकाराणां पृथङ्निषेधस्य आवश्यकता नास्ति । तत्र श्लोकस्थैरन्यैः शब्दैरेव सर्वेषां विकाराणां निषेधस्सिद्धः । 'पुराण' इति वृद्धिरूपविकारनिषेधः, 'शाश्वत' इति अपक्षयलक्षणात्मको विकारो निषेधितः, 'न हन्यत' इति विपरिणामलक्षणविकारनिषेध इति । श्रीमदानन्दतीर्थस्तु 'अजो नित्य' इत्यादिना तादृशेश्वरसारूप्यं बोध्यत इति मन्यते । श्रीमद्रामानुजस्तु 'अजो नित्य' इति पूर्वोक्तानुवादः, 'पुराणः शाश्वत' इति प्रलयावस्थायां सूक्ष्मपरिणामनिरास इति मन्यते । पैशाचभाष्ये अजनित्यशब्दाभ्यां वृद्ध्यपक्षययोर्निषेधः, शाश्वतशब्देन विपरिणामनिषेधश्चेति उक्तम् । सर्वथा तु अविक्रियस्यात्मस्वरूपस्य निरूपणमेव विवक्ष्यतेऽत्र । पुराणपदं पुरापि नवमिति बहुभिर्व्याख्यातम् । श्रीमदानन्दतीर्थस्तु जननमरणादिव्यवहारः शरीरसंबन्धप्रयुक्त इति बोधयितुं 'पुरं शरीरमणति' इति तत्पदं व्युत्पादयति । तदेवमविक्रियमात्मतत्वं कठोपनिषदि योगवासिष्ठे च निरूपितमेव अत्राऽपि प्रतिपादितमिति वस्तुस्थितिः ।

वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ।।[1]

योगवासिष्ठे उपशमप्रकरणे आत्मविज्ञाने सर्वबन्धविनिर्मोकं सर्वकर्मबन्धनिर्वृत्तिं च निरूप्योच्यते—

त्वयि सर्वमिदं प्रोतं जगत्स्थावरजङ्गमम् ।
बोधे नित्योदिते शुद्धे सूत्रे मणिगणा इव ।।
न जायसे न म्रियसे त्वमजः पुरुषो विराट् ।[2] इति ।

अनेन जननमरणादिविकाराणां भ्रान्तिमात्रत्वं प्रतिपादितम् । भ्रान्तिनिवृत्तौ सर्वकर्मसन्यास इति जीवन्मुक्ततैव प्रतिपाद्यते । अयमेवार्थोऽत्रापि 'कं घातयति हन्ति कम्' इति सर्वकर्मनिवृत्तिः विवक्ष्यते । हननक्रिया उपलक्षणतया स्वीकृता । ज्ञातव्यश्चात्मा; कथं ज्ञातव्य इति प्रश्ने—अविनाशि (अन्त्यविकार-विरहितः) नित्यः (परिणामरहितः); अजः (आद्यविकारशून्यः), तस्मादेव कारणा-

---

१. गी०, २.२१

२. यो० वा० उपशम प्र० २९. ४७, ४८

त्सत्तारूपद्वितीयविकाररहितः, अव्ययः (अपक्षयविकाररहितः), केवलचिन्मात्रस्वरूप इति। एवमात्मानं स्वदेहस्थं देहान्तरस्थितं च जानन् कं वा विकारमुद्दिश्य शस्त्रप्रयोगं करिष्यति, कथं वा करिष्यति निष्क्रियत्वात्, कारयिष्यति वा निर्विकारत्वात्। यावच्छरीराभिमानं यावच्चाज्ञावस्था तावत्कर्माधिकारः, न तु ततः परम्। प्रत्यक्षादिव्यवहाराणां लौकिकानां वैदिकानां च विधिप्रतिषेधपराणां शास्त्राणां च अविद्यावद्विषयत्वम्। कर्मयोगप्रसङ्गे भगवत्पादैरिदमेव विस्तरेणोक्तम्। 'त्यागेनैके अमृतत्वमानशुः'[1] इति श्रुत्या कर्मत्यागेनैव मोक्ष इति स्थिते 'तस्माद्युद्ध्यस्व भारत!' इति कथं कर्मोपन्यासः, इति शंकानिरासप्रसङ्गे, एवंरूपाणामात्मविज्ञानिनामेव त्यागेऽधिकारो न तु ज्ञानहीनानामिति वक्ष्यते। प्रत्यगात्मज्ञानं प्राप्तः कोऽपि कर्तृत्वं करणत्वं कारयितृत्वं वा न स्वीकरोति। अजं नित्यमव्ययमविनाशिनं चात्मानं यो वेद सः कं कथं वा हन्ति घातयति वेति श्लोकार्थः। अन्येषां दृष्ट्या सशरीरोऽपि ज्ञानी आत्मानं अशरीरं मन्यते; कर्तृत्वाभिमानरहितः सः कर्मण्यनधिकारी भवति।

वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि।
तथा शरीराणि विहाय जीर्णा—
न्यन्यानि संयाति नवानि देही ॥[2]

पूर्वश्लोकेन कर्तृत्वभोक्तृत्वाभिमानयोरभावेऽपि शरीरविश्लेषजनितस्य शोकस्य कथं परिहार इति वर्ण्यतेऽनेन श्लोकेन। शरीरवियोगो हर्षहेतुर्महोत्सवः। न तत्र दुःखस्यावसर इति योगवासिष्ठे स्पष्टमुच्यते।[3] अयमेवार्थः सोदाहरणं निरूप्यते श्लोकेनानेन। वस्त्राणि यथा शरीरस्यावरणम्, एवमेव शरीरमात्मन

---

१. कौ० उ०, २
२. गी०, २, २२
३. देहाद् देहान्तरप्राप्तौ नव एव महोत्सवः।
मरणात्मनि किं मूढाः हर्षस्थाने विषीदतः॥
यो० वा० निर्वाण प्र० उ० १०२-२२
मृतिर्नाशो हि देहस्य सा मृतिः परमं सुखम्।
मृतस्य देहलाभश्चेत् नव एव तदुत्सवः॥
तत्रैव, १०२.२५

आवरणं स्वकल्पितम् । जीर्णवस्त्रदर्शनेनेव जीर्णशरीरदर्शनेनऽऽत्मा दुःखमनुभवति । नवतरं कल्याणशरीरमवाप्तुं हेतुभूतं मरणं सुखोदर्कमेव । यथा वासांसि कालवशात् स्वभावतो वा जीर्णानि भवन्ति तथा शरीरजीर्णत्वमपि न पुरुषकृतम् । अतः शरीरविश्लेषोऽपरिहार्यः, ततो न शोचनीयः। युद्धे मृतानां यूनां सामान्यदृष्ट्या यद्यपि न जीर्णानि शरीराणि तथापि रणरङ्गे मरणात् यद्दिव्यं शरीरं प्राप्यते तस्य पुरः वर्तमानस्य शरीरस्य जीर्णत्वं सिद्धं भवति । अतो भीष्मादिशरीरवियोगो भवतीति कृत्वा मूर्च्छाकल्पस्य शोकस्य नास्त्यवकाश इति भावः । मास्तु नाम कल्याणतरं शरीरम् । भविष्यच्छरीरं तु स्वकर्मायत्तम् । तत्राऽपि न तेषां स्वातन्त्र्यम्, यथा वस्त्रग्रहणे वर्तते । स्वेच्छानवीनत्वाच्छरीरान्तरस्य अनिवार्येऽर्थे को वा मन्दधीः दुःखमनुभवति । कौमाराद्यवस्थावत् प्राकृतशरीरान्तरग्रहणमेव युद्धे मरणानन्तरं भविष्यतीति किमत्र शरीरत्यागेन इति यावच्छवित एतच्छरीररक्षणमेव परमो धर्म इति शंका निरस्यतेऽनेन । दिव्यशरीरप्राप्तिलोभेनापि स्ववर्णोचित युद्धाचरणमेव युक्तमिति निरूपणार्थञ्चाऽयं श्लोकः—

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ।।
अच्छेद्योऽयमदाह्योयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ।।[1]

इमौ श्लोकौ चिन्मात्रस्याऽत्मन अजरामरत्वं उत्पत्यादिविकारराहित्यं व वर्णयित्वा आदिविकारराहित्यं च बोधयतः । शरीरस्यैव विच्छेद्यत्वादिकं नाऽत्मनः इति 'न हन्यते हन्यमाने शरीरे'[2] इत्युक्तरीत्यैव बोधयतः । यथा विषमेव विषं जरयति तथा भौतिकैः शस्त्रादिभिः भौतिकमेव नाशयितुं शक्यते न तदन्यम् । कुतोऽच्छेद्यत्वादिरिति तुरीयार्धेन द्योतयति 'नित्यः' इत्यादिना। निन्यः नाम अविनाशी । न ह्यविनाशी छेद्यो भवति । सर्वगतत्वमपि तत्र हेतुः आकाशवत् । स्थाणुः—अविकारी । ततोऽप्यच्छेद्यता । सनातनः—अनादिः । अनेन अनन्तत्वमपि विवक्ष्यते । भगवत्पादाः, पैशाचभाष्यं, भाष्योत्कर्षदीपिका च

———

१. गी०, २. २३, २४
२. सैव, २. २०

अच्छेद्यत्वादिना नित्यत्वं; नित्यत्वात्सर्वगतत्वं; सर्वगतत्वात्स्थाणुत्वं, स्थाणुत्वादचलत्वमचलत्वात् सनातनत्वमिति व्याचक्षते ।

भगवद्रामानुजमते अणोरपि जीवस्य सर्वगतत्वं धर्मभूतज्ञानविकासद्वारा । अतः शुद्धचैतन्यस्य सर्वगतत्वेन नास्य विरोधः । श्रीमदानन्दतीर्थमते तु सर्वगतत्वादिकं तादृशेश्वररसरूपत्वेन । सर्वगतस्थ—अणुः इति पदच्छेदे सर्वगतस्थ इति समस्तपदस्वीकारे सर्वगते परमात्मनि नियम्यतया स्थितः अणुश्चेति विभज्य स्वीयः सिद्धान्तः समर्थनीय इति श्रीराघवेन्द्रः ।

सर्वथा तु जीवात्मा सर्वविकारातीत इति तन्नाशो न भवतीति शोकवेगो न युक्त इति मुख्यं लक्ष्यं सर्वैरङ्गीक्रियते—

अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥[1]

आत्मानित्यत्वमाशङ्क्य शोकावेशो न युक्त इत्युपदेशसंदर्भस्य उपसंहारोऽत्र श्लोके । आत्मनो अच्छेद्यत्वादौ नित्यत्वादिवत् अव्यक्तत्वादीन्यपि कारणानि । यच्छेद्यं तत्प्रत्यक्षादिप्रमाणगम्यं भवति । जीवात्मा तु शुद्धो, न प्रत्यक्षादिप्रमाणगम्यः । शुद्धः प्रत्यगात्मा योगिनां योगमहिम्नाऽपि इदमित्थमिति न निर्णेयः । अमुमेवार्थं

यस्या मतं तस्य मतं मतं यस्य न वेद सः ।
अविज्ञातं विजानतां विज्ञातमविजानताम् ॥[2]

इति श्रुतिरुद्घोषयति । अत एवाविकार्योऽपि । आत्मानमधिकृत्य शस्त्रपातादिभिर्विकारलेशोऽपि भविष्यतीति मत्वा शोचनं न युक्तम् । अत एव पूर्वमुक्तम् 'अशोच्यानन्वशोचस्त्वम्' इति । योगवासिष्ठे अमुमेवार्थं विशदीकरोति ।[3]

---

१. सैव, २.२५

२. के० उ०, २, ३

३. तदाऽनन्तरगानन्यान् प्राणान् निकटसंस्थितान् ।
बन्धूनतीतान् सुबहून् कस्मात्त्वं नानुशोचसि ॥
पुरा भूत्वाऽद्य भूत्वा च भूयश्चेन्न भविष्यति
तथापि क्षीणं संसारं किमर्थमनुशोचसि ॥
यो० वा० उपशम० प्र० १०-३७, ३८

अत्र 'अव्यक्तोऽयम्' 'अचिन्त्योऽयम्' इत्यादिपदैः 'ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते'[१] इति द्वादशाध्यायगतश्लोकस्य प्रत्यभिज्ञानं भवति । मुण्डकोपनिषदि विवृतायाः पराविद्यायाः सम्बन्धोऽपि घटते ।[२]

अतोऽत्र तत्पदार्थ एव विचारित इति सिद्धम् । तथापि श्रीमदानन्दतीर्थमते ईश्वरसारूप्येण 'सर्वगता'दिपदानां जीवपरत्वम् । तस्मात् तत्पदलक्ष्यार्थभिदादत्र तेन रूपेणोपदेश इति न विरोधः । भगवद्रामानुजस्तु उभयत्र शुद्धप्रत्यगात्मपरतां स्वीकरोति । शोधितस्य त्वंपदार्थस्य अथवा तत्पदार्थस्य अथवा उभयरूपस्येति प्रकारत्रयेऽपि अनयोः श्लोकयोः योजना घटते । अत्र अव्यक्तः— अप्रत्यक्षः । अत एवाचिन्त्योऽनुमानेन न गम्य इति भगवत्पादादयः । व्यक्तं स्थूलशरीरं तदन्योऽव्यक्तः । चिन्त्यं लिङ्गशरीरं तद्भिन्नोऽचिन्त्यः । विकार्यं कारणशरीरं तद्भिन्नमविकार्यमिति नीलकण्ठः । अव्यक्तः—अहं ममाकारेणावेद्यः लिङ्गशरीरस्थः, अचिन्त्यः प्रकृतिभिन्नश्चेति शङ्करानन्दः । तेनाहमर्थ एवात्मनो न मुख्यं लक्षणम् । तस्यापि मिथ्यात्वमेव सूच्यते । अहमर्थभूतस्यात्मनो नाशो भवितेति शोकस्य नास्त्यवसरः ।

अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथापि त्वं महाबाहो नैवं शोचितुमर्हसि ॥
जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥[३]

इदं श्लोकद्वयमात्मनो ऽनित्यत्वं जननमरणं वा व्यवहारार्थं स्वीकृत्यैव प्रवृत्तमिति सर्वमतानुयायिनः अङ्गीकुर्वन्ति । देहातिरिक्तः देहेन साकं जायते तत्तत्कर्मवशेन देहेन साकं नश्यति इति जैनसिद्धान्तमनुसृत्य अयं श्लोक इति भगवत्पादानुयायिनः मधुसूदनसरस्वती - शंकरानन्द - श्रीधर - भाष्योत्कर्षदीपिकाकारादयो मन्यन्ते । 'नित्यजातं,' 'नित्यमृतम्'इत्यत्र विषयजातम्' अवश्यमृतमिति व्याख्यान्ति । 'यदि' इत्यर्थे 'अथ' शब्द इत्यपि मन्यन्ते । यद्येनमात्मानं शरीर-

---

१. गी०, १२, ३
२. 'अथ परा यया तदक्षरमधिगम्यते । यदेदद्रेश्यमग्राह्यम्'
मु० उ० १, १-५ ,६
३. गी०, २.२६, २७

परिमाणं शरीरेण साकं जातं मृतं च मन्यसे, तथापि शोचितुं नार्हसि। यस्माज्जातस्य ध्रुवो मृत्युः, मृतस्य चोत्पत्तिर्ध्रुवा, तस्मादपरिहार्ये जननमरणे इति हेतोः शोकस्य नावसरः।

श्रीमदानन्दतीर्थस्तु, आत्मनः स्वरूपतो नित्यत्वेऽपि शरीरसंयोगवियोगाभ्यां वैदिकमतरीत्याऽपि जन्ममरणे नियते इति यदि मन्यसे तथापि जातस्य ध्रुवो मृत्युर्मृतस्य च ध्रुवं जन्म; ततो न शोचितुमर्हसीति व्याचक्षते। नीलकण्ठोऽपि प्रायशः इमां व्याख्यां स्वीकरोति।

भगवद्रामानुजः चार्वाकमतमेवावलम्ब्य 'शरीरमेव आत्मेति मन्यसे तथाऽपि न शोकावसर' इति विवृणोति। नित्यं जायमानं नित्यं म्रियमाणं शरीरमेव आत्मेति मत्वापि न शोचितुमर्हसि। हि—यतः, जातस्य शरीरस्य—शरीरात्मतां गतस्य भूतसंघातस्य मृत्युर्ध्रुवः मृतस्य-भूतात्मतां प्राप्तस्य पुनः शरीरात्मताप्राप्तिर्ध्रुवा। 'अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत'[1] इत्यादिवक्ष्यमाणरीत्या न शोकस्य प्रसक्तिः। उत्पत्त्यवस्थां प्राप्तस्य द्रव्यस्य तद्विरोध्यवस्थाप्राप्तिः नाशः पूर्वावस्थाप्राप्तिरुत्पत्तिरिति परिणामशृङ्खला। ब्रह्मानन्दगिरिरस्य श्लोकस्य व्याख्यायां वदति—जातस्य हि ध्रुवो मृत्युरित्यत्र ध्रुवं जन्म मृतस्य चेत्यस्य अनन्वयं चार्वाकमतरीत्याऽसंभवं मत्वा तत्र देहस्यैवात्मत्वादात्मनो जननमरणे स्त इत्येकं मतम्; देहातिरिक्तो नित्य एवात्मेति श्रुतिप्रामाण्यात्, तस्यैव हि देहसंयोगवियोगात्मके जन्ममरणे अपि स्तः, शास्त्रप्रामाण्यादित्यपर मतम्। तत्राद्यमतनिरासाय 'जातस्य हि ध्रुवो मृत्यु' रित्येतावन्मात्रम्। द्वितीयमतनिरासाय 'ध्रुवं जन्म मृतस्य च', चकारात् जातस्य ध्रुवो मृत्युरपीति व्याचष्टे। तत्र श्रीमदानन्दतीर्थेन स्वीकृतः पक्ष एवास्य द्वितीयः पक्षः। चार्वाकमतं विवक्षितमिति स्वीकुर्वता, भगवद्रामानुजभाष्यरीत्यैव व्याख्यानं वरं स्यात्। क्षणिकविज्ञानपक्षमाश्रित्य यदि श्लोकद्वयस्य विवेचनं क्रियते, तर्हि 'ध्रुवं जन्म मृतस्य चे'त्यत्र अनन्वयदोषोऽवश्यं भवति। सर्वथा तु शरीरविश्लेषशरीरान्तरसंयोगावेव जननमरण इति वैदिकमतं स्वीकृत्य व्याख्यानं वरम्। नित्यस्याप्यात्मनो जननमरणे देहात्माऽविवेकदशायां यद्यपि संभाव्ये तथाऽपि न शोच्ये इति प्रतिपादयितुं वेदबाह्यानामर्हतादिमतानां सिद्धान्ताः स्वीकृताः।

---

१. सैव, २. २४

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥[१]

अयं श्लोकः शरीरातिरिक्त आत्माऽस्तीति वादमवलम्ब्य प्रवृत्तः। देहवियोगस्यावर्जनीयत्वेऽपि भीष्मादिशरीरनाशो दुःसह इति शङ्कां परिहरति। इदं शरीरं उत्पत्तेः पूर्वं येन रूपेणासीत् (सूक्ष्मशरीररूपेण) तद्रूपमेव पुनरपि मरणानन्तरं प्राप्स्यतीति हेतोर्न शोकावसरः। मध्ये दृश्यमानरूपमेव कल्पितम्। आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा। स्वप्ने इन्द्रजाले वा प्रतिभासमानानि न परमार्थानि। तथा स्थूलशरीरमपि प्रतिभासमात्रमिति मधुसूदनसरस्वतीप्रभृतयो निरूपयन्ति। श्रीमद्रामानुजस्तु यत्पूर्वश्लोकेऽवस्थाविशेषावेव उत्पत्तिविनाशाविति प्रतिपादितं तस्य प्रकारविशेष एवात्रोच्यत इति वदति। अत्र 'परिदेवना का' इति किं शब्द आक्षेपार्थे प्रयुक्तः।

आश्चर्यवत्पश्यति कश्चिदेन-
माश्चर्यवद्वदति तथैव चान्यः।
आश्चर्यवच्चैनमन्यः शृणोति
श्रुत्वाप्येनं वेद न चैव कश्चित् ॥[१]

वेदबाह्यमतानुसारेणापि शोको न युक्त इति प्रतिपादितम्। वस्तुतोऽहमिति प्रतीयमानेऽप्यात्मनि वेदबाह्यानां वैदिकमतेषु भिन्न-भिन्नदर्शनपक्षपातिनां च विप्रतिपत्तयो दृश्यन्ते। अतो दुर्विज्ञेयोऽयमात्मा, वेदान्तविचारेण तत्वज्ञानिनामुपदेशेन च कथञ्चिद् ज्ञातुं शक्यते। वाङ्मनसोरगोचरोऽयं नान्यस्य अन्येन इदन्तया उपदेष्टुं शक्यते। किन्तु 'स वा एष पुरुषोऽन्नरसमय'[२]; इति प्रथमं शरीरमुखेन; 'ततोऽन्योऽन्तर आत्मा प्राणमयः'[३]; 'ततोऽन्योऽन्तर आत्मा मनोमयः'[४]; 'ततोऽन्योऽन्तर आत्मा विज्ञानमयः'[५] 'ततोऽन्योऽन्तर आत्मा

---

१. सैव २.२८
२. सैव, २.२९
३. तै० उ०, २.१-६
४. सैव।
५. सैव।

आनन्दमयः'[1] ततोऽप्यन्तरः 'तस्यैष एव शारीर आत्मा'[2] इति क्रमेणैव नेति नेति विधया ज्ञातव्य इति सर्वाण्यपि दर्शनानि यदात्मस्वरूपं विवेचयन्ति स आत्मा आश्चर्य—इदन्तया द्रष्टुमशक्यः। दृष्ट्वापि सुतरां वक्तुं न प्रभवति द्रष्टा। न श्रोतुं वा ज्ञातुं वेति तादृशमात्मतत्वं विज्ञातमिव मत्वा तन्नाशो भवितेति दुःखं सर्वथा अयोग्यमिति भावः।

'आश्चर्यो वक्ता कुशलोऽस्य लब्धा, आश्चर्यो ज्ञाता कुशलानुशिष्ट'[3] इति कठोपनिषन्मन्त्रे कर्तृकर्मणोरुभयोरपि आश्चर्यत्वं सूचितम्। मधुसूदनसरस्वती पक्षद्वयमपि स्वीकरोति।

देही नित्यमवध्योऽयं देहे सर्वस्य भारत।
तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥[4]

श्लोकेनानेन प्रकरणमिदमुपसंहरति। देहे देहीति वचनात् देहांशं परित्यज्य तदतिरिक्तं संविन्मात्रं आत्मेति मन्यते। देहे वध्येऽपि देही न वध्य इति निर्णयः। आत्मनो देहविविक्तस्यावध्यत्वात् न केवलं भीष्मादीन् किन्तु सर्वान् जीवानधिकृत्य नानुशोचितुमर्हसि। अत्र 'सर्वाणि भूतानि' इति निर्देशात् 'त्वम्' इत्युपलक्षणम्। सर्वान् जीवान् स्वजनत्वेनाभिमतानितरानपि आसन्नमरणान् मृतान् वा नानुशोचितुमर्हसीति विवक्ष्यते। 'गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः' इत्युपक्रमस्य उचितोऽयमुपसंहारः।

स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ॥[5]

एतावता अनात्मनि शरीरे आत्मबुद्ध्या युद्धादुपरतिबुद्धिं निरस्तुं आत्मनो याथार्थ्यमुपदिदेश। साम्प्रतं—'यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे' इति पार्थप्रार्थनामनुसृत्य धर्माधर्मविवेकमुत्पाद्य श्रेयः साधनमुपदिशत्यनेन श्लोकेन।

---

१. सैव।
२. सैव।
३. क० उ० २.७
४. गी०, २.३०
५. सैव, २.३१

अत्र श्रेयोऽन्यत् न विद्यत इति युद्धादन्यस्य श्रेयस्त्वं निषिद्धम् । क्षत्रियस्य युद्धमेव न तु भिक्षाचर्यादिकं श्रेयः । स्वाभाविके धर्मेऽधीरतावलम्बनं न युक्तम् । अग्निष्टोयीमयागे यज्ञपशोः हीनतरच्छागादिशरीरत्यागेन दिव्यदेहः स्वर्गादिप्राप्तिश्च भवतीति शास्त्रैरवगम्यते । एवमत्रापि युद्धाख्यस्वधर्मानुष्ठानेन मृतिरपि कल्याणतरदेहलोकप्रापिणी । यागादौ हिंसाया हिंसात्वं नास्तीति कुमारिलभट्टेन बहुधा विवृतं श्लोकवार्तिके । 'न हिंस्यात् सर्वा भूतानि'[१] इति निषेधो विहितहिंसातिरिक्तां हिंसां निषिध्यति । युद्धे प्रवृत्तस्य क्षत्रियस्य पुरतो गुरुर्ब्राह्मणः स्वजन आततायी स्वोपजीव्यः स्वपोषको वा सर्वे योद्धव्या एव तेषां हननं न दोषाय । 'न दोषो हिंसायामाहवेऽन्यत्र व्यश्वसारथ्यायुधकृताञ्जलिप्रकीर्णकेश-पराङ्मुख-उपविष्ट-स्थलवृक्षारूढ-दूत-गो-ब्राह्मणवादिभ्यः'[२] इति गौतमधर्मसूत्रम् । अत्र ब्राह्मणपदं कुब्राह्मणपरम् । अत एव श्रीमद्रामानुजोऽपि प्रारब्धमिदं युद्धं प्राणिमारणमपि अग्नीषोमीयादिवत् 'स्वधर्ममवेक्ष्य न विकम्पितुमर्हसि'[३] इति वदति । मधुसूदनसरस्वतीप्रभृतयो भगवत्पादानुयायिनोऽपि एवमेव व्याचक्षते । सर्वेषां समानोऽभिप्रायोऽत्र ।

ततः परं धर्मे अधर्मत्वभिया तवाकुलत्वं न युक्तमिति भावेनाह 'न विकम्पितुमर्हसि'[३] इति ।

आचार्यं च प्रवक्तारं पितरं मातरं गुरुम ।
न हिंस्याद् ब्राह्मणान् गांश्च सर्वांश्चैव तपस्विनः ।।[४]

इति मनुस्मृतिः आततायिविषये न प्रमाणम् । मनुनैवान्यत्रोक्तम्—

गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् ।
आततायिनमायान्तं हन्यादेवाविचारयन् ।।[५] इति ।

युद्धेन जयः राज्यप्राप्तिश्च न मुख्यं फलं, स्वर्गप्राप्तिरेव मुख्यं फलं, स्वधर्मानुष्ठानजनितचित्तशुद्धिर्वा । आततायिवधः अर्थशास्त्ररीत्या न विहितः किन्तु

---

१. गौ० ध० सू० २.१७-१८
२. रा० भा०, पृ० ६३
३. गी०, २.३१
४. म० स्मृ० ४.१६२
५. तत्रैव, ८.३५०

धर्मशास्त्ररीत्यैव।[1] अग्नीषोमादिषु पशुबन्ध इव युद्धाख्ये स्वधर्मे शत्रुबन्धः धर्मशास्त्रविहितः। महाभारतेऽपीदं स्पष्टमुक्तम्।[2]

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम्।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम्॥
अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि॥
अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम्।
संभावितस्य चाकीर्तिर्मरणादतिरिच्यते॥
भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः।
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम्॥
अवाच्यवादांश्च बहून् वदिष्यन्ति तवाहिताः।
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम्॥
हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः॥[3]

क्षत्रियेण युद्धं प्रारम्भणीयमिति स्थितिः। इह तु प्रारब्धं तदप्ययत्नतः स्वयमपावृतं स्वर्गद्वारमेव युद्धमिदम्। को वा क्षत्रियः प्राप्तं युद्धं परित्यक्ष्यति? स्वर्गमार्गमपावृतमिति वदन् हिंसा यदि दोषत्वेन परिगण्यते तर्हि स्वर्गप्रसंगो न स्यादिति सूचयति। 'पापमेवाश्रयेदस्मान्'[4] इति अर्जुनेन यदुक्तं तन्न साधु। आततायिवधेन पापो न भवति किन्तु पुण्यमेव भवति। प्रारब्धस्य युद्धस्य परित्याग एव पापाय भवति। सत्यं युद्धे जयो वा अपजयो वेति न वक्तुं शक्यते। राज्यलाभः स्यान्न वेत्यपि नास्ति निर्णयः। किन्तु पुण्यपापयोर्विषये नास्ति

---

१. "अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः"
या० स्मृ०, २.२१

२. "उद्यतेषु रणे दृष्ट्वा ब्राह्मणं क्षत्रबन्धुवत्।
योहन्यात् समरे क्रुद्धं युद्ध्यन्तमपलायिनम्।
ब्रह्महत्या न तस्य स्यादिति धर्मेषु निर्णयः॥"
म० भा० ५.१७८.२७

३. गी०, २. ३२–३७

४. गी०, १. ३६.

संशयः । नाप्यस्ति शंका यशोऽपयशसोर्विषये । क्षत्रियस्य युद्धे प्रवृत्तिः स्वधर्मत्वात् पुण्याय कीर्तये च भवति; तदप्रवृत्तिः पापायापयशसे च । 'नरके नियतं वासः' इति या नरकभीतिः स्वजनवधे दर्शिता, सा तत्र न युज्यते; किन्त्वत्र स्वधर्मत्यागे नूनं घटत इति विवक्षा । कीर्तिनाशः नरकवासश्च स्याद्वा न वा, नियतं फलं स्वजनमरणदुःखं जानन्नपि को वा युद्धं कुर्यादिति शंकां निराकरोति 'अकीर्तिं चापि' इत्यादिना । अर्जुनः रणात्पलायित इति इहैव जन्मनि शाश्वती अकीर्तिः भविष्यति, या मरणादपि गरीयसी । अनया अकीर्त्या कुलस्य शाश्वतः कलङ्कः नूनं भविष्यति । अतो यदि सनातनाः कुलधर्माः रक्षणीयाः, कुलं च क्षयाद्रक्षणीयं तर्हि मरणादपि दुस्सहामकीर्तिं परिहरेत् । अकीर्तिप्रकारमेव विवृणोति 'भयाद्रणादुपरत'मित्यादिना । बन्धुस्नेहात् क्रियमाणमपि युद्धत्यागं कर्णादिभ्यो भयादेवेति जनाः कथयिष्यन्ति । लाघवं च यास्यति । परिहरिष्यन्ति, भीतं-भीतं मंस्यन्ते च प्रतिपन्थिनः । मरणमेव निन्दाया वरम् । यदि मरणमनिवार्यं तर्हि युद्धे मरणं आत्महत्यायाः वरम् । तत्र यदि जयो भविष्यति महीं च भोक्तुमस्त्यवसरः । तस्माद्युद्धोद्यम एव सर्वथा कर्तव्य इति । अत्र आचार्याणामितरभाष्यकाराणां च नास्ति वैषम्यम् ।

एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु ।
बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ।[1]

शोकापनोदनाय 'स्वधर्ममपि चावेक्ष्येति लौकिको न्याय उक्तः, न तु तात्पर्येण ।' न त्वेवाहं जातु नासमित्यारभ्य यदात्मतत्त्वं प्रकृतं तदेव मम रोचते । यतो न तत्र हिंसादोषस्य सामान्यदृष्ट्याऽपि सम्भावना । न हि तत्त्वज्ञानापेक्षया युद्धं श्रेयः इत्याशंकमानमर्जुनमुपलक्ष्य एष श्लोकः । सांख्ये-आत्मतत्त्वज्ञाने, बुद्धिःज्ञानबोधिनी वाक् उक्ता मया । तत्रैव च परमश्रेयः । तत्रैव त्वयाऽपि प्रयत्नः कर्तव्यः । किन्तु तत्र योगस्य उपायस्यानुष्ठानं विना कथं तत्सिद्धिः ? अतस्तत्रोपाये मदीयां वाचं शृणु । स च वस्तुतः कर्मयोग एव । आसक्तिं विना तत्तद्वर्णधर्मानुष्ठानमेव । जयं, राज्यं, भोगाश्च अनपेक्षतापि त्वया सर्वत्र वैराग्यवतापि पूर्वोक्तसांख्यबुद्धिं प्राप्तुं क उपाय इति विचारे युद्धानुष्ठानमेव प्रतिभाति; परन्त्वनासक्तियोगेन । विना अनासक्तियोगं ज्ञानमपि भिक्षाचर्येण काषायग्रहणेन वा नोत्पत्स्यते ।

---

१. गी०, २.३९

अत्र सांख्यशब्देन शुद्धप्रत्यगात्मज्ञानमेव विवक्षितमिति सर्वेषु मतेषु समानम् । अद्वैतिनोऽपि त्वंपदार्थशोधनमेवात्र अभिप्रयन्ति न च तावता मोक्षप्राप्तिः, प्रत्यग्ब्रह्मैक्यसाक्षात्कारेणैव मोक्षः । त्वंपदार्थशोधनेन कर्मबन्धः कर्तृत्वाभिमानरूपः संसारश्च निवर्तते । तच्च कर्मयोगं विना न साध्यम् । अत एवोक्तं 'बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ।'[1] इति । भगवद्रामानुजः, सांख्यशब्देन ज्ञातव्यमात्मतत्वं, बुद्ध्येति पृथगुपादानात् ज्ञानं च विवक्ष्यत इति वदति । श्रीमदानन्दतीर्थस्तु सांख्यशब्देन ज्ञानमेव विवक्षितमित्यभिप्रेति । 'शुद्धात्मतत्वविज्ञानं सांख्यमित्यभिधीयते'[2] इति व्यासस्मृतिवचनं तत्र प्रमाणम् । योगशब्दः उपायमात्र इति श्रीमन्मध्वमते । स च कर्मयोगपरः बुद्धियोगपरो वेति भगवत्पादभगवद्रामानुजौ । योगपदेन कर्मयोगं गृहणद्भिः भगवत्पादैः तस्य जीवात्मतत्वज्ञाने उपयोगो निरूप्यते । भगवद्रामानुजः आत्मज्ञानपूर्वककर्मानुष्ठानं वस्तुतः कर्मयोग एव; तथापि आत्मतत्वज्ञानमपि तत्रैवान्ततिमिति वदति । तस्माद्बुद्धियोगशब्दो योगपर इत्येव श्रीमद्रामानुजादायः । अनन्तरं कर्मयोगस्य केवलं प्रतिपादनं तृतीयाध्यायादारभ्य षष्ठाध्यायपर्यन्तं यत्रेश्वरार्पणबुद्ध्या कर्मानुष्ठानं प्रस्तुतम् । भगवत्पादाः षष्ठाध्यायप्रतिपादितं समाधियोगमपि योगशब्दार्थं मन्यन्त इति विशेषः । पैशाचभाष्यमपीमामेव रीतिमनुसरति । ब्रह्मानन्दगिरिः मधुसूदनसरस्वती नीलकण्ठश्चात्र ज्ञानयोगकर्मयोगयोः प्रस्तावावसरे ज्ञानकर्मसमुच्चयवादो निरस्त इत्यभिप्रयन्ति । 'योगे तु' इति 'तु' शब्दप्रयोगेन ज्ञानसाधनत्वं योगस्येति मन्यन्ते । कापिलपातञ्जलसांख्ययोगयोः नात्र ग्रहणम् । अत्र हेतुर्युद्धादिहिंसादोषवादप्रसङ्गे सांख्ययोगस्य पूर्वं प्रस्तावः कापिलपातञ्जलमताभ्यां न सङ्गच्छते । 'सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतम् तथा ।'[3] इति अवैदिकत्वं तेषां बादरायणेन निरूपितम् । 'विप्रतिषेधाच्चासमञ्जसम्'[4] 'एतेन योगः प्रत्युक्तः'[5] इति द्वाभ्यां सूत्राभ्यां ब्रह्मसूत्रे निरस्तम् । प्रसिद्धस्य योगशास्त्रस्य प्रस्तावं पश्चात्करिष्यति गीताचार्यः । अतोऽपि ज्ञायते यदत्र सांख्ययोगशब्दौ न कपिलपातञ्जलविवक्षयेति । 'बुद्ध्या युक्तो यया पार्थ

---

१. गी०, २. ३९.

२. व्या० स्मृ०.

३. म० भा०, १२. ३४९.६४.

४. ब्र० सू०, २. २–१०.

५. तदेव, २. १.३

कर्मबन्धं प्रहास्यसि' इति कर्मयोगस्य कर्मबन्धमोक्षे प्रयोजकता कर्मयोगस्य परम्परया तज्जनितचित्तशुद्धिद्वारा ज्ञानात् मोक्षहेतुत्वं चाभ्युपगतम् । उत्तरत्र भगवत्पादानामन्येषाञ्च तस्य मोक्षमार्ग इति निरूपेण विरोधोऽपि न भवति ।

मधुसूदनसरस्वती कर्मबन्धशब्दस्य चित्तकालुष्यमिति व्याचष्टे । अत्र 'धर्मेण पापमपनुदति'[1] इति श्रुतिवचनं प्रमाणम् । अतो मलिनचित्तस्यार्जुनस्य कर्मण्येवाधिकारो न तु ज्ञाने । कर्मणस्तु परम्परया मोक्षमार्गत्वस्वीकरणे तस्य भाष्यस्य न विरोधः । पश्चात् 'मा शुचः संपदं' 'दैवीमभिजातोऽसि भारत'[2] इति यद्यपि देवसम्पत्सपन्न इति प्रशस्यते, तथापि साम्प्रतं मलिनचित्तोऽथवा धर्माधर्मविमूढानां प्रतिनिधिरूपेण वा चित्तकालुष्यमर्जुने उपदेशारम्भे वर्तत इति नात्र पौर्वापर्यविरोधः । ब्रह्मानन्दगिरिः पैशाचभाष्यञ्चेतादृशमर्थान्तरकल्पनं विनापि साक्षादेव कर्मबन्धं प्रहास्यसीति यथाशब्दं व्याचक्षते । तयोर्दृष्ट्या अर्जुनस्य प्ररोचनार्थमेवायं प्रयोगः ।

> नेहाभिक्रमनाशोस्ति प्रत्यवायो न विद्यते ।
> स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ।।[3]

इह—मोक्षमार्गेऽभिक्रमनाशः—प्रारम्भनाशो नास्ति यथा कृष्यादेः । नापि चिकित्सावत् प्रत्यवायो विद्यते । किन्तु अस्य धर्मस्य स्वल्पमप्यनुष्ठितं जन्ममरणादिलक्षणात् महतो भयादपि रक्षति । प्रारब्धं विच्छिन्नं यदि भवति तथा फललाभो न स्यात्, प्रत्यवायोऽपि स्यात् । नीलकण्ठस्तु अभिक्रमशब्दः अनासक्तियोगेनानुष्ठीयमानं कर्म, इति व्याख्याति । तादृशस्य कर्मणः फलदानानन्तरम् नाशो न सम्भवति, अन्येषां कर्मणामिव । अनासक्तियोगेनानुष्ठीयमानं कर्म, अनासक्तिमात्रेणात्मज्ञानोत्पादनेन वा स्वयं फलवद् भवति । अनासक्तियुक्तस्य कर्म यदि विच्छिन्नं भवति मध्ये, ज्ञानेन परिसमाप्यति, तथापि फलानभिसन्धिर्बुद्धि सृजतीति हेतोस्तस्य निष्फलत्वं न वक्तुं शक्यते । श्रीवल्लभाचार्यः आरम्भ एव फलमिति मत्वा निष्फलत्वं नास्तीति मन्यते । मधुसूदनसरस्वती चैवमेव व्याचष्टे । राघवेन्द्रस्वामी तु इच्छामात्रमपि निष्फलं न भवतीति

---

१. तै० उ०, महानारायणीयोपनिषद्, प्रपाठं १०, अनुवाकं ६३.

२. गी० १६.५.

३. सैंव०, २.४०.

मनुते । अत्र स्वल्पशब्दस्य स्वल्पांशोऽपीति भगवद्रामानुजस्य व्याख्या बल्लभाचार्यस्यापि । उपक्रममात्रमपीति श्रीधरस्वामिनः । एतेषां मते सर्वस्य कर्मणः यथासम्भवमनुष्ठाने अङ्गलोपः यदि भवति, सः काम्यकर्मणीव न दोषायेति भावः । शंकरानन्दः ब्रह्मानन्दगिरिश्च बहूनां कर्मणां मध्ये एकमपि कर्म अनासक्तियोगेन क्रियते चेत्, तत्राप्यङ्गलोपोऽपि भवति चेत्तदपि दोषाय न भवतीति स्वल्पशब्दस्य व्याख्याने वदतः ।

व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ।[1]

ज्ञानयोगस्येव कर्मयोगस्यापि कर्मबन्धनिरसनद्वारा साक्षान्मोक्षोपायत्वमेव भगवदभिमतमिति शंकायां श्लोकोऽयं प्रारब्धः । अथवा कापिलकाणादादिबहुषु दर्शनेषु विद्यमानेषु कथमौपनिषदं दर्शनमेव सांख्ययोगो नामेति शंकायामयं श्लोकः । अथवा काम्यानां कर्मणामप्यनुष्ठानेन सुखप्राप्तिर्भवति । तस्मात् कथं कर्मयोगस्येव प्रशस्ततेति शङ्कायामयं श्लोकः । इयं कर्मयोगज्ञानयोगात्मिका बुद्धिरेकैव एकस्यैव फलस्य साधनत्वात् । उभयोस्तयोर्मध्ये एकः सन्निपत्योपकुर्वन् फलसाधनं भवति, अपरः आरादुपकुर्वन् फलोपयोगी भवति । अत एव सांख्यबुद्धौ योगत्वेन (उपायत्वेन) कर्मयोगस्यात्र प्रतिपादनमिति प्रथमाशंकाया नास्त्यवकाशः । यद्यप्यन्यानि दर्शनानि तत्तत्संप्रदायमुखेन प्रवृत्तानि दृश्यन्ते, तथापि तेषां न प्रामाणिकत्वम् । सप्रमाणा बुद्धिर्मोक्षोपयोगिनी भवति, नाऽन्या । अन्यानि दर्शनानि न व्यवसायात्मकानि । योगद्वयात्मिका पूर्वोक्ता बुद्धिरेव प्रामाणिकीति हेतोर्न द्वितीयशंकाया अवसरः इत्यानन्दतीर्थाः । शंकरभगवत्पादास्तु तेषां दर्शनानां प्रतिषिद्धत्वात् अनेकत्वात् अप्रामाणिकैः तत्तत्सम्प्रदायप्रवर्त्तकैरुपक्रान्तत्वात् न समादरणीयतेति वदन्ति । पाञ्चरात्रस्यापि प्रामाण्यं श्रीमदानन्दतीर्थाः स्वीकुर्वन्ति । भगवद्रामानुजा अपि पाञ्चरात्रे प्रामाण्यबुद्धिमवलम्बन्ते, तथापि प्रसङ्गेऽत्र न तस्योपयोग इति कृत्वा न तं विषयं स्पृशन्ति । श्लोकेऽस्मिन् दर्शनान्तरप्रामाण्यस्य चर्चा न क्रियते तैः । भगवत्पादमतरीत्या अव्यवसायिनः स्वर्गादिकं मोक्षं मन्वानाः कर्ममीमांसका केचन, केचन स्वर्गादिकं तत्समानं योगक्षेमं विभूतिविशेषं वा तथा मन्वते ।

———————

१. सैव, २.४४.

प्रामाणिके मोक्षाख्ये मुख्यपुरुषार्थे तेषां समादरो विश्वासो वा यतो नास्ति ततस्ते अव्यवसायिनः। भगवद्रामानुजस्तु व्यवसायात्मिका अनासक्तिपूर्विका कर्मयोग-बुद्धिरेवेका—मुख्या, काम्यकर्मबुद्धिस्तु अव्यवसायात्मिका; अत एव तत्र फलानि बहुविधानि, भिन्नरूपाण्यनवस्थितानि च दृश्यन्ते इति व्याचष्टे। व्यवस्थितफले कर्मयोगे या निष्ठा सैव श्रेयस्करीत्याशयः। ब्रह्मानन्दगिरिः श्रीधरश्च रामानुजव्याख्यामनुसरतः। अन्ये भगवत्पादरीतिमाद्रियन्ते।

अव्यवसायिनां बुद्धिः कीदृशी, कुतः तस्या न मुख्यत्वमिति वर्णयितुमाह श्लोकत्रयेण—

> यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः।
> वेदवादरताः पार्थ नान्यदस्तीति वादिनः॥
> कामात्मनः स्वर्गपरा जन्मकर्मफलप्रदाम्।
> क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति॥
> भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसाम्।
> व्यवसायात्मिका बुद्धिः समाधौ न विधीयते॥[1]

यदि सांख्ययोगबुद्धिरेकैव प्रमाणभूता, तर्हि किमिति सैव सर्वैर्नाद्रियते? तत्र वैदिकेतराणि दर्शनानि भवन्तु नामाप्रमाणानि। वैदिकं मीमांसामतं कथमप्रमाणमिति शंकानिरासार्थं कीदृशा मीमांसका नाम इति तल्लक्षणं वदति। 'स्वाध्यायोऽध्येतव्य' इति एक एव विधिः अध्ययनस्य। तच्चाध्ययनं वेदगतानां वेदान्तवाक्यानां कर्मकाण्डवाक्यानां च समानमेव। तान्येव प्रमाणं च मन्यन्ते। तथापि तानि सपुष्पाण्येव मत्वा धीयते न तु सफलानीति मत्वा। पुष्पमेव फलं मत्वा तत्रैव तृप्ताः न फलपर्यन्तं प्रतीक्षन्ते। अत एव तेऽविपश्चितः। सत्यं कर्मकाण्डोक्तानि वैदिककर्माणि फलप्रसूर्वल्ली। तस्याः पुष्पाण्येव स्वर्गादीनि। फलं तु मोक्षः। कर्ममीमांसकोऽपि फलेप्सुः। किन्तु प्रथममुद्गतं पुष्पमेव फलभ्रान्त्या विचिनोति। यदि सः विपश्चित् स तर्हि पुष्पाण्यनुपभुज्य तेषां परिपाकभूतं फलमेव प्रतीक्षमाणः कर्मवल्लीं रक्षेत्। अतः स्वर्गादिफलेच्छया कर्म मा कुरु किन्तु पुष्परूपेषु स्वर्गादिषु अनासक्त्या कर्म कुर्वन् फलभूतं मोक्षं प्रतीक्षस्वेति भगवानुपदिशति। वेदेषु स्वर्गादिफलनिर्देशः पापमार्गतः सर्वेषां निवर्तनार्थं,

---

१. सैव, २.४२-४४

वैदिकेषु कर्मसु श्रद्धां जनयितुं च। अतः ये पुष्पे फलबुद्धिमावहन्ति ते कर्म-मीमांसकाः यद्यपि सर्वथा कर्मविमुखेभ्यो वैदिकेभ्य उत्कृष्टाः, तथाप्यविपश्चित एव।

तथा च श्रीमद्भागवते स्पष्टमुक्तम्—

एवं व्यवसितं केचिदविज्ञाय कुबुद्धयः।
फलश्रुतिं कुसुमितां न वेदज्ञा वदन्ति हि।
कामिनः कृपणा लुब्धाः पुष्पेषु फलबुद्धयः॥[1] इति।

बहूनि वेदवाक्यानि कर्मविधिपराणि। तानि च स्वर्गादिफलान्येवोपदिशन्ति 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादौ। स्वर्गादिपुष्पस्थानीयं न तु फलम्। 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन'[2] इति वचनात् कर्मणां ज्ञानप्राप्तिरेव लक्ष्यमिति विहितम्। मीमांसका नेदमङ्गी-कुर्वन्ति। तेषां मते सर्वेषां वेदान्तवचनानां कर्मोपयोगि कर्तृ देवतास्तुति-पराणामर्थवादत्वम्। कर्मकाण्डवचनानामेव मुख्यत्वं प्रामाणिकत्वं च। अतो व्यव-सायात्मिका बुद्धिरेकैवेति वक्तुं न शक्यत इति तेषां सिद्धान्तः प्रस्तूयते 'वेद-वादरता' इति। वेदस्य वेदान्तभागस्य अर्थवादत्वकल्पने वादे रताः इत्यर्थः। एतेषां वादस्य उद्देशः न केवलं स्वर्गादीनां फलत्वेन स्वीकारे किन्तु मोक्षस्य न फलत्वमिति प्रचारणेऽपि, स्वर्गादिकाम्यफलातिरिक्तं किञ्चिदपवर्गाख्यं नास्तीति वादे रताः। अपरे सर्वे व्याख्यातारः वेदवादरताः इत्यत्र एवं विवेचयन्ति—वेदे वादेषु अर्थवादवत् प्ररोचकतया फलविशेषप्रतिपादनपरेषु क्रियापरेषु वाक्येषु रता इति। अनया रीत्या 'नान्यदस्तीति वादिनः' इत्यस्य कामात्म-त्वात् स्वर्गाद्यतिरिक्तं नान्यदस्तीति वादिनः इति व्याख्येयम्। कामान्धतया ते मोक्षस्य सत्वमपि नाङ्गीक्रियते। यदि ते कामात्मनः तर्हि परमकाम्ये मोक्षे कथं तेषां प्रवृत्तिर्न भवतीति चेदाह—स्वर्गपराः। यद्यपि मोक्षोऽपि तत्र तत्र फलं प्रति-पाद्यते, तथापि कामनायोग्यः पुरुषार्थो न मोक्षः किन्तु स्वर्ग एवेति कृत्वा तत्रैव रताः।

---

१. श्री० भा०, ११.२१-२६
२. बृ० उ०, ६.४.२२

तथा च ये वेदवादरता:, कामात्मान:, स्वर्गपराश्च ते जन्मकर्मफलप्रदां भोगैश्वर्यप्रतिक्रियाविशेषबहुलां वाचं वदन्ति। भोगैश्वर्यप्रसक्तानां तया अपहृतचेतसां च तेषामचला बुद्धि: समाधौ न विधीयत इति योजना। अव्यवसायिनामेतेषां वाचानुष्ठेयानि कर्माण्यनेकानि। फलानि चानन्तानि। चिरायुषाप्येकेन नानुभवितुं शक्यन्ते। न चाप्यनुभवेन शान्तिं प्रदास्यन्ति। 'न जातु काम: कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते' इति न्याय:।[1] तथा च अचला व्यवसायात्मिका बुद्धिस्तेषां नैव भवति; समाधावचला बुद्धिर्न तिष्ठति। अत्र 'समाधौ' 'इत्यस्यान्त:करणे' इति भगवत्पादभगवद्रामानुजौ, शंकरानन्दश्च। श्रीमदानन्दतीर्थ: समाध्यर्थे इति व्याचष्टे। मधुसूदनसरस्वती तु ब्रह्मात्मैक्यानुसन्धाने, 'परमात्मनि' इत्यादीन्यपि तस्यार्थत्वेन मन्यते। श्रीवल्लभाचार्य: 'भगवच्चिन्तने' इति व्याख्याति। व्याख्यानभेदा: मुख्यमर्थं न परिवर्तयन्ति।

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन।
निर्द्वन्द्वो नित्यसत्वस्थ: निर्योगक्षेम आत्मवान्॥
यावानर्थं उदपाने सर्वत: सम्प्लुतोदके।
तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानत:॥[2]

चतुर्दशाध्याये विस्तरेण वक्ष्यमाणस्य गुणत्रयविभागस्य दिग्दर्शनमत्र श्लोकद्वयेन क्रियते। तत्रोक्तप्रकारेण यदा रजसस्तमसश्च प्राबल्यं भवति तदा सांसारिकं बन्धं विशेषतोऽश्नुते कामात्मा स्वर्गादिपरश्च भवति। यदा सत्वप्राचुर्यं भवति तदा विषयसुखेषु शीतोष्णादिद्वन्द्वेषु च दोषदर्शनं भवति। तेन अनासक्तियोगेन कर्मानुष्ठाने प्रवृत्तिर्जायते। अस्य श्लोकस्य व्याख्यारूपेण घटते योगवासिष्ठगत: प्रसङ्ग: यथा—

निर्द्वन्द्वो नित्यसत्वस्थो निर्योगक्षेम आत्मवान्।
यथा प्राप्तानुवर्त्तीत्वं भव भूषितभूतल:॥[3]

---

१. म० स्मृ० २.९४
२. गी०, २.४५, ४६
३. यो० वा० निर्वाण प्र० ५४-३५ (प्र० ९०३)

वैदिककर्मानुष्ठानप्रसङ्गेऽपि बहिर्मुखः सन् यः सर्वाणि करोति सः त्रिगुणपरवशत्वात् त्रैगुण्यः। सति चैवं वेदाः (कर्मकाण्डभागाः) त्रैगुण्यपराः, तत्तद्‌गुणपरान् जनान् उद्दिश्य इष्टानिष्टमिश्रफलानि कर्माणि विदधते। एकस्यैव कालभेदेन गुणानामन्यतमस्य प्राचुर्यं सम्भवति, तत्कालानुसारि त्रिविधेष्वन्यतमं कर्म च भवति; संसारश्चानुवर्तते सुखदुःखमिश्ररूपः। यदि कश्चित् सर्वदा सत्वप्रचुरः स्यात् तर्हि कर्मयोगाधिकारी भवेदिति भावः। वेदाः त्रैगुण्यविषयाः, त्वं तु निस्त्रैगुण्यो भव। तत्प्राप्त्यै प्रथमं निर्द्वन्द्वो भव। निर्द्वन्द्वता च नित्यसत्वस्थेन प्राप्तुं शक्यते। नित्यसत्वस्थित्यै निर्योगक्षेमो भव। 'आत्मवान्' इति अप्रमत्तो विवक्ष्यत इति भगवत्पादाः। आत्मान्वेषणपरो विवक्षित इति भगवद्रामानुजः। परमात्मपर इति श्रीवल्लभाचार्यः आनन्दतीर्थाश्च। तत्तत्सिद्धान्तदृष्ट्या आत्मवान् निर्योगक्षेमो भवति। ज्ञानप्रतिबन्धकेषु फलेषु तद्रक्षणे च रागः प्रमत्तस्य खलु भवति। नित्यसत्वस्थ इत्यस्य नित्यप्रवृद्धे सत्वगुणे स्थित इत्येवार्थः, न तु केवलसत्वे सत्तामात्रनिष्ठ इति। गुणत्रयान्तर्गतः सत्वशब्दोऽत्र प्रयुक्तः। शंकरानन्दस्तु नित्यसत्वपदेन ब्रह्मेति; मधुसूदनसरस्वती धैर्यमिति व्याचष्टे। गुणत्रयाधीनान् पुरुषानधिकृत्य प्रवृत्तेषु विधिनिषेधात्मकवेदवचनेषु सत्वप्रधानपुरुषमधिकृत्य यद्यद्विहितं तदेवानुसर इति प्रथमश्लोकार्थः। काम्यं कर्म परित्यज्य निष्कामकर्मपरो भवेति सारार्थः।

सर्वेषां वेदविहितत्वात् तत्रैकतरमात्रस्यानुष्ठानं कथं युज्यत इति शंकां वारयितुं 'यावानर्थेति' भगवत्पादैरियं योजना श्लोकस्यास्य कृता—यथा उदपाने—कूपादौ यावानर्थः स्नानाचमनादिर्योऽर्थः भवति, तावान् सर्वतः सम्प्लुतोदके समुद्रेऽपि भवति, तथा सर्वेषु वेदेषु वेदोक्तेषु कर्मसु यावानर्थो भवति, तावान् विजानतो भवतीति। यावान् तावान् पदयोरावृत्या योजनं, यथा तथा पदयोरप्यध्याहारोऽत्र क्रियते। समुद्रं वर्तत इति कृत्वा आवश्यकादधिकं स्नानाचमनादौ जलस्योपयोगो न भवतीति तात्पर्यम्। नीलकण्ठव्याख्यायां सर्वतः सम्प्लुतोदके उदपाने—महति जलाशये पुरुषाय यावानर्थः तावानेवार्थो भवति, न तु कृत्स्नजलाशयसाध्यः। तावानेव मोक्षेप्सोः ज्ञानिनः सर्वेषु वेदेषु तन्मात्रपर्याप्तार्थ एव भवति इति विवृतम्। अत्र यावत्तावत्पदयोः यथा तथा शब्दयोश्चाध्याहारो नास्ति। भगवद्रामानुजस्यापि अयमेवाशयः।[1]

---

१. रा० भा०, पृ० ७४, वे० ग्रन्थमाला सं०

'न च वेदोदितं सर्वं सर्वस्योपादेयं; यथा सर्वार्थपरिकल्पिते सर्वतः सम्प्लुतोदके उदपाने पिपासोर्यावानर्थः यावदेव प्रयोजनं, तावदेव तेनोपादीयते, न सर्वम्। एवं सर्वेषु वेदेषु ब्राह्मणस्य विजानतः वैदिकस्य मुमुक्षोर्यदेव मोक्षसाधनं तदेवोपादेय''मिति अत्र यद्यपि यावत्तावत्पदयोरावृत्तिः यथा शाङ्करभाष्ये, तथापि यथा तथा पदयोर्योजनं वर्तत एव। भगवत्पादमते ब्रह्मज्ञानिनः समुद्रस्थानीयस्य युगपत्सर्वानन्दानुभवः सूच्यते, तस्य कृतकृत्यता च। तस्य परिणामः, प्राक् ब्रह्मनिष्ठाप्राप्तेः, कर्मण्यधिकृतेन कूपतटाकाद्यर्थस्थानीयमपि कर्म कर्तव्यमेवेति व्यवस्था। तत्तु कर्म प्रारब्धवशाद्वा लोकसंग्रहार्थं वा कर्तव्यं न तु मोक्षसाधनमिति कृत्वा। भगवद्रामानुजमते तदेव कर्तव्यमिति मोक्षसाधनत्वेन, अथवा मोक्षमार्गोपरोधनिवारकत्वेन तस्य स्वीकारः। सर्वथा तु तत्तदधिकारस्य अविरोधेन वा, तत्तदधिकारानुरोधेन वा वैदिकान्यपि कर्मकाण्डप्रोक्तानि कर्माणि कानिचित् कर्तव्यानि, न तु सर्वाणि इत्यत्र न मतभेदः। अयं च निर्णयः न्यायसिद्ध इति भगवत्पादाः, उक्तश्लोकादेव सिद्ध्यतीति भगवद्रामानुजः। श्रीमदानन्दतीर्थाः भगवत्पादसरणिमेवाऽत्र स्वीकुर्वन्ति। श्रीराघवेन्द्रस्वामी योजनान्तरमत्र प्रस्तौति। सर्वतः सम्प्लुतोदके प्रकृत्यात्मके महाप्रलये स्थिते उदपाने परमात्मनि प्रसन्ने सति यावानर्थो धर्ममोक्षादिः, तावान् सर्वेषु वेदेषु कर्माणि भगवज्ज्ञानार्थानि। भगवानेव वेदस्य मुख्यार्थः, स्वर्गादिफलप्रतिपादनं केवलं रुचिं जनयितुमिति जानतो ब्राह्मणस्य तावानेव भवतीति। उत्-उद्रिक्तगुणः, अपः-पालकवर्जितः, अनः-सर्वकालादिचेष्टक इति क्लिष्टा व्युत्पत्तिः क्रियतेऽत्र। 'ब्रह्मार्पणं ब्रह्महवि' रिति वक्ष्यमाणरीत्या सर्वेषां भगवद्रूपेणानुसन्धानं तत्तत्कर्मसम्बन्धिनां द्रव्यगुणकालादिसूचकानां वेदवाक्यानां यया कयाचित् व्युत्पत्या परमात्मपरतया योजनं च अभ्युपगन्तव्यम्। 'त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भव' इति श्लोकस्य श्रीमदानन्दतीर्थानां व्याख्यानुसारं सर्वस्य वेदस्य निस्त्रैगुण्यपरमात्मपरत्वस्वीकारे अत्रेदृशं विवरणं सुकरमेव। 'सर्वे वेदा यत्पदमामनन्ति'[1] इति श्रुतिवचनमप्यत्र अनुकूलम्।

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।
मा कर्मफलहेतुर्भूः मा ते सङ्गोऽस्त्वकर्मणि॥[2]

---

१. क० उ०, २.१५
२. गी०, २.४७.

प्राक् ज्ञानोत्पतेः स्वस्वाधिकारानुरूपं कर्मकर्तव्यमेव । अतः कर्मण्येव नित्यसत्वस्थस्य अधिकारः । तावता, वेदे कर्मणः फलमप्युक्तमिति अनासक्तियोगे स्थितस्य फलेऽप्यधिकारः ।'न कांक्षे विजयं कृष्ण न च राज्यं सुखानि च'[1] इत्युक्तरीत्या माऽस्तु फले कांक्षा । न च तत्कांक्षणमर्जुनस्य योग्यम् । कर्म तु कर्तव्यमेव निस्त्रैगुण्येनाऽपि । अनेनैव कर्मयोगस्य मोक्षमार्गत्वं निश्चिनोति । अनुत्पन्नज्ञानः कर्मफलहेतुर्न भूयात् । किन्तु नित्यसत्वस्थेन सात्विकाहारानुष्ठानादिपूर्वकं कर्मैव कर्तव्यम् । भगवद्रामानुजस्तु नित्यसत्वस्थस्य कर्ममात्रेऽधिकारः, तत्संबन्धितया प्रोक्तेषु फलेषु कदाचिदप्यधिकारो नास्तीति पूर्वोक्तप्रकारमेव व्याचष्टे । श्रीमदानन्दतीर्थास्तु 'ते अपि' इति योजनया व्याख्याति । न केवलं ज्ञानिनो नरावतारस्य इन्द्रांशभूतस्य अर्जुनस्य, किन्तु सर्वेषामपि फलेच्छां विना कर्माधिकार एव मुख्य इति विवृणुते । सर्वैराचार्यैः पार्थस्य वत्सत्वं तद्व्याजेन सर्वानुद्दिश्येव गीतोपदेश इति स्वीक्रियते । अतः श्रीमन्मध्वव्याख्यानमिदं न कस्यापि विसम्मतम् । कर्मफलहेतुर्माभूः इति वचनात् कदाचित् फलेन साकं कर्मणोऽपि मोहात् त्यागं स्यादिति शंकया 'मा ते संगोऽस्त्वकर्मणि' इति वदति । नियतस्य कर्मणः मोहात् त्यागः तामसत्याग इति वक्ष्यते ।[2] तादृशतामसत्यागेन ज्ञानमपि न सिद्ध्येत्, यतस्तेन भगवत्प्रसादहानिः । न च कर्मकाण्डोक्तानां काम्यफलानामपि प्राप्तिः । अतः कर्मत्यागी इतो भ्रष्टस्ततो भ्रष्टो भवति ।

श्रीराघवेन्द्रस्तु 'निर्योगक्षेम आत्मवान्' इति पूर्वोक्तश्लोकस्य व्याख्याने परमात्मनि स्वामीति ज्ञानवान्, इति आत्मवानित्थं व्याचष्टे । तदनुसारेण जीवब्रह्मैक्यज्ञानं सात्विकानां न भवतीति प्रतिपाद्य तन्निरूपणेऽप्यस्य श्लोकस्य तात्पर्यमिति वदति । 'कर्मण्येवाधिकारस्ते' इत्यत्र 'ते' इत्यनेन सर्वे जीवा उपलक्षिताः; तस्मात् जीवात्मनां सर्वेषामपि कर्मण्यधिकारः प्रतिपादितः; तेन जीवानां परस्परभेदः प्रतिपादितः । न तावन्मात्रम्; 'फलमत उपपत्तेः'[3] इति ब्रह्मसूत्रानुसारेण कर्मफलदातृत्वमीश्वरस्यैव सिद्धम् । अतस्त्वं हे जीव मा कर्मफलहेतुर्भूः–ईश्वरो मा भूरिति बोधयन् श्लोकोऽयं अद्वैतिनां जीवब्रह्मैक्यवादं निराकरोति ।

सन्दर्भोऽयं श्रीराघवेन्द्रस्वामिनाप्यद्वैतमतखण्डनायोपयुक्तः । परन्तु यज्जीवेश्वरैक्यमत्राशङ्कितं तदद्वैतिनां नाभिमतम् । तत्वं पदयोर्वाक्यार्थभेदं

---

१. सैव, १.३२

२. सैव, १८.७.

३. ब्र० सू० ३.२.३८–८.

न प्रस्तुतमद्वैतिभिः । न च त्वं पदवाच्यार्थानां जीवानां परस्परैक्यं तैरनुमोदितम् । शोधितस्य त्वं पदार्थस्य कर्माधिकारसम्बन्धो नास्मिन् श्लोके विवक्षितः । तादृशविवक्षायामेवाद्वैतिनां खण्डनमुपपद्यते । शोध्यमानस्य त्वंपदार्थस्य तत्पदार्थेनैक्यं न कदापि शाङ्करमतोद्दिष्टम् ।

अत्र नित्यवृद्धसत्वस्थस्य स्वरूपं पूर्वार्द्धेन, नित्यवृद्धरजोनिष्ठस्य स्वरूपं तृतीयपादेन, नित्यवृद्धतमःप्रकृतेः स्वरूपं तुरीयपादेन च वर्ण्यते । उत्तरत्र चतुर्दशाध्याये प्रतिपादितस्य गुणत्रयविभागस्यैव संक्षेपोऽत्रेति पूर्वमेवोक्तम् ।

योगस्थः कुरु कर्माणि संगं त्यक्त्वा धनञ्जय ।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ।।'[१]

निर्योगक्षेमत्वं, निर्द्वन्द्वत्वमात्मवत्वञ्च पूर्वमुक्तम् । तत्र निर्द्वन्द्वत्वस्य निर्योगक्षेमत्वस्य च मिलनमेव कर्मयोग इति तात्पर्यम् । तत्र प्रथमं तावत्साम्यदृष्टिः; यस्य विवरणमत्र क्रियते । कर्मणा ईश्वरप्रसादः स्यान्न वा, चित्तशुद्धिर्भवतु वा न वा, सिद्ध्यसिद्ध्यो हर्षविषादौ च समबुद्ध्या स्वीक्रियेते चेत् तत्साम्यमेव योगः । तत्सहितं सात्विकं कर्म कर्मयोग इत्युच्यते ।[२] योगस्य इति शब्दप्रतिपादितो योगः 'बुद्धियोगे त्विमां शृणु'[३] इत्युक्तो न कर्मयोगः, किन्तु समत्वदृष्टिरेवेति स्वयं योगपदं भगवान् विवृणोति 'समत्वं योग उच्यते' इति पादेन । अन्यत्र योगशब्दः परमेश्वरैकपरता, असंप्रज्ञातसमाधिः, कर्मयोगः, राजयोगः इत्यादिनानार्थत्वेन व्याख्यातम् । प्रकृते तु अर्थान्तराणां प्रवेशो मा भूदिति स्वयं तस्य निर्वचनं ददाति सिद्ध्यसिद्ध्योः समताबुद्धिः योगपदेनोच्यत इति । श्रीराघवेन्द्रस्तु 'सङ्गं त्यक्त्वा' सिद्ध्यसिद्ध्योः समो भूत्वा' इति उभयमपि योगशब्दस्य निरूपणं; 'समत्वं योग उच्यते' इत्यत्र त्यागोपेतं समत्वमेव योगशब्दार्थ इति व्याचष्टे । समत्वं नाम चित्तसमाधानरूपमिति भगवद्रामानुजः । तेन च योगशास्त्रे प्रसिद्धस्यैव अर्थस्य ग्रहणं न तु परिभाषा-कल्पनमिति तस्याशयः । श्रीमदानन्दतीर्थास्तु 'योगस्थः' इत्यत्र योगपदमुपायनिरूपणमेव, तत्स्वरूप एवात्रोच्यते । स्वतन्त्रपरिभाषाकल्पनं नोद्दिष्टमिति वदति । प्रकृतश्लोकदृष्ट्या भगवत्पादव्याख्या सरलतमा भाति ।

---

१. गी०, २.४८.

२. अस्य ग्रन्थस्य मोक्षविचारखण्डे विवेचितम् ।

३. गी०, २.३९.

दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय ।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥[1]

योगस्थस्य तत्वाज्ञानमेव परमोद्देश्यं कर्मकरणे मन्तव्यं न तु फलावाप्तिरिति यदुक्तं तत्र कारणमनेन श्लोकेन वदति । फलत्यागस्योपदेशः वारं वारं क्रियते तत्र श्रोतुर्मनसि दृढीकरणार्थम् । अवरम्—अधमम् । दूरेण ह्यवरमिति फलेच्छया कर्मानुष्ठानमधमतममिति द्योतयितुम् । बुद्धियोगात्—समत्वबुद्धियुक्तस्य कर्मणः फलेच्छया क्रियमाणस्य कर्मणश्च महदन्तरमिति सूचयति । यागप्रायश्चित्तादयः तत्तद्दुःखानां निवर्त्तने अलम् । अखिलमपि संसारदुःखमेकपदे व्यपोहितुं तानि कर्माणि न प्रभवन्ति, सर्वे संभूयाऽपि । परन्तु कर्मयोगेनानुष्ठितं कर्म सर्वदुःखमूलं संसाराख्यं महद् दुःखमुन्मूलयति । न केवलं तत् । फलमप्युभयोर्विलक्षणमेव । काम्यकर्मणां नश्वरः दुःखबहुलः संसार एव फलम् । कर्मयोगस्य तु ब्रह्मानन्द एव फलम् । अतः बुद्धौ शरणमन्विच्छ इत्युपदेशः । बुद्धौकर्मनिष्ठायां, तत्परिपाकरूपे सांख्यबुद्धौ वेति भगवत्पादाः । तत्र प्रथमे कल्पे कर्मयोगे एव शरणं सख्यमन्विच्छ तत्रैव वर्त्तस्वेत्यर्थः । भगवद्रामनुजोऽप्यमुमर्थं स्वीकरोति । द्वितीये कल्पे ज्ञानयोगसाधनं कर्मयोगमन्विच्छेति सिद्ध्यति । पैशाचभाष्यं भगवत्पादव्याख्यां स्वीकरोति । श्रीधरः ब्रह्मानन्दगिरिः, परमार्थप्रभा च भगवत्पादीयं द्वितीयं विकल्पमनुसरन्तः ज्ञानयोगसाधनं कर्मयोगमन्विच्छेति विवृण्वन्ति । ज्ञानयोगमेव शरणं गच्छेति शंकरानन्दव्याख्या । कर्मयोगं शरणं व्रजेति मधुसूदनसरस्वती । ज्ञानार्थं विष्णुं शरणं गच्छेति श्रीवल्लभाचार्याः । श्रीराघवेन्द्रस्वामी तु बुद्धौ जातायामपि विष्णुं शरणं गच्छेति व्याचष्टे ।

कृपणाः फलहेतवः—फलार्थिनः । कृपणाः खलु क्लेशेनार्जितं धनं क्षुद्रे दृष्टफले केवलमुन्मुखाः महते सुखाय दानादिषु नोपयुञ्जते । एवं महता क्लेशेन कर्म कुर्वाणाः क्षुद्रफले लोभात् ब्रह्मानन्दार्थमपि फलकामनां न त्यजन्ति, आत्मज्ञानाय न यतन्त इति भावः । 'यो वा एतदक्षरं गार्ग्य विदित्वास्माल्लोकात् प्रेति स कृपण' इति श्रुतिवचनम् ।[2] अत्रापि पूर्वश्लोक इव फलहेतुशब्देन ईश्वरं विवक्षित्वा तेन स्वस्याभेदं मन्वानाः नीचाः कृपणावेति श्रीराघवेन्द्रस्वामी विवृणुते । पूर्वस्मिन्नेव श्लोके खण्डनस्यास्य प्रसक्तिर्नास्तीति निरूपितम् ।

———————

१. सैव, २.४९.
२. बृ० उ०, ३.८—१०.

बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।
तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥

कर्मणि क्रियमाणे सति समत्वबुद्धियुक्तस्य शुद्धप्रत्यगात्मनाऽवस्थानं फलमनेन श्लोकेन प्रतिपाद्यते । 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रा स्मात् कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद'[1] इति कठोपनिषदि प्रतिपादिते मुक्तस्वरूपे स्थितिरेवात्र विवक्षिता । अत्र 'बुद्धियुक्त' इति शब्देन कर्मणि क्रियमाणे समत्वबुद्धियुक्तः विवक्षित इति प्रायेण सर्वे व्याख्यातारः मन्यन्ते, 'योगः कर्मसु कौशलम्' इति वाक्यशेषात् । तथा च समत्वबुद्ध्या युक्तः स्वधर्मातीतो भवति । स्वधर्मपरधर्मावुभवावपि बन्धको । तत्राऽद्योऽनिवार्यः । तस्य बन्धकत्वं तु समत्वबुद्धियुक्तः न बाधते । बन्धकस्याप्यबन्धकत्वं संपादयितुमयमेव सुलभो मार्गः । शंकरानन्दस्तु ज्ञानयोगयुक्तः धर्माधर्मातीतो भवतीति व्याचष्टे । ततो ज्ञानयोगाय युज्यस्वेति योजना । तन्मते तुरीयपादस्यायमर्थः— कर्मसु निर्वर्तितव्येषु ज्ञानयोग उत्तमं साधनमिति कुशलैर्दृष्टम् । परमार्थप्रमा तु बुद्धियुक्तः इत्यत्र 'ज्ञानयोगयुक्त' इति व्याख्याय तस्माद्योगाय युज्यस्वेति वाक्यं तत्साधनभूतकर्मयोगाय युज्यस्वेति विवृणोति । तुरीयं पादं यथाश्रुतं व्याख्याति ।

श्रीराघवेन्द्रस्तु—भगवद्ज्ञानयुक्तो धर्माधर्मातीतो भवति । परन्तु तत्रोपासनाजन्यं ज्ञानवृद्धिकरं मुक्तानन्दकरं च पुण्यं न जहाति । दुष्कृतं तु सर्वात्मना जहाति । ज्ञानमेव सर्वानिष्टनिवर्त्तकम् । तस्मात् योगाय ज्ञानरूपोपायार्थं प्रयतस्व । ज्ञानरूपोपायः कर्मसु मध्ये कौशलं श्रेष्ठं साधनमिति व्याचष्टे । तस्यैव द्वितीया व्याख्या योगायेति ज्ञानसाध्यकर्मयोगायेति अभिप्रेति । भगवदर्थत्वेन क्रियमाणं कर्म सर्वेषु कर्मसु श्रेष्ठमिति तन्मतम् ।

कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥[2]

सुकृतदुष्कृतत्यागमात्रं न मुक्तिः, किन्तु पुण्यपापनिबन्धनयोर्जन्मकर्मणोर्विमोचनं ततः स्वे रूपे स्थितिरेवेति बोधयितुमयं श्लोकः । अहमर्थे योऽहंभावः तस्यांशस्य

---

१. क० उ०, २.१४.
२. गी०, २.५१

नाशात् संविदंशमात्रस्य पर्यवसितामवस्थामेवं मुक्तिरिति वदति । सा च मुक्तिः न कर्मयोगमात्राधीना, किन्तु तन्निबन्धनज्ञानादेवेत्याहास्मिन् श्लोके । बुद्धियुक्ताः समत्वबुद्धियुक्ताः कर्मजं फलं त्यक्त्वा कर्मफलाधीनाः भूत्वा, ततः मनीषिणः— ज्ञानिनः भूत्वा जन्मरूपात् बन्धाद्विनिर्मुच्य अनामयम्—अनौपाधिकं पदं स्वस्थानं, स्वस्वरूपं गच्छन्तीति भगवत्पादानां योजना । 'न कर्मणा न प्रजया धनेन त्यागे नैकेअमृतत्वमानशुः'[1], 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन, तपसाऽनाशकेन'[2] इति श्रुतिद्वयमपि श्लोकेनानेन व्याख्यायते । त्यागशब्देन सात्विकस्त्यागः सन्यासश्चेत्युभावपि विवक्षितौ । ज्ञानद्वारैव कर्मणो मोक्षसाधनत्वेन स्वीकृतिश्च । भगवत्पादैः मनीषिपदैः ज्ञानिवाचकमिति व्याख्यातम् । ज्ञानं च 'तत्वमसि' महावाक्यजनितः ब्रह्मैक्यसाक्षात्कार इति ब्रह्मानन्दगिरिः मधुसूदनसरस्वती, श्रीधरः, सदानन्दः, भाष्योत्कर्षदीपिका, परमार्थप्रभा च, नीलकण्ठस्तु मनीषणः इत्यस्य मनोनिग्रहसमर्था इति व्याचष्टे । शंकरानन्दः बुद्धियुक्ता इत्यत्रैव आत्मसाक्षात्कारयुक्ता इति व्याख्याय मनीषिणः विद्वांसः इति व्याचष्टे । फलतस्तु नास्ति वैमत्यम् । भगवद्रामानुजस्तु स्वयं मनीषिपदं न विवृणुते किन्तु तदनुयायी काश्मीरकेशवभट्टः बन्धमोक्षहेतुः मननं, मननशीला मनीषिण इत्यभिप्रेति । श्रीमदानन्दतीर्थस्तु बुद्धियुक्ता इत्यनेन परोक्षतया परमात्मज्ञानिनः, मनीषिण इत्यनेनापरोक्षतया परमात्मज्ञानिनश्च विवक्षिता इति मन्यते । 'यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति । तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥'[3] यथोक्तज्ञानप्राप्तिकालः क इत्यनेन श्लोकेन वर्ण्यते । भगवद्रामानुजदृष्ट्या शुद्धप्रत्यगात्मनः साक्षात्कारो यदा भवति तत्कालं ज्ञानम् । श्रीमदानन्दतीर्थमतेन परमात्मसाक्षात्कारकालम् । भगवत्पाददृष्ट्या जीवब्रह्मणोरैक्यसाक्षात्कारकालम् । यदा—यस्मिन् समये, मोहकलिलं—मोहात्मकमविवेकरूपं कालुष्यं, ते बुद्धिरतिक्रामेत् – शुद्धां विवृद्धसत्वामवस्थां प्राप्स्यति, तदा श्रोतव्यं श्रुतं च सर्वं गन्ताऽसि । ब्रह्मानन्दावाप्त्या सर्वानानन्दान् प्राप्तप्रायाननुभविष्यसि । 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति'[4] इति श्रुतेः । सर्वमनात्मजातं अफलमनानन्दरूपं वा द्रक्ष्यसि । आत्मानन्दस्यैव

———————

१. कै० उ०, २
२. बृ० उ०, ६.४.२२
३. गी० २.५२
४. बृ० उ०, ४.३.३२

छाया, कणिका वा सर्वेष्वन्येषु ऐहिकामुष्मिकानन्देष्विति अवगच्छसि। अत्र निर्वेदशब्दस्य वैराग्यपरत्वं, तस्मात् श्रोतव्यस्य श्रुतस्य च निष्फलत्वं चाभिप्रेतमिति प्रायेण सर्वेषां व्याख्यातॄणामाशयः। मोहकलिलमिति ब्रह्मणः अपरोक्षसाक्षात्कारस्य यद्यत्प्रतिबन्धकं तदखिलं विवक्षितं न तु चित्ताशुद्धिमात्रमिति ब्रह्मानन्दगिरिः। तदेव चित्ताशुद्धिरिति परे। फलतो नास्ति अनयोर्भेदः। श्रोतव्ये श्रुते सर्वस्मिन् वैराग्यं नाम असंप्रज्ञातसमाधेरन्तरङ्गं परवैराग्यं, न तु केवलं विषयवैतृष्णाख्यम्। निस्त्रैगुण्यभाव एवात्र परं वैराग्यमिति निष्कर्षः। शंकरानन्दस्तु प्रपञ्चस्याखिलस्य मिथ्यात्वानवबोध एव मोहकलिलमिति व्याचष्टे। चित्तवृत्तौ सर्वमिथ्यात्वबोधेन निर्वेदो वैराग्यं भवति इति तन्मतम्। निर्वेदशब्दस्य वैराग्यमेवार्थः प्रायेण सर्वेषु मतेषु। श्रीमदानन्दतीर्थपादस्तु नितरां लाभः श्रोतव्यस्य श्रुतस्य चेति व्याख्याति। अत्र मोहकलिलशब्दस्य अन्यथाज्ञानमित्यर्थः। श्रोतव्यस्य श्रुतस्य चेत्यनेन सर्वकर्मसमुदायो विवक्ष्यते। अन्यथाज्ञाने निवृत्ते निवृत्तिधर्मनिष्ठो भविष्यतीति तात्पर्यम्। निवृत्तिकर्मानुष्ठानरूपो योगः साक्षाज्ज्ञानहेतुः। स च योगः मिथ्याज्ञानदोषनिवृत्तिपर्यन्तं कर्तव्य इति श्रीराघवेन्द्रस्वामी विवृणुते। अत्र निर्वेदशब्दस्य नितरां लाभ इत्यर्थः कारणैरेभिः श्रीमदानन्दतीर्थः स्वीकरोति—'तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य'[1] इति श्रुतौ निर्वेदशब्दः नितरां लाभ इत्यर्थे प्रयुक्तः। 'आत्मारामा हि मुनयो निर्ग्रन्था अप्युरुक्रमे कुर्वन्त्यहेतुकीं भक्तिमित्थंभूतगुणो हरिः॥'[2] इति श्रीमद्भागवतश्लोकेन भगवद्भक्तैरपि पुरुषार्थत्वं वर्णितम्। शुकादीनां च तादृशभक्तिमात्रेण अवाप्तसमस्तकामत्वं पुराणेषु वर्णितम्। अतः श्रोतव्ये श्रुते च सर्वत्र वैराग्यस्य अनावश्यकता असंभवश्च दृश्यते। 'नात्यन्किं विगणयन्त्यपि ते प्रसादम्'[3]; 'नैकान्ततां मे स्पृहयन्ति केचित्'[4]; 'एकत्वमप्युत दीयमानं न गृह्णन्ति' इत्यादिवचनैः मुक्तिमनिच्छतामपि मोक्ष एव फलम्। एवं तदिच्छतामपि तदेव फलमिति तत्र तारतम्यमनयोः। एवं सर्वत्र वैराग्यस्य असम्भवः। किन्तु मुख्यार्थे अबाधिते रूढ्यर्थस्य वैराग्यस्य ग्रहणमेव युक्तम्। सर्वकर्मफलवैराग्यस्य विव-

---

१. बृ० उ०, ३.५.१
२. श्री० भा० १.७-१०
३. तदेव ३.१५-४८
४. तदेव २.२५-३४

क्षितत्वादत्र रूढ्यर्थग्रहणमेव युक्तं, न तु 'पाण्डित्यं निर्विद्य'[1]त्यत्रैव नितरां लाभ इत्यर्थः कल्पनीय इति अन्येषां व्याख्यातॄणामाशयः। सगुणभक्तानां कर्मफले वैराग्यं वर्जितम्। भक्तावपि वैराग्यं केनाऽपि न विवक्षितम्। अतो नास्ति भागवतश्लोकानां विरोधः निर्वेदपदस्य वैराग्यमिति रूढ्यर्थग्रहणेन। न च गौणमुक्तो तारतम्यविरोधः, यदि तत्रैव तात्पर्यं भागवतस्येति स्वीक्रियते। सर्वथा तु कर्मफले वैराग्यस्यैवात्र विवक्षा। अतो नास्ति वस्तुतः वैरुध्यम्।

श्रुतिविप्रतिपन्ना ते यथा स्थास्यति निश्चला।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥[2]

मोहकलिलस्य नाशेन विवेकप्रज्ञां प्राप्य परमार्थयोगप्राप्तेः कालोऽनेन-श्लोकेनोच्यते इति भगवत्पादमतम्। 'योगे त्विमां शृणु' इति प्रस्तुतस्य आत्मनः याथात्म्यमवगम्य समत्वबुद्धिं प्राप्तस्य कर्मयोगस्य फलभूतं ज्ञानप्रधानं कर्मा-प्रधानं च यज्ज्ञानयोगं तस्य निरूपणमनेन श्लोकेनेति भगवद्रामानुजः। पूर्व-श्लोकोक्तानां श्रोतव्यश्रुतसर्वविधानां फलानां प्राप्तिसाधनस्य परमात्मसाक्षा-त्कारस्य समयमेव श्लोकोऽयं विशदयतीति श्रीमदानन्दतीर्थः। तत्र भगवत्पादमते 'योगमवाप्स्यसि' इति यो योग उक्तः स अहंकाराद्युपाधिवर्जितः आत्मसाक्षा-त्कारः। 'आत्मन एकाकारतया तिरस्कृतानात्मदृष्टिं विदधीते' इति वेदान्तसारोक्तरीत्या सर्वोपाधिरहितस्य आत्ममात्रस्य साक्षात्कारः। स एव असंप्रज्ञातसमाधिरिति कथ्यते इति षष्ठाध्यायव्याख्यावसरे मधुसूदनसरस्वती विवेचयिष्यन्ति। आत्मस्वरूपमात्रप्रवणा तदेकाग्रे वत्र बुद्धिर्भविष्यति। ततश्च योगं आत्ममात्रविषयकं साक्षात्कारमवाप्स्यसि इति योजना। इयमेवावस्था जीवन्मुक्तानां तुर्यातीता ब्रह्मविद्वरिष्ठावस्थेति च योगवासिष्ठे विवेचितम्।[3] तां सप्तमीभूमिकेति तत्र वर्णयन्ति। तत्र जीवन्मुक्तस्य आद्यास्तिस्रोऽवस्था

---

१. बृ० उ० ३.५.१

२. गी० २.५३

३. शास्त्रसज्जनसम्पर्कैः प्रज्ञामादौ विवर्धयेत्।
प्रथमा भूमिका प्रोक्ता योगस्यैव च योगिनः।
विचारणा द्वितीया स्यात्तृतीया सङ्गभावना।
विलापनी चतुर्थी स्याद्वासनाविलयात्मिका ॥

जाग्रदवस्था। तुरीया स्वप्नावस्था, पञ्चमी सुषुप्त्यवस्था, षष्ठी तुरीयावस्था सप्तमी तुरीयातीतेति च निर्णीतम्। ब्रह्मानन्दगिरिस्तु पञ्चमी सुषुप्तिः, षष्ठी गाढसुषुप्तिः, सप्तमी तुरीयेति वदति।

भगवद्रामानुजस्तु 'श्रुतिविप्रतिपन्ना—अस्मत्तः श्रवणेन विशेषतः प्रतिपन्ना, सकलेतरविसजातीयनित्यनिरतिशयसूक्ष्मात्मविषया' बुद्धिः; अचला एकरूपा, समाधौ-असंगकर्मानुष्ठानेन निर्मलकृते मनसि निश्चला स्थिरा स्थास्यति, तदा योगं आत्मावलोकनमवाप्स्यसि इति व्याचष्टे। शास्त्रजन्यं ज्ञानं, तेन युक्तः कर्मयोगः, तेन स्थितप्रज्ञाख्यः कर्मयोगः, तेनात्मयाथात्म्यसाक्षात्कारः इति वदति। तत्र ज्ञानयोगेन शास्त्रजन्यं परोक्षात्मनिश्चयः, अपरोक्षानुभूतिरिति द्वेधा तत्फलं विभज्यते।

श्रीमदानन्दतीर्थस्तु—वेदवाक्यश्रवणात्पूर्वं विपरीततया प्रवर्तते बुद्धिः; तच्छ्रवणानन्तरं अव्यामोहिता एकरूपैव श्रद्धाविशेषसंस्कृता स्थास्यति; ततश्चासंप्रज्ञातसमाधिर्भवति, तेन योगः—ब्रह्मसाक्षात्कारो भविष्यतीति वर्णयति। 'तदा समाधावचला बुद्धि'रिति वा, समाधौ इत्यत्र सतिसप्तम्यन्तं स्वीकृत्य वा योजनीयम्। तथा च विपरीतोपदेशस्य अवशंवदानां परोक्षतो ब्रह्मनिश्चयं प्राप्तानामेव समाधिः ततो ब्रह्मसाक्षात्कारश्च भवतीति तात्पर्यम्। अत्र निर्दिष्टोऽसंप्रज्ञातसमाधिः। यस्यां भेरीताडनादपि क्षोभः चाञ्चल्यं वा न भवतीति सर्ववृत्तिनिरोधमात्रमेवासंप्रज्ञातसमाधिः, न त्वात्मसाक्षात्कारोऽपीति श्रीमन्मध्वमतम्। समाधिविषये मतत्रयं निर्दिष्टम्। एकं सर्ववृत्तिनिरोधमात्रम्। न तदेवात्मसाक्षात्कारं, तेन वाऽऽत्मसाक्षात्कारः। द्वितीयं तु तेन साक्षात्कार इति आनन्दतीर्थैरादृतः। तृतीयं तु स एव साक्षात्कार इति भगवत्पादाभिप्रायः।

---

शुद्धसंविन्मयानन्दरूपा भवति पञ्चमी।
अर्द्धसुप्तप्रबुद्धाभो जीवन्मुक्तोऽत्र वर्तते॥
स्वसंवेदनरूपा च षष्ठी भवति भूमिका।
आनन्दैकघनाकारा सुषुप्तस्य दशा स्थितिः॥
तुर्यावस्थोपशान्ताऽथ मुक्तिरेवेह केवलम्।
समता स्वच्छता सौम्या सप्तमी भूमिका भवेत्॥
तुर्यातीता च याऽवस्था परा निर्वाणरूपिणी।
सप्तमी सा परिप्रौढा विषयः स्यान्न जीवताम्॥

अर्जुन उवाच—

स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।
स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥[1]

अत्र षष्ठभूमिकायाः साधनावस्था पञ्चमभूमिका । तत्रैव समाधिस्थावस्था । का भाषा इति तल्लक्षणप्रश्नः, षष्ठ्या भूमिकाया लक्षणप्रश्नस्तु 'स्थितप्रज्ञस्य का भाषा' इति । अतः 'का भाषा' इति प्रश्नांशः मध्यमणिन्यायेन उभयोः पञ्चमषष्ठभूमिकयोस्तुल्यः । आनन्दगिरिव्याख्याया अस्य श्लोकस्यावतरण-प्रसंगे 'ज्ञाननिष्ठस्य लक्षणविवक्षया तन्निष्ठासाधनबुभुत्सया पृच्छति स्म इति स्पष्टमुक्तम् ।' स्थितधीः किं प्रभाषेत इत्यादिभिः समाधिस्थस्यैव विषये तत्कर्तृकं भाषणमासनं गमनं च कीदृशं; जाग्रत्येव सुषुप्तितुल्यः सुषुप्तिवत् किं सर्वथा न व्यवहरति उत व्यवहरतीति प्रश्नाभिप्रायः । संक्षेपतया पञ्चमषष्ठ-भूमिकयोः को भेद इति प्रश्नस्य तात्पर्यम् । अत एव भगवत्पादः 'स्थितप्रज्ञस्य लक्षणमनेन श्लोकेन पृच्छति' इति वदन् स्थितप्रज्ञावस्थस्यैव लक्षणं पृच्छ्यते न तु उत्थितावस्थायां स्थितप्रज्ञस्येति सूचयति । स्थितप्रज्ञः समाधिस्थो वा कैर्लक्षणै-र्बोद्धव्यः इति परमार्थप्रपाऽपि । श्रीधरस्वाम्यपि पक्षयुगमवलम्बते । पैशाच-भाष्यं शंकरानन्दश्च तथैव व्याख्यातः । मधुसूदनसरस्वती, सदानन्दः, भाष्यो-त्कर्षदीपिका, ब्रह्मानन्दगिरिश्च श्लोकेऽस्मिन् द्विविधानामपि लक्षणप्रश्न इत्यभि-प्रयन्ति । स्थितप्रज्ञो द्विविधः—समाधिस्थो, व्युत्थितश्च । पूर्वार्धेन समाधिस्थस्य लक्षणप्रश्नः उत्तरार्धेन व्युत्थितस्येति विवेचयन्ति ।

षट्सु श्लोकेषु प्रश्नस्योत्तरं दत्तम् । तत्राद्यं श्लोकद्वयं पञ्चमभूमिकास्थं जीवन्मुक्तं; तृतीयश्लोकः तुरीयभूमिकां प्राप्तं जीवन्मुक्तं; चतुर्थः श्लोकः, तृतीयभूमिकास्थं; पञ्चमः श्लोकः द्वितीयभूमिकास्थं जीवन्मुक्तं; षष्ठः श्लोकः प्रथमभूमिकास्थं च निरूपयन्ति, सप्तमभूमिकास्थो हि विदेहमुक्तः ब्रह्मरूपः न जीवन्मुक्तपदवाच्यः नाऽपि स्थितप्रज्ञः इति योगवासिष्ठक्रमेण सिद्ध्यति । एतेषु षष्ठभूमिकास्थ एव सर्वोत्तमो जीवन्मुक्तेषु । तदवस्थाप्राप्तिरेव विदेह-मुक्तये भविष्यति । सा च प्रशंसिता 'या निशा' इत्युत्तरश्लोकेन ।

---

१. गी०, २.५४

भगवद्रामानुजः द्विविधं स्थितप्रज्ञं स्वीकुर्वन् शुद्धप्रत्यगात्मसाधनज्ञाननिष्ठस्य एकस्यैव लक्षणं तदीयभाषणादिकं कीदृशमिति जिज्ञासितं प्रश्नेनाऽनेनेति वदति ।

श्रीमदानन्दतीर्थोऽपि असंप्रज्ञातसमाधिस्थस्य ब्रह्मापरोक्षज्ञानिन एकस्यैव जीवन्मुक्तप्रकारस्य लक्षणं पृष्टमित्यभिप्रैति ।।

प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान् ।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ।।[1]

चतुर्थभूमिकायां यत्नेन संपादनीयानि यानि साधनानि सन्ति तानि पञ्चमभूमिकायां स्थितस्य स्थितप्रज्ञस्य अयत्नसाध्यानि, तस्य लक्षणत्वेन वक्तुं शक्यते । एवमेव पञ्चमभूमिकायां यत्नसाध्यानि षष्ठभूमिकायां स्वतः सिध्यन्ते । तल्लणमनेन श्लोकेन निरूपयति । प्रथमभूमिकायां जाग्रदवस्थायां स्वार्थबुद्धिपरित्यागः, इन्द्रियार्थेषु वैराग्यप्राप्तिः । द्वितीयभूमिकायां श्रेष्ठाचार्यमभिगम्य वेदान्तार्थविचारः, शास्त्रार्थावगमश्च । तृतीयभूमिका असंगावस्था । तुरीयभूमिकायां सर्वत्र मिथ्यात्वबुद्ध्या समलोष्टाश्मकाञ्चनः, निर्द्वन्द्वो नित्यसत्वस्थो निर्योगक्षेमश्च वर्तते । इमे चत्वारः भूमिकाः जाग्रदवस्थायामेव । सर्वे लोकावसेयाः प्रत्यक्षादिप्रमाणगोचरा इति कृत्वा तेषां लक्षणद्वाराऽनुमानस्यावश्यकता नास्तीति तेषां लक्षणमनुक्त्वा पञ्चमभूमिकाया आरभ्य लक्षणमुच्यते । तुरीयभूमिकायां यत्नसाध्यं हृद्गतसर्वकामप्रहाणं यदा अयत्नसिद्धं भवति तदा पञ्चमभूमिकामारूढो भवति । स एव स्थितप्रज्ञः, यस्य लक्षणमनेन कृतार्थश्लोकेनोच्यते । एतदभिप्रेत्य भगवत्पादः—'सर्वत्रैव ह्यध्यात्मशास्त्रे लक्षणानि यानि तान्येव साधनान्युपदिश्यन्ते' इति[1] वदति । 'कृतार्थलक्षणानि' इति भाष्यांशं विवृण्वन् आनन्दगिरिः 'लक्षणानि च ज्ञानसामर्थ्यलभ्यान्ययत्नसाध्यानीति' व्याचष्टे । अस्यां पञ्चमभूमिकायां स्थितः सुषुप्तावस्थायामनुवर्तमानस्य अज्ञानस्य तिरोभावार्थं प्रयतते । एवं प्रयतमान एव स्थितप्रज्ञो भवति; न चेत् केवलं सुषुप्त एव सः । अस्यां भूमिकायां यत्नसाध्योऽज्ञानप्रनाशः संस्काररूपेणानुवर्तमानः अयत्नसाध्यो यदा भवति तदा षष्ठीं भूमिकां प्राप्नोति, 'या निशा सर्वभूतानि' इति प्रशंसार्हा सा स्थितिः । एवम-

---

१. सैव २.५५

१. शां भा० आ० टी०, पृ० २१४, गुजरातीप्रिण्टिंगप्रेसप्रकाशितम् ।

यत्नसिद्धसर्वकामप्रहाणं चतुर्थभूमिकायाः परिणामभूतं पञ्चमभूमिकास्थस्य जीवन्मुक्तस्य लक्षणमेवास्मिन् श्लोके न तु तदुपरिस्थितानां जीवन्मुक्तानाम् । अत्र 'सर्वान् कामान्' इति ब्रह्मलोकान्तानां कामानां परामर्शः । स्थितप्रज्ञस्य य आनन्दः तत्पुरतः सर्वेषां क्षुद्रानन्दत्वमवगच्छति इदमेव तैत्तिरीयश्रुतौ 'श्रोत्रियस्य चाकामहतस्य'[1] इति आवृत्या निरूपितम् । अयमकामहतः श्रोत्रियः स्थितप्रज्ञ एव । यो हि क्रमेण मानुषानन्दादारभ्य, सगुणब्रह्मानन्दपर्यन्तं पुरत उपस्थापितं सर्वं स्वानन्दापेक्षया क्षुद्रमिति तृणाय मन्यते । अत्र मनोगतानां कामानामेव प्रहाणं न तु मनसोऽपि । बद्धः संसारी मनस आत्मनश्च तादात्म्याध्यासात् कामान् मनोगतान् आत्मन्येवाध्यवस्यति । अयं तु मनोगतान् कामानात्मनि नारोपयतीत्ययमेव विशेषः । मनस्तु वर्तत एव । कामानां निर्बीजतया न निरसनं किन्तु तेषामात्मन्यसम्बद्धताज्ञानमेव । आत्मन्येवात्मना तुष्टः—प्रत्यगात्मनि स्वयमेव बाह्यलाभनिरपेक्षं सन्तुष्टः । अन्यत्र अलं बुद्धिमानित्यर्थः ।

भगवद्रामानुजः, आत्मना-मनसा, आत्मनि-आत्मैकावलम्बनेन तुष्ट इति व्याचष्टे । श्रीमदानन्दतीर्थस्तु आत्मनि-परमात्मनि स्थितः, आत्मना-परमात्मनैव तत्प्रसादेनैव तुष्ट इति विवृणुते । अत्र कामानां मनोगतत्वं सर्वैराचार्यैः स्वीक्रियते । योगस्यान्तिमा दशेयं यत्र मनोगतान् कामान् सर्वान् प्रजहाति आत्मन्येवात्मना तुष्टो भवतीति भगवद्रामानुजमतम् । अद्वैतमते तु जीवन्मुक्तस्य पञ्चमी भूमिकेयं अन्तिमप्रायाऽवस्था । पञ्चमस्याभ्यासवशेन प्राप्यायाः षष्ठभूमिकायाः ईषद्भिन्ना । तत्र अभ्यास एव वैशिष्ट्यं न साधनान्तरापेक्षा । वस्तुतः अनयोर्मतभेदो नास्तीत्येव वक्तुं शक्यते ।

> दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
> वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥[2]

षष्ठभूमिकायामयत्नसिद्धानि पञ्चमभूमिकायामनुष्ठेयानि साधनान्यत्र उपदिश्यन्त इति भगवत्पादरीत्या श्लोकस्यास्य उद्देशः । तेन च पञ्चमावास्थायामपि दुःखेपूद्वेगादिकं किञ्चिदिव प्रारब्धशेषेण अनुवर्तेत । तस्याप्युपशमे स्थितप्रज्ञः षष्ठीं भूमिकां प्राप्नोति । यत्र स्थितो 'न दुःखेन गुरुणापि विचाल्यते' ।

---

१. तै० उ०, २.८.१-४

२. गी०, २. ५६.

दुःखेषु-आध्यात्मिक-आधिभौतिक-आधिदैविकेषु दुःखेषु; अनुद्विग्नमनाः-अक्षुभितमनाः। यथा गाढनिद्रायां कदाचन शरीरकम्पादीन्यज्ञायमानानि उत्पद्यन्ते तथा पञ्चमावस्थायां कम्पादयो ये भवितुमर्हन्ति तद्रहित इत्यर्थः। तथैव सुखेषु—तादृशेषु त्रिविधेषु, विगतस्पृहः-तृष्णारहितः। पञ्चमभूमिकायामुत्पद्यमानामेव तृष्णां शमयति तद्वृद्ध्यर्थं च यतते। अत्र विनैव यत्नं तृष्णावृद्धिर्निरुद्धेति भावः। वीतरागभयक्रोधः अनुभूतेषु विषयेषु तृष्णाविशेषो रागः, परेण विनापि कारणं गात्रनेत्रादिविकारो जायेत इति भयं; परापकारे क्रोधः—सर्वैरेतैर्विहीनः मुनिः सर्वदा आत्मैकचिन्तानिष्ठः स्थितप्रज्ञ इत्युच्यते।

ब्रह्मानन्दगिरिस्तु व्युत्थितस्य भाषणप्रकारः श्लोकद्वयेनोच्यत इत्यवतारयति। नीलकण्ठस्तु समाधिस्थस्यैव लक्षणमुच्यत इत्यभिप्रेति। अनन्तरेण श्लोकेनैव स्थितधीः किं प्रभाषेतेत्यादीनामुत्तरमाहेति च वदति। अत्र मधुसूदनसरस्वती, सदानन्दः, भाष्योत्कर्षदीपिका, ब्रह्मानन्दगिरिश्च समानरूपेण व्याख्यान्ति, शङ्करानन्दः, श्रीधरः, पैशाचभाष्यं, परमार्थप्रपा च आनन्दगिरिमतमनुसरन्ति।

भगवद्रामानुजः योगस्य तृतीयावस्था अत्र वर्ण्यते या 'सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः सर्वथा वर्तमानोऽपि स योगी मयि वर्तते' इति श्लोकेन वक्ष्यते। अस्यां तृतीययोगावस्थायां सर्वभूतस्थमीश्वरमसंकुचितज्ञानैकाकारतया एकत्वमास्थितः प्राकृतभेदपरित्यागेन सुदृढं यो भजते, स योगी व्युत्थानकालेऽपि यथातथावर्तमानं स्वात्मानं सर्वभूतानि च मयि पश्यतीति व्याचष्टे। अत्र समाधौ व्युत्थाने च कोऽपि भेदो नास्ति। अतः अद्वैतिभिः समाधिव्युत्थानयोर्विभागो योऽत्र विवक्षितः तस्य प्रयोजनं नास्ति। सर्वत्र ज्ञानैकाकारतया भगवत्साम्यदर्शनमात्रं ह्यत्र विवक्ष्यते। यो हि सर्वत्र भगवत्साम्यं पश्यति स दुःखेषु अनुद्विग्नमनाः इत्यादिलक्षणो भवति।

श्रीमदानन्दतीर्थस्तु ब्रह्मसाक्षात्कारवतो विशेषानेवात्र प्रतिपादयतीति मन्यते।

यस्सर्वत्रानभिस्नेहः तत्तत्प्राप्य शुभाशुभम्।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥'

---

१. सैव, २. ५७

अनेन प्रज्ञास्थैर्यं संपादनीयमिति बोध्यत इत्यानन्दगिरिमतं भगवत्पादमतानुसारेण । नात्रापि व्युत्थितस्थितप्रज्ञचर्चा । किन्तु चतुर्थभूमिकाया लक्षणं प्रतिपाद्यते । तृतीयभूमिकाप्राप्या असंगनाम्नी योगावस्था जाग्रदवस्थायाः विशेष एव । यत्र स्थितः सर्वं सत्यं मन्वान एव व्यवहरति, किन्तु असङ्गबुद्ध्या । तत्र स्थितः विषयाणां सत्यत्वबुद्धिमपोहितुं प्रयत्नं क्रियेत । यस्य साफल्ये तुरीया स्वप्नाख्या भूमिकोदेति । ब्रह्मानन्दगिरिः, नीलकण्ठः, मधुसूदनसरस्वती, सदानन्दः, भाष्योत्कर्षदीपिका च भाषणप्रकारनिरूपणपरोऽयं श्लोक इति वदन्ति । पैशाचभाष्यं, शंकरानन्दः, श्रीधरश्च स्थितप्रज्ञलक्षणान्येव संगृह्णन्ति ।

भगवद्रामानुजस्तु योगिनो द्वितीया दशाऽत्र वर्णितेति मन्यते ।

यो मां पश्यति सर्वत्र, सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ।।

इति वक्ष्यमाणरीत्या यत्र सर्वस्यात्मवस्तुनः विधूतपापस्य स्वरूपेणावस्थितस्य परमात्मना साधर्म्यं मुक्तावस्था विवक्ष्यते । मुक्तः 'निरञ्जनः परमं साम्यमुपैति'[1] इति श्रुतिवचनात् परमात्मना सहैव सर्वान् कामान् अश्नुवानः कथं वा वैषयिकेषु तुच्छेष्वभिस्नेहवान् भवति; सुखेषु दुःखेषु वा प्राप्तेषु कथं तान्यभिनन्दिष्यति द्विष्यति इत्यत्र वर्ण्यते । सुखे दुःखे वा प्राप्ते अनभिस्नेहवान्—असन्तोषवान् नाभिनन्दति—न तुष्यति, न वा द्वेष्टि—न निन्दति । प्रशंसानिन्दावाक्यानि न भाषते स स्थितप्रज्ञः ।

यथा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ।।[2]

विषयेभ्यः इन्द्रियाणां प्रत्याहरणं (withdrawal) नाम स्थितप्रज्ञस्य साधनान्तरमुपदिश्यतेऽत्र । इदमेव विचारणाख्यद्वितीयभूमिकायां यत्नसाध्यं यस्य स्थिरीकरणे तृतीयभूमिकायामसङ्ग इति व्यपदिश्यते ।

विषयेभ्यः इन्द्रियाणां प्रत्याहरणं जाग्रदवस्थायामेव वर्तत इति भाषणव्यवहारादिकं सर्वं तत्र अकुण्ठितमेव प्रचरति । इदं तु व्युत्थितानां विषये

---

१. मु० उ०, ३. १. ३१
२. गी०, २.५८

'किमासीत किं व्रजेत' इत्यादिप्रश्नोत्तरमिति नीलकण्ठः। स्थितप्रज्ञस्यैवासन-गमनादि निरूप्यत इति श्रीधराभिमतम्।

भगवद्रामानुजस्तु योगिनः प्रथमा दशाऽत्र वर्णितेति व्याख्याति।

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥[१]

इति श्लोके वक्ष्यमाणा दशाऽत्र सूच्यते। यत्र सर्वेषामात्मनां ज्ञानैकाकारतया साम्यं, स्वाभाविकं; वैषम्यं तु प्रकृतिसम्बन्धकृतमौपाधिकम्। साम्यावस्था-मापन्नः इन्द्रियाणां विषयाभिमुखीं प्रवृत्तिं प्रत्यावृत्य आत्माभिमुखीं कर्तुं प्रयतते। यथा कूर्मो भयात् स्वाङ्गानि सर्वत उपसंहरति एवं द्वितीयभूमिकां प्राप्तो ज्ञानी भीत्या विषयेभ्य इन्द्रियाण्युपसंहरते। विषयेभ्यः दूरेऽवस्थितिः प्रज्ञास्थैर्याय भवति इति तत्र प्रयतते।

विषया विनिवर्तन्ते निराहारस्य देहिनः।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥[२]

विषयेभ्यः इन्द्रियाणां प्रत्याहरणं नाम न केवलं विषयेभ्यः इन्द्रियाणामनभि-मुखीकरणं किन्तु मनसः बुद्धेश्च परतन्त्रतया अवस्थापनम्। अथवा मनसः बुद्धेश्च आत्माभिमुखीकरणम्। बुद्धौ आत्माभिमुखे सति तदायत्तं मनः इन्द्रियाणि च विषयेभ्यः प्रत्यावृत्य अनासक्तिं प्रत्युपकरोति। श्लोकार्थस्तु निराहारस्य देहिनोऽप्यशक्त्या विषया निवर्तन्ते, विषयेष्वासक्तिर्न भवति। परं तु न सा इन्द्रियाणां विषयेभ्यः प्रत्याहाराय प्रभवति। अतस्तत्र रागः केवलमनुवर्तते। बुद्ध्याश्च प्रत्याहारे बुद्धिपरवशानि मनः इन्द्रियाणि चेति हेतौ मनसोऽप्या-त्माभिमुख्यं तेन सरागविषयनिवृत्तिश्च भवति। सा च सरागविषयनिवृत्तिः बुद्धेः परदर्शनेनेत्यर्थः।

भगवद्रामानुजस्तु श्लोकादस्मादारभ्य श्लोकत्रयेण ज्ञानिनश्चतुर्विधा निष्ठा निरूपिता इत्यभिप्रयन्ति। ज्ञानिनोऽवस्थाचतुष्टयं यत्प्रतिपादितं तत्र प्रथमा 'यतमाना' नाम। तत्र बाह्येन्द्रियान् विषयेभ्यः प्रतिसंहृत्य मनसः

---

१. सैव, ६. २९.

२. सैव, २. ५९.

आत्मनि व्यवस्थापनार्थं प्रयत्नेन आत्मानं लभते। यतमानावस्थां प्राप्तुमुपायाश्चात्र वर्णिताः इति तन्मतम्।

श्रीमदानन्दतीर्थस्तु इत आरभ्य श्लोकत्रयेण ब्रह्मसाक्षात्काराख्यं स्थितप्रज्ञासाधनं निरूप्यत इत्यभिप्रेति।

> यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः।
> इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः॥
> तानि सर्वाणि संयम्य युक्त आसीत मत्परः।
> वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता॥[1]

इदं श्लोकद्वयं द्वितीयभूमिकायां स्थितस्य स्थितप्रज्ञस्य लक्षणं विवृणुते इति भगवत्पादादीनां मतम्। मनसो वशीकरणमेवात्यावश्यकं प्रज्ञास्थैर्याय; किमर्थमिन्द्रियाणामपि स्ववशे नयनमिति श्लोकेनानेन वदति। इन्द्रियाणि खलु मनोनिर्गमपथानि। तेषामनिरोधे, हठादेव मनसो विषयदेशगमनं भवति। यतः इन्द्रियाणि प्रमाथीनि विषयाभिमुखं मनः पुरुषं च विक्षेपयन्ति आकुलीकुर्वन्ति वा, तेन च प्रसभं बलादेव विषयाभिमुखं तदाकारप्रकाशपरं वा मनः कुर्वन्ति। इदं तु न केवलमज्ञानां विषये किन्तु विपश्चितामपि सम्भाव्यमिति ध्वनिः। तथा चोक्तं भगवत्पादेन ब्रह्मसूत्रभाष्ये[2]—'पश्वादिभिश्चाविशेषात्' पश्वादिवत् व्युत्पन्नचित्ता अपि विषयाभिमुखं व्यवहरन्तीति तदाशयः। निर्विकारीकृतमपि मनः इन्द्रियाणामविजये क्षणमात्रेण सविकारं भवतीति भावः। अतो मनोविजयः प्रथमं सम्पादनीयः। तस्योपायः 'मत्पर' इति। मनोरूपवाजिनः प्रग्रहस्य प्रबले स्थाने बन्धनेन संरुद्धो भवति। विपश्चितः-विदुषोऽपि यततः पुरुषस्य मनः—वशीकृतमपि मनःप्रमाथीनि इन्द्रियाणि प्रसभं हरन्ति। ततः मत्परस्सन् यतमानः पुरुषः तानि सर्वाणि नियम्य युक्तः प्रज्ञाया स्थिरीकरण एव निष्ठः आसीत्। यस्य इन्द्रियाणि वशे वर्तन्ते तस्य प्रज्ञाऽपि स्थिरा भवति। एवं द्वितीयभूमिकामारूढो भवतीति भावः।

भगवद्रामानुजमते व्यतिरेकाख्या द्वितीया योगावस्था सिद्धा भवतीति श्लोकतात्पर्यम्। श्रीमदानन्दतीर्थोऽप्यत्र इन्द्रियविजयं विना मनोमात्रस्य

---

१. सैव, २.६०-६१.

२. ब्र० सू० भा० अध्यासप्रकरणम्।

विजयः अपरोक्षज्ञानिनोऽपि दुष्करो भवति; अतः इन्द्रियजयोऽवश्यं कर्तव्य इति मन्यते ।

ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते ।
सङ्गात्सञ्जायते कामः कामात्क्रोधोऽभिजायते ॥
क्रोधाद्भवति सम्मोहः सम्मोहात्स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥[1]

आभ्यां श्लोकाभ्यामात्मनिष्ठां परमात्मनिष्ठां वा विना स्वयत्नेनैवेन्द्रियजयार्थं प्रवृत्तिः विपरीतं फलं ददाति, अविवेकदार्ढ्यायैव भवतीति प्रतिपाद्यते । विषयाभिमुखान्येव इन्द्रियाणि कृत्वा तद्विजयार्थं प्रयत्नः न जातु फलप्रदः किन्तु विपरीतफलप्रद इति ।

न जातु कामः कामानामुपभोगेन शाम्यते ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥[2]

इत्यादिन्यायेन सिद्धम् । विषयाणामात्मनाशप्रभावं सूचयति 'ध्यायत' इत्यादिभिः । विषयान् ध्यायतः पुंसः तेषु सम्बन्धो भवति; सङ्गात् कामः; कामात् क्रोधः; क्रोधात् सम्मोहः—किंकर्तव्यताविमूढता; सम्मोहात् स्मृतिविभ्रमः—शास्त्रानुशीलनेनाचार्योपदेशेन च जनितो यस्संस्कारः तदर्थस्मरणं न भवति, अन्तःकरणस्य कार्याकार्यविवेकशक्तिर्नष्टा भवति । बुद्धिनाशस्त्वयमेव ततो प्रणश्यति—पुरुषार्थायोग्यो संसार एव मग्नः नरकादिभागी जीवच्छवो भवति । मुक्तेस्सर्वथा अनर्हः लोकनिन्दास्पदो वा भवति । अत्र सङ्गः काम इति पृथङ् निरूपितौ । सङ्गशब्देन आसक्तिमात्रमुद्दिष्टम् । तदुद्रेकस्तु कामः । एवं प्रथमभूमिकामप्यारोढुमसमर्थो भवति । अत्रोद्दिष्टे क्रमे व्याख्याने वा प्रायशस्सर्वे व्याख्यातारः समानं मतमवलम्बन्ते । तदारुरुक्षुणा बुद्धिनाशादिकं मम मा भूदिति प्रयतनीयमिति बोधयितुं उत्तरं श्लोकद्वयम् ।

रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥

---

१. गी०, २. ६२-६३.
२. म० स्मृ०, २. ६४.

प्रसादे सर्वदुःखानां हानिरस्योपजायते ।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥[१]

यदा प्रयत्नसाध्यानीन्द्रियजयादीनि स्वतःसिद्धानि भवन्ति, तदा प्रथमभूमिकामारूढो भवन्ति । तत्र प्रथममिन्द्रियाणां रागद्वेषवियोग आवश्यक इति रागद्वेषवियुक्तैरिति विशेषणेन द्योतयति । इन्द्रियाणां रागद्वेषसंबन्धस्तु तेषामाश्रयभूतस्य मनसः संयोगेनैव । एवं परम्परया, विषयाणामपि रागद्वेषयोगः । इदमेव पश्चाद्वक्ष्यते 'इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ । तयोर्न वशमागच्छेत् तौ ह्यस्य परिपन्थिनौ ।" इति । यदि मनो नीरागं भवति तर्हि इन्द्रियाणि विषयाश्च रागवियुक्ता भवन्तीति सूचयितुम्—'आत्मवश्यै'रिति । रागशून्यस्य आत्मनोऽधीनं यदा मनः तदा मनसो नीरागता तदधीनानामिन्द्रियाणां विषयाणां च नीरागता भवति तेन च आत्मा प्रसन्नो भवति स्वरूपेण अवस्थितो भवति । अन्यथा सरागे मनसि आत्मनोऽनधीने सति, आत्मनि च मनोऽधीने, आत्मादि विषयान्तं सर्व रागयुक्तं भवति, प्रसादस्य प्रसङ्गोऽपि न स्यात् । आत्मनि प्रसादः तदा भवति यदा बुद्धिरूपः सारथिः, मनोरूपः प्रग्रहः. इन्द्रियरूपाण्यश्वानि च स्वरूपेण वर्तन्ते । अतः स्वार्थेन दुःखितः प्रथमभूमिकां प्राप्तुं बुद्धेः स्वस्थाने रक्षितुं प्रयत्नं कुर्यात् । भगवद्रामानुजमते 'एकेन्द्रिय' इति प्रसिद्धा ज्ञानिनः तृतीयावस्था विवक्षिता श्लोकेऽस्मिन् । अद्वैतमते प्रथमभूमिकार्थ संपादनीयं साधनमात्रमत्रोक्तम् ।

नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।
न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥[२]

अन्वयरीत्या पूर्वश्लोके यदुक्तं तदेव व्यतिरेकेणेह उच्यते । अयुक्तस्य—अवशीकृतान्तःकरणस्य, अवशीकृतेन्द्रियस्य वा, बुद्धिर्नास्ति—बुद्धेः पर्यवस्थानं नास्ति । यस्य बुद्धिर्न पर्यवतिष्ठते तस्य नास्ति भावना । अवस्थितस्य स्वात्मस्वरूपस्य ज्ञाने अभिनिवेशः भावनाशब्देन विवक्ष्यते । तादृशाभिनिवेशस्याभावे न शान्तिर्न दुःखहानिः संभवति । अशान्तस्य कुतस्सुखम् ? कुत इत्याक्षेपे ।

---

१. गी०, २. ६४ -६५.
२. सैव, २. ६६.

इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ।।[1]

इन्द्रियाणामात्मवश्यत्वं न चेत्, मन इन्द्रियाणां वशे वा चेत् बुद्धिनाशो भवति । यदि मनः चरतामिन्द्रियाणामनुविधीयते–अनुचरति तर्हि अस्य पुरुषस्य प्रज्ञां बुद्धिं हरति । यथा समुद्रस्य तीरसमीपे स्थिता नौका झंझावातेन दूरान्नीयते तथा । यद्यप्यात्मसमीपे बुद्धिस्तिष्ठति तथापि इन्द्रियाणि बुद्धिमात्मानं च दूरादपसारयति । अतो नेन्द्रियवश्यं मनः कर्तव्यं किन्तु मनोवशान्येवेन्द्रियाणि । एवमेव बुद्धेर्यथास्थाने अवस्थितिर्भवति । एवं एकेन्द्रियाख्यं तृतीयावस्थाया साधनं मन्यते ।

तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ।।[2]

अनेन स्वार्थबुद्धिदशायां (स्थितप्रज्ञावस्थायाः पूर्वं) अनुष्ठीयमानानि प्रथमभूमिकासाधनानि यदा अयत्नेनैव स्वयं प्रकटीभवन्ति तदा प्रथमभूमिकामापद्यते । प्रथमतः 'प्रजहाति यदा कामा'नित्यारभ्य पृथक् पृथक् संगृहीतं ज्ञानिनोऽवस्थाचतुष्टयं क्रमेणात्र संग्रहेण निरूप्यते । भगवद्रामानुजमते तुरीया ज्ञानिनो वशीकारावस्था संगृह्य क्रमेणाऽत्र निरूप्यते ।

या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ।।[3]

एतावत्पर्यन्तं ज्ञानिनोऽवस्थाचतुष्टयं एकैकशः प्रतिपाद्य, तत्तदवस्थाप्राप्तावपि ज्ञानयोगीति यद्यपि वक्तुं शक्यते तथापि अवस्थाचतुष्टयसम्पन्न एव मुख्यो ज्ञानयोगीति च प्रतिपादितम् । तादृशस्य सम्पूर्णज्ञानयोगिनः प्रशंसा क्रियते इति भगवद्रामानुजः ।

स्थितप्रज्ञलक्षणमुपसंहर्तुं षष्ठभूमिकायामासन्नजीवन्मुक्त्यवस्थं पञ्चमभूमिकापर्यन्तमाप्तानां साधनानां फलभूतं प्रशंसतीति भगवत्पादमतम् । स्थितप्रज्ञस्य

---

१. सैव, २. ६७.
२. सैव, २.६८
३. सैव, २. ६९.

'विहाय कामा'नित्यारभ्य उक्तं सर्वं लक्षणं साधनावस्थायामुपायसिद्धायां वा विद्यमानं पिण्डीकृत्य निरूपयितुं 'या निशे'त्यारभ्य श्लोकचतुष्टयमिति श्रीमदानन्दतीर्थः। पूर्णज्ञानिलक्षणं तद्व्यवहारोपपत्तिश्चानेन श्लोकेन प्रतिपाद्यत इति द्वैतविशिष्टाद्वैताभिमतोऽर्थः। अद्वैतमते पूर्णे स्थितप्रज्ञे षष्ठभूमिकास्थे न व्यवहारादिरपि सम्भवति, तस्य सुषुप्ताविव स्थितिरिति। योगवासिष्ठे 'जाग्रत्येव सुषुप्तस्थः कुरु कर्माणि राघव' इति वचनं पञ्चमभूमिकापर्यन्तमेव साधु। षष्ठे तु तस्याऽपि निवृत्तिः। श्रीमदानन्दतीर्थस्तु पञ्चमभूमिकापर्यन्तं प्रारब्धकर्मविशेषेण कर्मकर्तृत्वम् (volition) सम्भवति; षष्ठभूमिकायां प्रसुप्तस्यैव शरीरमात्रे वेपनादिकमन्यैर्दृश्यन्ते, तत्र (without volition) तस्य अभिमानलेशोऽपि नास्ति यतः मनसः इन्द्रियैः सम्बन्धः सर्वथा विच्छिन्नः।

अद्वैतमतरीत्या इयं योजना—सर्वभूतानां या निशा, ब्रह्मणोऽज्ञानं, प्रपञ्चस्य मिथ्यात्वाज्ञानं वा, तस्यां संयमी—ज्ञानी जागर्ति। ब्रह्मज्ञानवान् प्रपञ्चमिथ्यात्वज्ञानवान् जागर्ति। यस्यां प्रपञ्चसत्यतायां ब्रह्मासत्यतायां वा भूतानि—अज्ञाः, जाग्रति--अभिनिविष्टास्सन्ति, सा—प्रपञ्चसत्यता--बुद्धिः, ब्रह्म-प्रपञ्चयोः परस्पराध्यासजनितो भ्रमः, मुनेः—मननशीलस्य निशा—शान्ता भवति। भगवत्पादाः प्रथमस्य निशाशब्दस्य सर्वपदार्थानामविवेककरी अवस्था इति व्याख्यन्ति। संयमिव्यतिरिक्तानां सर्वेषां भूतानां तमःस्वभावतः। यथा कौशिकपक्षिणः नक्तंचरस्य निशैव परमार्थतत्वं तथाऽज्ञानिनामपि। तस्यां निशायां प्रबुद्धो जागर्ति। ते अज्ञानिन यदा जागर्तीति मन्यन्ते तदाऽपि तेषां जागरणमप्यज्ञानमेव स्वप्नदर्शनतुल्यमेव, न तु परमार्थज्ञानमिति व्यज्यते। तेन ग्राह्यग्राहकभेदलक्षणस्य प्रपञ्चस्य स्वप्नवत् मिथ्यात्वमेव सूच्यत इति भगवत्पादमतम्। स्वप्ने प्रतीयमानानि वस्तूनि स्वप्नकाले सत्यवदेव प्रतीयन्ते; जाग्रदवस्थायामेवानुभूयन्त इति तदानीं प्रतीतिर्जायते। एवं ग्राह्यग्राहकभेद-लक्षणप्रतीतिः सत्या प्रतीतिरिति वक्ष्यमाणाऽपि स्वप्नवन्मायामात्रमिति निष्कर्षः। 'मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्'[1] इति बादरायण-सूत्रव्याख्याने 'बाध्यन्ते चैते रथादयः स्वप्नदृष्टाः प्रबोधे। स्वप्न एव चैते सुलभबाधा भवन्ति; आद्यन्तयोर्व्यभिचारदर्शनात्। रथोऽयमिति कदाचित् स्वप्ने निर्धारितः क्षणेन मनुष्यः सम्पद्यते मनुष्योऽयमिति निर्धारितः क्षणेन

---

१. ब्र० सू०, ३. २.१

वृक्षः। ······तस्मान्मायामात्रं स्वप्नदर्शनम् ।''[१] इति भगवत्पादैर्विवेचितम् । स्वप्नतुल्यत्वादत्र मिथ्यात्वमिति विवक्षा। 'जाग्रति' शब्दार्थो 'जागर' इति निष्कृष्यते भगवत्पादेन। सत्यताप्रतीतिमात्रं यदि जागरणं तर्हि स्वप्नस्यापि जागरत्वमभ्युपगन्तव्यम्। अस्तु नाम स्वप्नस्यापि जागरत्वमिति वक्तुं न शक्यते। अर्थक्रियाकार्यत्वं स्वप्नदृष्टानां न सम्भवति। स्वप्ने दृष्टं स्वप्नावस्थायामेव तदुचितसर्वव्यवहारयोग्यं भवति न तु जागरेऽपि, तद्वदेव यावद्ब्रह्मज्ञानं तावन्मिथ्याप्रपञ्चस्य सत्यवत् प्रतीयमानस्य तदुचितास्सर्वा व्यवहाराः विधिनिषेधशास्त्रव्यवस्था, कर्माकर्मविकर्मभेदाः पुण्यपापौ, किं बहुना सर्वमपि द्वन्द्वजातं सम्पद्यते। अत्र शंकरानन्देन निशाशब्दव्युत्पत्तिरेवं कृता—'अज्ञानिपक्षे नितरां शेरतेऽत्रेति तमिस्रा रात्रिज्ञानावस्था निशाशब्दार्थः। ज्ञानिपक्षे तु नि—शं सुतरामानन्दवत्त्वं निशाशब्दार्थम्'। अज्ञानिनां निशायामात्मानन्दस्यावृतस्य भानं; ज्ञानिनां निशायामनावृतस्य आनन्दस्य भानम्। जाग्रत्येव सुषुप्तिर्ज्ञानिनोऽखण्डाकारसाक्षात्कारस्य मानसस्य तत्र सत्वात्। अज्ञानिनस्तु न मानससाक्षात्कारः। तदीयसुषुप्तौ मनसो भावेन विशदतरानन्दानुभवासम्भवादिति विवेकः। 'यस्यां जाग्रति भूतानि' इति निर्दिष्टा जागरदशा अज्ञानिनामविद्या। 'सा निशा पश्यतो मुनेः असतीव प्रतीयते। द्वैतभासो अज्ञानिनाम्। ज्ञानिनां त्वद्वैतप्रतिभासेन समूलं द्वैतप्रतीतेस्समुच्छेद इति तात्पर्यार्थ' इति शंकरानन्दः व्याख्यान्तरमपि ददाति।

भगवद्रामानुजः श्लोकेऽस्मिन् नियतेन्द्रियस्यप्रसन्नमनसःस्सिद्धिः प्रतिपाद्यत इति व्याख्याति। या आत्मविषया बुद्धिः सर्वभूतानां निशा निशेवाप्रकाशा, तस्यामात्मविषयायां बुद्धौ संयमी—प्रसन्नमना जागर्त्ति—आत्मानमवलोकयन्नास्ते। यस्यां—शब्दादिविषयायां बुद्धौ, सर्वाणि भूतानि जाग्रति—प्रबुद्धानि भान्ति, सा शब्दादिविषया बुद्धिः, आत्मानं पश्यतो मुनेः निशा—निशेवाप्रकाशा भवतीति व्याचष्टे। ज्ञानिनामिव अज्ञानिनामपि बुद्धिः स्वप्रकाशैव। किन्तु प्रमास्थाने यद्धर्मभूतं ज्ञानं कर्मवशंन तत्प्रतिबद्धं भवतीति हेतोरप्रकाशत्वमुक्तमत्र। अत्र स्थितप्रज्ञत्वं नाम शुद्धस्य जीवात्मनो विलोकनमेव। न तु भगवत्पादोक्तरीत्या जीवात्मनोर्ब्रह्माभिन्नत्वेन साक्षात्कारः। शुद्धजीवात्मदर्शने प्रपञ्चमिथ्यात्वस्य चर्चावसरो नास्ति। शुद्धजीवात्मनो दर्शनेन अद्वैतमतेऽपि प्रपञ्चो न बाधितः।

---

१. ब्र० सू० भा०, पृ० ६९२

अविद्यया आवृतः शुद्धजीवात्मा जगदधिष्ठानमिति स्वीकृतमद्वैतिभिः। किमर्थं पुनः प्रपञ्चमिथ्यात्वसत्यत्वमधिकृत्य विचारः क्रियत इति शङ्का। स्थितप्रज्ञता नाम त्वंपदार्थलक्ष्यस्य साक्षात्कारावस्थैव। सा च कर्मयोगस्यान्तिमम् लक्ष्यम्। स तु तत्पदार्थलक्ष्येण सह अभेदज्ञानानन्तरमेव भवतीति हेतोः तदप्यत्रानुसन्धायैव स्थितप्रज्ञलक्षणं कथ्यते। तेनैव प्रपञ्चसत्वमिथ्यात्वचर्चापि क्रियत इति तेषां समाधानम्।

आत्मज्ञानं त्वत्र न केवलं शुद्धजीवात्मज्ञानं परन्तु परमात्मसाक्षात्कार एवेत्यानन्दतीर्थाभिप्रायः। स च परमात्मासाक्षात्कारः जीवाभिन्नसाक्षात्कारो नैवेति तेषां अद्वैतिनां च वैमत्यम्। शुद्धजीवात्मसाक्षात्कारमात्रं ब्रह्मविद्याया लक्ष्यमिति यद्विशिष्टाद्वैतिभिः स्वीक्रियते तदपि नाभिमतम्। अतः परमात्मसाक्षात्कार एव जीवात्मभेदपुरस्कृतः द्वैतिनामभिमतः। परमात्मसाक्षात्कारवतां प्रायेण सुप्तानामिव विषयज्ञानं न भवतीति व्याचष्टे। तेन च स्थितप्रज्ञानामपि कदाचिदेव विषयाज्ञानम्; न तु सर्वदा। पूर्वं ज्ञानिनाप्यानन्दतारतम्योपपादनेन इष्टभोगसम्भवः प्रतिपादितः तदेव स्थितप्रज्ञानां लक्षणम्।

श्रीवल्लभाचार्यस्तु ज्ञानिनामितरेषां चानन्दानुभवे वैपरीत्यं बोध्यतेऽनेन श्लोकेनेति वदति। सर्वभूतानां निद्रायामात्मसुखमात्रस्य अनुभवः न विषयभोगानन्दस्यानुभवः। एवं जाग्रदवस्थायां विषयसुखस्यैवानुभवः न त्वात्मानन्दस्य। ज्ञानिनां तु निद्रायां ज्ञानावस्थायामपि विषयसुखानामनुभवो न भवति; जाग्रदवस्थायां आत्मानन्दानुभवोऽस्त्येव। एवमुभयत्र तेषां समानो आनन्दः। तेषां विषयानन्दानुभवोऽपि आत्मानन्दानुभव एव। तथा च गृहस्थाश्रम एव तिष्ठन्तः विषयानन्दमनुभवन्तोऽपि परमात्मानन्दमेव अनुभवन्ति। स्थितप्रज्ञाः मर्यादाभक्ताः प्रशंस्यन्तेऽत्रेति। ते खलु विषयानन्देषु मग्ना अपि न प्रायश्चित्तार्हा सामान्यजनवत्।

आपूर्यमाणमचलप्रतिष्ठं
समुद्रमापः प्रविशन्ति यद्वत्।
तद्वत्कामा यं प्रविशन्ति सर्वे
स शान्तिमाप्नोति न कामकामी॥[1]

---

१. गी०, २.७०.

सर्वेषां भूतानां या निशा सा ज्ञानिनो जाग्रदवस्था भवति न केवलं विषयाणामज्ञानेन, किन्तु पूर्णानन्दानुभवेनापि । (Negative and positive content of the awakened stage) सुषुप्तौ हि आनन्दमात्रमविद्यानिवृत्या अनुभवन्ति किन्तु आनन्दमिति ज्ञात्वा तत्र नानुभवः । अत्र तु ज्ञात्वैवानुभवः । ब्रह्मभावमापन्नः युगपद् सर्वानानन्दाननुभवति, तथानुभवन्नपि क्षुद्रकामेषु न कामनामश्नुते । अयं स्वेनानुभूयमानस्य पूर्णानन्दस्य पुरतः गन्धर्वानन्दादि चतुर्मुखब्रह्मानन्दान्तं सर्वं तृणाय मन्यते । समुद्रतुल्योऽयमिति तस्यावस्थां वर्णयत्यनेन श्लोकेन । यथा नद्यः प्रवहन्त्यः वर्षाकाले समुद्रं प्रविशन्त्योऽपि तमापूरयन्त्योऽपि न तं चालयितुं प्रभवन्ति न वा उद्वेलं गमयन्ति तद्वत् कामाः स्थितप्रज्ञं जाग्रदवस्थायां वर्तमानमपि प्रविशन्ति तस्मिन् विलयं गच्छन्ति । ब्रह्मानन्दे सर्वानन्दानामन्तर्भावः । तेषां प्रवेशेऽपि स शान्तोऽविकृत एव वर्तते । कामकामी तु न तथेति भावः । यथा आपः आत्मना आपूर्यमाणमपि अचलं स्वस्थमेव समुद्रं प्रविशन्ति, एवं जाग्रत्येव सुषुप्तं पञ्चमभूमिकास्थं स्थितप्रज्ञं षष्ठभूमिकास्थं च यं सर्वे कामाः प्रविशन्ति, स शान्तिमाप्नोति । कामकामी तु न तथेति योजना । त्यक्तैषणस्य सर्वसन्यासिनश्च यतेरेव स्थितप्रज्ञस्य मोक्षप्राप्तिः, ब्रह्मभावो वा, न तु विदुषोऽसन्यासिनः प्रथमादिभूमिकायामवस्थितस्यापि । अत्र अपां समुद्रे कामानामात्मनि प्रवेशः तत्र लय एव । यथा नद्यः समुद्रादुत्पन्नाः समुद्रस्यैव तथा विषयानन्दाऽप्यात्मानन्द समुद्रस्यांशा एव न ततो भिन्नाः । 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति'[1] इति बृहदारण्यके । एवं विषयानन्दैरात्मानन्दस्य न भवति वृद्धिरिति भावः । वस्तुतः ब्रह्मव्यतिरेकेण विषयाणामभावात् ब्रह्मज्ञानिनो दृष्ट्या नैव सन्ति विषयाः, वैषयिकाणां कामानां का कथा ।

भगवद्रामानुजोऽपि समुद्रस्यैव अविकार्यत्वमेवाभिप्रैति । प्रविशन्तीत्यत्र प्रपञ्चमिथ्यात्वमनपेक्ष्यैव एकरूपत्वं विवृणुते । ब्रह्मानन्दगिरिः यद्यपि भगवत्पादमतानुसारी, अस्मिन् श्लोके प्रविशन्तीत्यस्य भगवद्रामानुजीयां व्याख्यामनुसरति, प्रपञ्चमिथ्यात्ववादविवक्षां नात्र पश्यति । मधुसूदनसरस्वती 'या निशा' इति श्लोके कामानां पृथक्सत्वमस्वीकृत्य वर्णितमस्मिंस्तु तेषां पृथक्सत्वं स्वीकृत्यापि तेषामकिञ्चित्करत्वं दर्शयतीति व्याचष्टे । इदं तु

---

१. बृ० उ०, ४. ३.३२

प्रकरणविरुद्धमनावश्यकं मन्यते भाष्योत्कर्षदीपिका। 'न कामकामी' इत्यत्र कामशब्देन ब्रह्मानन्दव्यतिरिक्तास्सर्वे कामा विवक्षिता इति सर्वे आचार्या व्याख्यातारश्च मन्यन्ते । श्रीमदानन्दतीर्थः तदनुयायी राघवेन्द्रस्वामी च अनिष्टमिश्राणि कर्मफलान्येव कामशब्दार्थ इति मन्येते। अन्यत्तु सर्वं भगवद्रामानुजानुसारमेव ताभ्यां व्याख्यातम्।

विहाय कामान् यः सर्वान् पुमांश्चरति निस्पृहः।
निर्ममो निरहंकारः स शान्तिमधिगच्छति ॥[1]

'प्रजहाति यदा कामान्' इति पञ्चमभूमिकायां यो यत्नसाध्यः कामत्यागः प्रतिपादितः स एवायत्नसिद्धः षष्ठभूमिकां गतस्य स्थितप्रज्ञस्येति वर्णनेन प्रक्रान्तं स्थितप्रज्ञलक्षणमुपसंहरति। 'स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम्' इति प्रश्नस्यापि समाधानमत्र वदति। यः पुमान् सर्वान् कामान् विहाय निस्पृहः, निर्ममः, निरहंकारश्च चरति स शान्तिमधिगच्छतीति। अत्र सर्वान् कामान् परित्यज्य चरति, निस्पृहश्चरति, निर्ममश्चरति, निरहंकारश्चरतीति पृथक् पृथक् 'चरति' पदेनान्वयो विवक्ष्यते। सर्वान् कामान् परित्यज्य चरतीति जीवन्मुक्तो भवतीत्यर्थः। यदा च जीवनमात्रचेष्टा अवशिष्टा वर्तते तदाऽपि शरीरजीवनमात्रे निर्गतस्पृहः इति निस्पृहश्चरतीत्यत्र विवक्षा। शरीरजीवनमात्रे ममतारहितश्चरति। अत उक्तं निर्ममश्चरतीति। ममताभिमानरहितोऽपि सूक्ष्मरूपेण सुषुप्ताविव अहं भावोऽपि नास्ति। विद्याजनितात्मसंभावना वा तस्य नास्ति। अत एव निरहंकारश्चरति। तेन च कामपरित्यागनिरहंकारत्वयोः पौनरुक्त्यं नास्तीति सिद्ध्यति। भगवद्रामानुजः श्रीमदानन्दतीर्थश्च कामान् सर्वान् निस्पृहतया विहाय चरतीति व्याचख्यौ। श्रीमदानन्दतीर्थः निस्पृह इत्यस्य निषिद्धकामानां वर्जनमिति व्याख्याति। 'सर्वान् कामान्' इति सर्वशब्दविशेषणेऽपि विहितकामानामत्यागेनैव स्थितप्रज्ञस्य आनन्दानुभव इति न विरोधः। अत्र निर्ममत्वेन चैतन्यस्य अन्तःकरणस्य च परस्परधर्माध्यासराहित्यं विवक्षितम्। निरहङ्कारत्वं नाम चैतन्यान्तःकरणयोः धर्मिणोः परस्पराध्यासराहित्यमिति भगवत्पादमतम्। विषयेषु ममेदमित्यहंकारराहित्यं निर्ममत्वं, अनात्मन्यात्माभिमानराहित्यं निरहङ्कारत्वं च मन्यते भगवद्रामानुजः।

---

१. गी०, २. ७१.

श्रीमदानन्दतीर्थेन स्वामित्वाभिमानराहित्यं निर्ममत्वं, कर्तृत्वाभिमान-राहित्यं निरहङ्कारत्वमिति व्याख्यातम् । 'चरति' इति पदमकर्मकं संभवद्रागद्वेषादिवारणाय वासव्यावर्तनेन पर्यटनं सर्वदेशेष्विति भगवत्पादानु-सारिणी व्युत्पत्तिः । केवलं वर्तत इति भगवद्रामानुजव्याख्यायामपि अकर्मकमेव । कर्माविवक्षया उभयत्राकर्मकत्वम् । श्रीमदानन्दतीर्थस्तु 'भक्षयतीति' सकर्मकमेव तत्पदं व्याचष्टे । कर्तृत्वाद्यभिमानपरित्यागेन अभिमतान् विषयान् भुञ्जानश्चरति । सर्वेषामिष्टविषयाणामनुभवः तन्मते ब्रह्मानन्दसाक्षात्कारवतोऽपि स्वीकृत इति हेतोः 'चरति' पदं सकर्मकत्वेन व्याख्यातम् ।

एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।
स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ।।[1]

'आपूर्यमाणमचलप्रतिष्ठ'मिति पूर्वश्लोकस्याशयः संगृहीतः । ब्राह्मी स्थितिः—ब्रह्मरूपेणावस्थानमिति भगवत्पादः । शरीरवियोगस्य पूर्वक्षणकालमपि इयं स्थितिर्यदि स्यात् तर्हि तदानीमेव षष्ठभूमिकारूढोऽपि स ब्रह्मनिर्वाणं विदेहकैवल्य-मेव प्राप्नोति । अन्ते वयस्यपि स्थितप्रज्ञतां पूर्णतया गतस्य यदि विदेहमुक्तिः तर्हि ब्रह्मचर्यादेव सन्यस्य यावज्जीवं स्थितप्रज्ञावस्थायां वर्तमानः ब्रह्मनिर्वाणं गच्छतीति किमु वक्तव्यमित्यभिप्रायः । भगवद्रामानुजेन ब्राह्मी ब्रह्मप्रापिका स्थितिः—कर्मणि स्थितिरिति व्याख्यातम् । न विमुह्यति पुनः संसारं वाप्नोतीति च व्याख्याति । श्रीमदानन्दतीर्थः ब्राह्मी ब्रह्मविषया इति व्याचष्टे । अन्तकाले स्थितिश्च भगवत्स्मृतिरिति व्याख्याय, ज्ञानिनोऽपि प्रारब्धकर्मनाशे एव अन्तकाले भगवत्स्मृतिरिति तस्मादेव मोक्ष इति चाभिप्रेति । 'निर्वाणं' विष्णुरिति व्याख्यातं; वाणं शरीरमिति व्युत्पत्त्या जडदेहाभाववान् विष्णुरेव निर्वाणपदवाच्य इति तस्याभिप्रायः ।

---

१. सैव, २. ७२.

# चतुर्थः परिच्छेदः

## कर्मविचारः

'कर्मण्येवाधिकारस्ते'[1] इति भगवता अर्जुनं प्रति कर्मयोग एवाधिकारः प्रदर्शितः । किन्तु द्वितीयाध्यायस्य 'नत्वेवाह'[2]-मित्युपक्रमेण, 'बुद्धौ शरण-मन्विच्छ'[3] इति परामर्शेन, स्थितप्रज्ञलक्षणवर्णनरूपेण उपसंहारेण च भगवता ज्ञानयोगस्य ज्यायस्त्वं प्रतिपादितमिति सत्यम् । तेन च भगवतः परमं तात्पर्यं ज्ञानयोग एव, कर्मयोगे त्ववान्तरं तात्पर्यमिति ज्ञायते ।

'यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे'[4] इति पार्थप्रार्थनामनुसृत्य तस्य श्रेयोमार्गमुपदेष्टुं प्रवृत्तः भगवान्, ज्ञानयोग एव ज्यायांश्चेत् किमर्थं युद्धाख्ये घोरे कर्मणि नियोजयतीत्यर्जुनस्य आशङ्का । यदि कर्मयोग एव अर्जुनविषये श्रेयस्त्वेन मन्यते तर्हि ज्ञानयोगस्य उपदेश एव व्यर्थः । यदि ज्ञानकर्मणोः समुच्चय एवाभिमतः तर्हि 'कर्मण्येवाधिकारस्ते' इति मुक्तकण्ठं यदुपदिष्टं तन्न समीचीनम् । ज्ञानयोगस्य अङ्गत्वेन यदि कर्मयोगो विवक्ष्यते तर्हि सर्वोत्तम-श्रेयोमार्गः क इति प्रश्नस्यावकाश एव न स्यात् । अर्जुनस्य प्रश्नेनैवेदं ज्ञायते यत्पूर्वाध्याये ज्ञानयोगस्यैव श्रेयस्त्वप्रतिपादने भगवतस्तात्पर्यमभूदिति, न

---

१. गी०, २. ४७.

२. सैव, २. १२.

३. सैव, २. ४९.

४. सैव, २. ७.

ह्युभयोः समुच्चये न वा कर्मयोगस्य श्रेयस्त्वे । 'तदेकं वद निश्चित्य'[1] इत्यनेनावगम्यते यदर्जुनेनाऽपि उभयसमुच्चयपक्षो न स्वीकृत इति । 'कर्मयोगमात्रमाश्रित्य उपदेशो विधीयतां ममायोग्ये ज्ञानयोगे किमर्थं वृथा कण्ठक्षोभः' इति वक्तव्ये 'तदेकं वद' इति वाक्येन कर्मयोगमात्रे तात्पर्यमिति अर्जुनेन एतावताऽपि नावगतमिति ज्ञायते; तथैव न ज्ञानयोगमात्रे परमं तात्पर्यमिति च । किन्तु ज्ञानयोगस्य उपक्रमोपसंहारादिषु यत्प्राधान्यं दत्तं तेन तत्रैव स्यात्परमं तात्पर्यमिति संशयो जागर्ति तन्मनसि । किन्तु 'कर्मण्येव' इति निश्चप्रचं विधिरूपेण यदुक्तं तेन कर्मयोगोऽपि भगवतस्तात्पर्यं स्यादिति शङ्कनीयं वर्तते । अत एवार्जुनस्य प्रश्नः[2] तृतीयाध्यायारम्भे ।

ज्ञानकर्मसमुच्चयपक्षो न गीताभिमत इति भाष्यावतरणसन्दर्भ एव प्रथममुक्त्वा[3] भगवत्पादाः पुनस्तदनूद्यन्तेऽत्र यथा—'अस्माच्च भिन्नपुरुषानुष्ठेयत्वेन ज्ञानकर्मनिष्ठयोः भगवतः प्रतिवचनदर्शनात् ज्ञानकर्मणोः समुच्चयानुपपत्तिः ।'[4] इति ।

श्रीमद्रामानुजः—'कर्मणः प्रत्यगात्मज्ञानासम्मिभिन्नस्य कर्मयोगत्वमेव न सम्भवति । शुद्धप्रत्यगात्मज्ञानं हि न केवलं भक्तियोगे किन्तु कर्मयोगेऽप्यपेक्षितमेव । तत्र 'विज्ञानसारथिर्यस्तु मनः प्रग्रहवान् नरः'[5] इति भक्तियोगेन ज्ञानयोगेन उपकारः स्पष्टं प्रतिपद्यते । भक्तियोगसाधनं चेदं प्रत्यगात्मदर्शनं परोक्षतया तन्नित्यताज्ञानपूर्वकासङ्गकर्म निष्पाद्य ज्ञानयोगसाध्यम् तत्र आत्मयाथात्म्यसाक्षात्कारसाधनज्ञानयोगो हि कर्मयोगं विना न सिद्ध्यति इति कर्मयोगोऽपि

---

१. सैव, ३. २.

२. ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ।
तत्किं कर्मणि घोरे मां नियोजयसि केशव ।।
सैव, ३. १.

३. एवं सांख्यबुद्धिं योगबुद्धिं चाश्रित्य द्वे निष्ठे विभक्ते भगवता एवोक्ते ज्ञानकर्मणोः कर्तृत्वाकर्तृत्वैकत्वानेकत्वाबुद्ध्याश्रययोः एकपुरुषाश्रयत्वासंभवं पश्यता । ..........तदेतद्विभागवचनमनुपपन्नं स्याद्यदि श्रौतकर्मज्ञानयोः समुच्चयः अभिप्रेतः स्याद् भगवतः । शां० भा०, २. १०.

४. तत्रैव, ३.१.

परम्परया यद्यपि श्रेयस्साधनमेव तथापि इन्द्रियव्यापारोपरतिसाध्यतया ज्ञानयोगस्य तत्र विनाऽपि कर्मयोगं स्वतन्त्रतया इन्द्रियव्यापारोपरतिमात्रेण आत्मयाथात्म्यदर्शनं साधयितुं शक्यते। अतः किमर्थमिन्द्रियव्यापारसापेक्ष्ये कर्मयोगे मां नियोजयसीति प्रश्न इति अभिप्रैति। अत्र बुद्धिशब्देन इन्द्रियव्यापारोपरतिसाध्योऽसङ्गकर्मनिष्पाद्यज्ञानसाध्यः आत्मसाक्षात्कारो विवक्ष्यते। यदि प्रत्यगात्मसाक्षात्कार एवाऽत्र भक्तियोगसाधनं श्रेय इति मन्यते तर्हि तादृशस्य साक्षात्कारस्य कर्मयोगापेक्षा नास्ति। अतः निवृत्तिमार्गरतं प्रति किमर्थं कर्मयोगोपदेश इति तात्पर्यम्। आत्मावलोकनमेव यदि सिसाधयिषितं न तु भक्तियोगः, तदाऽपि साक्षादिन्द्रियव्यापारोपरतिप्रधानस्य निवृत्तिमार्गस्यैव उपयोगः, न तत्सापेक्षः कर्मयोगः। सति चैवं, सङ्ग्रहेण द्वितीयाध्याये प्रतिपादितस्यैव तत्त्वस्य अर्जुनप्रश्नोत्तरक्रमेण विस्तरतः प्रतिपादनमुपरितनेन अध्यायचतुष्टयेनेति निष्कर्षः।

कर्मनिष्ठया ज्ञाननिष्ठा, तत आत्मसाक्षात्कारः, ततो भक्तियोगस्ततो मोक्ष इति पूर्वाध्यायकृता व्यवस्था। तत्र, विना कर्मयोगं, ज्ञाननिष्ठादिमात्रेण मोक्षो भवति वा न वेति पार्थप्रश्नस्य तात्पर्यं श्रीमद्रामानुजमतेन।

अद्वैतमते तु आत्मावलोकनमेव साक्षात् साधनं; तत्र च 'मयि चानन्ययोगेन भक्तिरव्यभिचारिणी'[1] ति भक्तियोगोऽपि साधनमेव। तच्चात्मावलोकनं श्रवणमननादिनिष्पाद्यम्। कर्मयोगस्तु श्रवणमननाद्यधिकारलाभाय उपयुज्यते, न साक्षात्, अतः कर्मयोगे साक्षादनुपकारके किमिति नियोगः? कुतः श्रवणमननादिमात्रेण तन्न भवति? को वा कर्मणस्तत्रोपयोग इति प्रश्नाशयः।

मतद्वयेऽपि परम्परयैव कर्मयोगस्य उपयोगिता स्वीकृता। अतिदूरे उपकारकत्वेन मन्यमानस्य कर्मयोगस्य किमर्थं प्राधान्यं दीयत इति प्रश्नाशयः उभयथा लभ्यते।

दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय[2]।

इति ज्ञानयोगस्य कर्मयोगापेक्षया ज्यायस्त्वं पूर्वाध्याये प्रतिपादितमिति

---

१. गी०, १३.१०
२. सैव, २.४९

सर्वमतरीत्या न वक्तुं शक्यते। तत्र बहुभिः काम्यकर्मापेक्षया कर्मयोगोत्कर्षः प्रदर्शित इति व्याख्यातम्। स्थितप्रज्ञताप्रकरणे कर्मणः ज्ञाननिष्ठाहेतुत्वं यत्प्रतिपादितं तदनुसारेणैव, ज्ञानयोगप्राशस्त्यम् ऊह्यम्। इदं च 'श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला'[1] इति श्लोके स्पष्टमेव।

श्री मदानन्दतीर्थस्तु—'दूरेण ह्यवरं कर्म'[2] इति कर्मापेक्षया ज्ञानस्य प्राशस्त्यमुक्तवान्। अतो ज्ञानापेक्षया अनुत्तममपि कर्म ज्ञानसाधनत्वेनात्र उपदिश्यते। सति चैवं चतुर्थाध्यायविहितेन अहिंसादिप्रधानेन निवृत्तिधर्मेणापि तत्सम्भवात् किमिति हिंसादिप्रधाने युद्धकर्मणि नियोग इति प्रश्नाशयः इति प्रतिपादयति। अत्र बुद्धिशब्देन जीवेश्वरोभयस्वरूपज्ञानं विवक्षितं न तु जीवात्मज्ञानमात्रम्। अत एव मध्वमते 'न त्वेवाहं'मित्यादौ सर्वत्र ईश्वरस्वरूपमपि नित्यत्वसर्वगतत्वादिरूपेण प्रतिपादितम्। योगो हि द्विविधः कर्मसमाधिभेदात्। समाधौ न विप्रतिपत्तिः यतस्तत्र हिंसादिप्रयुक्तकर्मप्रसङ्गो नास्ति। कर्मणि विप्रतिपत्तिरस्त्येव मध्वमते यतः 'हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्'[3] इति वचनात् युद्धं काम्यकर्मैव, तस्य निष्कामकर्मता कदापि न सम्भवति। अकामत्वमात्रेण सर्वस्य निष्कामकर्मत्वविवक्षायामपि सन्यासाश्रमविहितं कर्मैव ज्ञानसाधनतयोपदेष्टव्यम्। अत्र पूर्वोत्तरयोः पक्षयोरुभयोरपि कर्म एव कर्तव्यतया उपदिश्यते। अद्वैतविशिष्टाद्वैतमतयोस्तु नैवम्। पूर्वस्मिन् पक्षे कर्माकरणमभिप्रेतम्, उत्तरपक्षे कर्मकरणमिति विशेषः। सत्यं कर्मण्येवाधिकारः; एवमपि युद्धादिकं घोरमेव कर्म कर्तव्यं विरक्तेनापि मया, उत शान्तं चतुर्थाश्रमविहितं कर्मेति द्वैतमते प्रश्नवाक्यस्य व्याख्या। अत्र 'जनार्दन' इति सम्बोधनमप्युपकरोति। हिंसात्मककर्मणि नियोजनं जनानर्दयितुं शीलमस्येति जनार्दनपदवाच्यस्य तवानुगुणमिवेति साकूतं सम्बोधितम्। श्रीराघवेन्द्रः प्रश्नं द्वेधा विभज्य व्याचष्टे। कर्मणोऽपेक्षया यदि बुद्धिर्ज्यायसीति तवाभिप्रायः, तर्हि किमिति कर्मणि नियोजयसीत्येकः प्रश्नः, तत्रापि घोरे कर्मणि किमित्यपरः प्रश्नः।

---

१. सैव, २.५३
२. सैव, २.४९
३. सैव, २.३७

अत्र अर्जुनस्यैव केवलमयं भ्रम इति उत्तरश्लोके[1] 'व्यामिश्रेणैव' 'मोहयसीव' इति इवशब्दद्वयेन निरूपितमिति सर्वेषां व्याख्यातॄणामभिप्रायः। व्यामिश्रणं तु वाक्यस्यैकं प्रति उभयोपदेश एव। तथा च पूर्वाध्याय इव उभयोपदेशनीतिं परित्यज्य मामुद्दिश्य एकमेवोपदेष्टव्यमिति प्रश्नाशयः। 'तदेकं वद' येन निश्चित्य अहं श्रेयोऽवाप्नुयाम् इति योजना। तेन च न भगवतोऽनिश्चितं सन्दिग्धं वा वचनं किन्त्वर्जुनस्यैवेति 'मोहयसीव' इत्यत्र इवशब्दो व्याख्यातो भवति। अथवा—'मामुद्दिश्यैकं निश्चित्य मदधिकारयोग्यमिदमिति निष्कर्षया वद इति योजना। उभयोपदेशप्रणाली पुनरपि नानुस्रियतां येन मम मोहो नापगच्छेदिति भावः। तत्र प्रथमा योजना श्रीमद्रामानुजस्य, द्वितीया तु भगवत्पादीया।

ज्ञानकर्मयोगयोर्भिन्नाधिकारिकत्वपक्ष एव भगवदभिमतः; तच्च भिन्नाधिकारिकत्वं न पुरुषभेदापेक्षं किन्तु अवस्थाभेदापेक्षमिति उत्तरश्लोकेन[2] सूचयति। इयं सरणिः भगवत्पादैः श्रीमद्रामानुजैश्च स्वीक्रियते। श्रीमदानन्दतीर्थमते पुरुषभेदापेक्ष एवाऽयं भिन्नाधिकारिकत्वपक्ष इति तद्भाष्यतो ज्ञायते।[3] अत्र 'ज्ञानयोगेन साङ्ख्यानाम्' इति प्रथमं ज्ञानस्य निर्देशेन ज्ञानयोगस्य ज्यायस्त्वमभिमतमिति ज्ञायते। भिन्नाधिकारिकत्वेऽपि उभयोरुपदेशस्तु एकस्यैव पुरुषस्य अधिकारभेदावस्थायां एकतराऽधिकारो वर्तत एवेति, तत्तदधिकारभेदनिरूपणमेव मया साम्प्रतं कर्तव्यं न तु एकस्यैव योगस्योपपादनमिति भगवत्पादरामानुजाभ्यां कृता व्याख्या युज्यते। अस्मिन् लोके विचित्राधिकारसम्पन्ने, तादृशं लोकमुद्दिश्य पुरा पूर्वाध्याये, अथवा सर्गादौ, मया

---

१. व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम्॥
सैव, ३.२

२. लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ।
ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम्॥
सैव, ३.३

३. द्विविधा अपि जनाः सन्ति। गृहस्थादिकर्मत्यागेन ज्ञाननिष्ठाः सनकादिवत्। तत्स्था एव ज्ञाननिष्ठाश्च जनकादिवत्।
मध्वभाष्य, ३.३

प्रोक्ता । पूर्वाध्यायप्रोक्तमुपजीव्यैवात्र प्रश्नः कृत इति हेतोः पूर्वाध्याय-विवक्षितस्यैव निष्कर्षोऽत्र क्रियत इति 'पुरा प्रोक्ता—पूर्वाध्याये प्रोक्ता' इति विवरणमपि समीचीनम् । अयमेव पक्षो मधुसूदनसरस्वती–केशवभट्ट–श्रीधर-स्वामिभिः स्वीकृतः । भगवत्पादस्तु 'पुरा सर्गादौ प्रजाः सृष्ट्वा' इति भाषते । अन्ये पक्षद्वयमपि स्वीकुर्वन्ति । पुरा सर्गादौ प्रतिपादितमेव पूर्वाध्याये पुनरनूदित-मिति नास्ति वैषम्यमुभयोर्व्याख्यानयोः । साङ्ख्यानामात्मानात्मविवेकिनाम् आत्मैकविषयबुद्धिमतां वा ज्ञानयोगेन निष्ठा; योगिनामतदर्हाणाम् अज्ञानिनां सत्वशुद्ध्यादिसम्पन्नानां कर्मयोगेन स्थितिरिति सर्वैर्व्याख्यातृभिः स्वीकृता योजना । इयान् विशेषः—योगयोरनयोरङ्गाङ्गिभावत्वमेकाधिकारिकत्वं चेति भगवत्पादरामानुजयोः । भिन्नाधिकारिकत्वमेवात्र योगद्वयस्येति श्रीमन्मध्व-मतम् । एतन्मते प्रियव्रतजनकादीनामर्जुनस्य च ज्ञानिनामपि सतां कर्मयोगेनैव स्थितिरिति निष्कर्षः । एतन्मतदृष्ट्या अनधिकारिणामस्मदादीनां विरक्तानां तुरीयाश्रम एवाधिकारः न तु कर्मयोग इति फलति । अस्मदादीनां कर्मयोगाधि-कारस्तु चित्तशुद्धिवैराग्यादिजनकतया सन्यासाश्रमे अधिकारसम्पादकतयैव । आधिकारिकाणां तु न तथा इति पार्थमाधिकारिकं मत्वा 'कर्मण्येवाधिकारस्ते'[1] तत्रापि 'धर्म्याद्धियुद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते'[2] इति घोरेऽपि कर्मण्येव नियोगो युक्त इति भगवदाशयोऽवगम्यते ।

मतान्तरदृष्ट्या अर्जुनः केवलं सत्वशुद्ध्यादिदैवसम्पद्युक्तः अभिजातः धर्माधर्मजिज्ञासुः; न ज्ञानी । तस्य ज्ञानसाधनभूते कर्मणि नियोगः भगवता क्रियते । घोरेऽपि युद्धाख्ये कर्मणि तस्य जुगुप्सा न भवितुमर्हति स्वधर्मत्वात् । तत्तद्वर्णाश्रमानुरूपं घोराघोरेषु कर्मसु स्वधर्मबुद्ध्या प्रवर्तनं स्वभावसिद्धम् । तत्र जुगुप्सादिकारणेन उपरतिर्न समीचीना । अत एवाऽत्र 'निष्ठा' पदप्रयोगः । निष्ठाशब्दः मार्गपरः । कर्मज्ञानयोः समप्रधानपक्ष एव अत्राभिमतः । किन्तु श्रीमदानन्दतीर्थेन अधिकारिभेदे पुरुषभेदोऽपि विवक्षित इति वदता, नित्यनरकिणः, नित्यसंसारिणः, मोक्षाधिकारिण इति जीवानां त्रैविध्यं यत् स्वसिद्धान्ते प्रपञ्चितं तस्यानुगुणमेव व्याख्यातम् । किन्तु कर्मयोगानुष्ठानेनापि कदापि मोक्षप्राप्तिर्न सम्भवति केषाञ्चिदिति श्रीमन्मध्वमतं बहुतरश्रौतसिद्धान्तविरुद्धं

---

१. गी०, २.४७

२. सैव, २.३१

प्रतिभाति । ज्ञानाधिकारिणां कर्मयोगेन चित्तशुद्धिं प्राप्तवतां साङ्ख्यमार्गे अधिकारः; अनधिकारिणां तु स्वधर्मानुष्ठानेन तत्र च फलासक्तित्यागेन, तज्जनितचित्तशुद्ध्या ज्ञानमार्गाधिकार इति शाङ्करं मतम् ।

कर्मणां यदि बन्धकत्वं तर्हि तेषामनारम्भ एव श्रेयानित्याशङ्कायां वदति—

न कर्मणामनारम्भात् नैष्कर्म्यं पुरुषोऽश्नुते ।
न च सन्यसनादेव सिद्धिं समधिगच्छति ।।[1] इति

अनेन कर्मत्यागः ज्ञानावाप्तेः प्राक् तत्प्रतिबन्धक एव भवति न तु तदनुकूल इति वदति । कर्मणामनारम्भात् नैष्कर्म्यं ज्ञाननिष्ठां नाश्नुते; न च कर्मपरित्यागमात्रात् सन्यसनात् नैष्कर्म्यलक्षणा सिद्धिः सम्पद्यते । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन'[2] इत्यादिवचनैः कर्मानुष्ठानस्यैव चित्तशुद्धिद्वारा ज्ञानसाधनत्वं प्रतिपाद्यते न तु कर्मत्यागस्य । औपनिषदाऽनेन मन्त्रेण[3] 'कर्मणां प्रवृत्तिपर्यन्तविविदिषाजनने उपयोग उच्यते । स्वाद्वन्नभोजनस्य विशिष्टतृप्तिसाधनत्वंज्ञानवतोऽपि रोगार्तस्य सम्यग्जरणशक्तिविहीनस्य बुभुक्षा नोत्पद्यते । औषधसेवया निवृत्तामयस्य तु प्रवृत्तिपर्यन्ता तीव्रा बुभुक्षा जायते । एवं विद्याप्रतिबन्धकपापादिमलमलिनान्तः-करणस्य ब्रह्मवेदने मोक्षसाधनत्वज्ञाने सत्यपि न तीव्रा विविदिषा जायते । कर्मानुष्ठानक्षपितकल्मषस्य तु प्रवृत्तिपर्यन्ता विविदिषा जायते । एवं विविदिषो-त्पादनद्वारा कर्मणामारादुपकारकतेति काण्डद्वयसम्बन्धः स्फुटमुदीरितः । कर्मणः विविदिषोत्पादकत्वकथनेन कर्मणि अविद्वान् अधिकारी इति सिद्ध्यति ।

नियतस्य तु सन्यासः कर्मणो नोपपद्यते ।
मोहात्तस्य परित्यागः तामसः परिकीर्तितः ।।[4]

इति वचनानुसारेण तादृशः कर्मत्यागः तामसत्वात् नरकसाधनमेव । ज्ञाननिष्ठायां यावदधिकारसिद्धिर्भवति तावत्कर्मणां फलत्यागमात्रपुरस्सरमनुष्ठानं कर्तव्य-

---

१. सैव, ३.४
२. बृ० उ०, ४.४-२२
३. पण्डितराजस्य वि० सुब्रह्मण्यशास्त्रिणः न्यायकल्पलतिकायाः, तिरुपती 'प्रस्तावना'-केन्द्रियसंकृतविद्यापीठप्रकाशनम्, १९७१, पृ० १०.
४. गी०, १८.७.

मेवेति भावः। नैष्कर्म्यशब्दे नञ्ज्ञाननिष्ठा विवक्षितेति भगवत्पादभगवद्रामानुजौ मन्येते। मोक्ष इति श्रीमदानन्दतीर्थः। भक्तिरिति वल्लभानुयायी पुरुषोत्तमः। सिद्धिशब्दोऽपि मोक्षपर इति श्रीमदानन्दतीर्थः श्रीराघवेन्द्रश्च वदतः। तौ सन्यासशब्देन कर्माकरणं विवक्षितमिति स्वीकृत्य तिरश्चां, किं बहुना, पाषाणादीनामपि मुक्त्यापत्तिरिति शङ्का स्यात्, तच्च 'पुरुष'पदप्रयोगेण निवारितेति वदतः। तथा च सिद्धिः परं सन्यासादेव, परन्तु स सन्यासः कर्मानुष्ठानचित्तशुद्ध्यनन्तरमेव न तु ज्ञानप्राप्तिनिरपेक्षः कर्मत्याग इति विवेकः। सति चैवमनधिकारिणां यतीनामपि विना कर्मयोगं ज्ञाननिष्ठाया मोक्षस्य वा असम्भवे, का वा कथा अधिकारिणोऽर्जुनस्य विषये इति द्वैतमतानुयायिनः अभिप्रयन्त्यत्र। एतन्मते यत्याश्रमोऽपि विरक्ताधिकारिको भगवत्तोषार्थमेवेति सोऽपि तुरीयाश्रमः कर्मानुष्ठेयत्वपक्षान्न वारितः।

भगवत्पादमते विविदिषासन्यासिनां कर्मयोगस्य अनिवार्यत्वेन अङ्गीकृतत्वात् नास्ति तत्र वैमत्यम्। विद्वत्सन्यासिविषये तु सर्वकर्मोपरतिरनिवार्येति हेतोरस्ति वैमत्यम्। आमरणं ज्ञानिनामपि स्वाश्रमोचितकर्माधिकार एव अद्वैतविशिष्टाद्वैतमताभ्यां स्वीक्रियते। अयमत्र निष्कर्षः—ज्ञाननिष्ठा कर्मणो ज्यायस्यैव। सा च सन्यासिमात्रानुष्ठेया। ज्ञाननिष्ठासाधनतया कर्मयोगानुष्ठानमावश्यकमेव। न त्वेतावता कर्मयोग एव साक्षान्मोक्षसाधनम्। नैष्कर्म्योपायः कर्मयोग इति प्रमाणान्तरैरपि ज्ञायते।[१] कर्माकरणमात्रेण नैष्कर्म्ये पाषाणादीनामपि मुक्त्यापत्तिः। अकरणं हि इह जन्मनि वर्तमानस्यैव भवति; न त्वतीतजन्मसु कृतानामनन्तानां कर्मणाम्। न च तानि सर्वाण्येकेन प्रकृतशरीरेण उपभोक्तुं पार्यन्ते। अतः साम्प्रतं कर्माकरणेऽपि न संसारविच्छित्तिः; प्रत्युत तन्निमित्तः प्रत्यवायः पापफलं च अनुवर्तेत।

कर्माकरणं न तावत्सुलभमपीति बोधयति 'न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्'[२] इत्यादिश्लोकेन। ननु कर्माकरणस्याभावरूपस्य प्रत्यवायजनकत्वं न सम्भवति। बहुशरीरग्रहणेनापि प्रतिजन्मकर्माकरणेन यदा कदापि

---

१. सन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः। गी०, ५.६
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्॥ सैव, १८.५
अभयं सर्वभूतेभ्यो दत्वा नैष्कर्म्यमाचरेत्॥ म०भा०

२. गी०, ३.५

सञ्चितकर्मणामनुभवः समाप्तिं गमिष्यति, तन्नाशमात्रेण मोक्षश्च भविष्यतीति पूर्वपक्षं निराकर्तुमयं श्लोकः। सत्यमकरणमभावरूपत्वात् न प्रत्यवायजनकम्। यद्येकान्तेन सर्वकर्माकरणमेकस्य साध्यं तदा कर्माकरणस्य अभावप्रसङ्गः प्रसज्येत। किन्त्वेवं न सम्भवति। विहितकर्मणोऽकरणकाले अविहितं किमपि तत्र शारीरं वाचिकं मानसं वा सर्वैरवश्यं क्रियते। तत्कालिकं क्रियमाणं लौकिकमन्यद्वा विहितातिरिक्तं भावरूपं कर्मैव तत्र प्रत्यवायजनकम्। अतः कर्माकरणं न सम्भवति, नापि तेन मुक्तिः। वस्तुतस्तु नैष्कर्म्यं नाम न कर्माभावमात्रं किन्तु नैष्कर्म्यहेतुकं ज्ञानमेव। न च तत् कर्माकरणेन अभावरूपेण साधयितुं शक्यत इति ज्ञाननिष्ठासिद्ध्यर्थं कर्मयोगाचरणमेव युक्तम्। यस्मिन् कस्मिंश्चित् कर्मणि प्रकृतिवशेन कर्तव्ये सति प्रत्यवायहेतुकयत्किञ्चित्कर्मापेक्षया फलाभिसन्धि विना विहितकर्मकरणमेव श्रेयः। तदपि वस्तुतः सात्विकत्याग एवेति 'न काङ्क्षे विजयं कृष्ण'[1] इत्यादि वदताऽपि त्वया फलपरित्यागेन युद्धमेव कर्तव्यं न तु तत्कर्मत्यागः। एवं सति ज्ञानिनामपि कर्माकरणेन प्रत्यवायापत्तिः तस्यापि यत्किञ्चित्कर्मकरणस्य अनिवार्यत्वात् इति चेदत्राह—'कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः' इति।[2] 'अहं कर्म करोमि' इति अभिमानपूर्वकं कर्मकरणमेवात्मनो बन्धाय भवति, न तु गुणा गुणेषु वर्तन्त इति मत्वा कर्माचरणमपि। ज्ञानिनां गुणवैषम्यकृतस्य विहिताविहितरूपस्य कर्मणोऽभावात् तेषां विषये विहितकर्माकरणसमकालम् अविहितकर्मकरणस्य चाप्रसक्त्या, भावरूपहेतोरसत्वात्, प्रत्यवायदोषो न भवति। इदमेव भगवत्पादमतम्।

श्रीमद्रामानुजस्तु 'सर्व'पदेन न किञ्चित् करोमीति व्यवसितः ज्ञाननिष्ठोऽपि विवक्ष्यत इति मन्यते। ज्ञानिनामपि आमरणं विहितकर्माचरणस्य आवश्यकत्वात्, तदकरणेन प्रत्यवायस्य सम्भवात् न त्वज्ञमात्रपरमिति व्याचष्टे। ज्ञानिनोऽपि कर्माकरणे ज्ञाननिष्ठाया यदा न सिद्धिः, तदा किमु वक्तव्यमज्ञानिनामर्जुनसदृशानां विषये इति कैमुतिकरीत्याऽत्र व्याख्यातम्। तथा च परमपुरुषाराधनरूपस्य कर्मणः त्यागे ज्ञाननिष्ठा न प्राप्या। एतन्मते कर्मयोगेऽपि ज्ञानमल्पतया अन्तर्गतम्। एवं ज्ञानयोगेऽपि कर्म अल्पतया

---

१. सैव, १.३२

२. सैव, ३.५

अन्तर्गतम् । विना कर्मयोगं ज्ञाननिष्ठा न लभ्यते । शुद्धप्रत्यगात्मज्ञानमेव ज्ञाननिष्ठापदेनाऽत्र अवगम्यते । अद्वैतमते तु नैवमिति तन्मतानुसारेण सर्वपदस्य तत्र सङ्कोचः; अत्र तु न । तथा च कर्मयोगेन प्राचीनं भावि वा पापसञ्चयं नाशयित्वा, गुणातीतेन सता निर्मलान्तःकरणेन ज्ञानयोगः सम्पाद्य इति भावः ।

अज्ञानां सात्विकत्यागो हि न स्वरूपतः सर्वकर्मत्याग इति यदुक्तं तदेव द्रढयितुं केवलं कर्मेन्द्रियाणां व्यवसायाभावेऽपि कर्माकरणं न सम्भवतीति 'कर्मेन्द्रियाणि संयम्य य आस्ते'[1] इत्यादिश्लोकद्वयेन निरूपयति । कर्मेन्द्रिय-व्यापारे सत्यपि मनोनिग्रहमात्रेण शक्यस्य फलमात्रत्यागस्य सात्विकत्यागत्वं च निरूपयति द्वितीयश्लोकेन । मनोनिग्रहपूर्वकं फलानासक्तिपूर्वकं च विहित-कर्मेन्द्रियव्यापार एव कर्मयोगो नाम, य एव सात्विकत्याग इत्यपि मन्यते । एवं व्याकुलेन्द्रियाणामज्ञानां कर्मयोगानुष्ठानं विना न ज्ञाननिष्ठेति अन्वयव्यति-रेकाभ्यां निरूपयति । तत्र कर्मेन्द्रियाणि निगृह्य हठयोगमात्रानुष्ठानेन यः मनसोऽविजयेन योगिनमिव आत्मानं प्रदर्शयति स विमूढान्तःकरणः, अनात्मान-मेव आत्मेति गृह्णानः, इन्द्रियार्थानेव परमपुरुषार्थान् मन्वानश्च वर्तते । स तु मिथ्याचारः, न ज्ञाननिष्ठां विन्दति, पुनरप्यात्मानमनर्थशतैर्बध्नातीति न कर्मयोगं विना गतिरिति व्यतिरेकेण वर्णयति । यस्तु ज्ञानेन्द्रियाणि मनसा सह नियम्य विषयपराङ्मुखान् कृत्वा कर्मयोगमनुतिष्ठति स विशिष्यते, ज्ञाननिष्ठो भवतीति अन्वयेन निरूपयति । ज्ञानेन्द्रियनिग्रहं विना कर्मेन्द्रिय-निग्रहस्त्वकिञ्चित्करः । 'असक्तः स विशिष्यते'[2] इति प्रशंसया, अन्येषां विषयासक्त इव प्रतीयमानोऽपि स्वयं सर्वात्मना तदासक्तिरहित इति द्योत्यते ।

---

१. कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।
इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ॥
यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ।
कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥
सैव ३. ६,७

२. सैव, ३.७

यद्यपि ज्ञानयोग एव ज्यायान्, सौकर्यात् निष्प्रमादत्वात् कर्मणां दुस्त्यजत्वाच्च कर्मयोग एव अनुष्ठेयः इति 'तदेकं वद निश्चित्य' इति प्रश्नस्य निर्णयपरमुत्तरं वदति[1]—

नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।
शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः ।। इति

यतः किमपि कर्म कर्तव्यमेव ततो नियतं नित्यं फलाभिसन्धिरहितं श्रुतिचोदितं, क्षत्रियेण त्वया अवश्यं कर्तव्यं वा कर्म त्वं कुरु इत्यभिप्रायः । अत्र 'नियत'मिति पदं पृथक् कृत्वा अन्वयेन फलार्थतया विहितमपि, विना फलेच्छां कुरु इत्यर्थोऽपि युज्यते। प्रकृते युद्धाकरणे तज्जन्यफलाभावः । फलाभिसन्धि विना तदकरणेऽपि फलाभावः । एवं तुल्ये फलाभावे युद्धाकरणापेक्षया युद्धकरणं कथं ज्याय इति शङ्का निरस्यतेऽनेन श्लोकेन । अकरणापेक्षया अफलतो युद्धकरणं ज्यायः, यतो विना फलेच्छां युद्धे क्रियमाणे ज्ञाननिष्ठा सिद्ध्यति । न केवलमिदं, किन्तु कर्माकरणस्य अशक्यत्वात्, अनियतकर्मापेक्षया नियतस्य कर्मणः करणं श्रेय इति कारणेनाऽपि युद्ध्यस्वेति भावः । यदि कर्माकरण एव तवोत्साहातिशयः तर्हि अनियतकर्मविषये भिक्षाचर्यादौ तं दर्शय । नियतानियतयोः उभयोः कर्मणोरकरणे एव यदि तवोत्साहः तर्हि शरीरयात्रापि न प्रसिद्ध्येदिति वदति । इन्द्रियादिचेष्टाद्वारा कर्मणि क्रियमाणे एव शरीरस्यैव स्थितिर्भवति, नान्यथा । भिक्षाचर्यादि कर्म क्षत्रियस्य न विहितम् । कर्मेन्द्रियमात्रनिग्रहेण न ज्ञाननिष्ठा । किञ्चिदप्यकृत्वा न शरीरधारणं शक्यम् । अतः ज्ञाननिष्ठाकामुकेन त्वयाऽवश्यं विहितं कर्म कर्तव्यमिति भगवत्पादाशयः ।

श्रीमद्रामानुजस्तु 'कर्म नियतम्' इति पृथक्तया व्याचष्टे । कर्मनियतं प्रकृत्या व्याप्तम्, अतः स्वभावानुगुणं, तत्करणं योग्यम् । अकर्म तु, ज्ञाननिष्ठा तु, न स्वभावसिद्धेति निरतिशयप्रयत्नं विना न सेत्स्यति । अतः बुद्ध्यपेक्षया कर्मयोग एव श्रेयानिति पार्थप्रश्नस्य साक्षादुत्तरमिति व्याचष्टे । कर्मयोगे आत्मज्ञानस्याप्यन्तर्गतत्वेन स्वभावप्राप्तकर्मकरणेनैव आत्मज्ञानवृद्धिः सुलभा । कर्म कुर्वत एवात्मनि अकर्तृत्वानुसन्धानं झटित्येव ज्ञाननिष्ठां

---

१. सैव, ३.८

प्रापयिष्यतीति भावः। सर्वं कर्म परित्यज्य केवलज्ञाननिष्ठामात्रे प्रवृत्तौ शरीरयात्रापि न निर्वहेत् । अतः स्वभावप्राप्तविहितकर्मकरणमेव केवलात् ज्ञानयोगात् वरं सुशकं प्रत्यवायादिभयरहितं, निश्चयेन ज्ञानप्रापकं चेति भावः।

श्लोकेऽस्मिन् स्वस्ववर्णाश्रमोचितं कर्मैव विवक्ष्यते, तच्च न गृहस्थमात्रस्य, किन्तु वानप्रस्थस्य ब्रह्मचारिणः सन्यासिनो वेति न विशेषः। एतद्दिशा विविञ्चन्नानन्दतीर्थः सन्यासिनोऽपि कर्मयोगेनैव ज्ञाननिष्ठा न तु कर्माकरणेनेत्यभिप्रेति। ज्ञाननिष्ठा तु चिरकालप्रयत्नसाध्या इति हेतोः केवलज्ञानयोगिनामपि शरीररक्षणमवश्यं कर्तव्यमन्यथा आत्महत्यादिदोषोऽपि स्यादतः कर्माकरणापेक्षया कर्मकरणमेव प्रशस्तमिति व्याचष्टे। अत्र मध्वमते विविदिषासन्यासस्य विद्वत्सन्यासस्य च भेदो नाङ्गीक्रियत इति बोद्धव्यम्।

फलाभिसन्धिर्न कार्यश्चेत्कर्मकरणे, किमुद्दिश्य कर्मणि प्रवृत्तिर्भवति येन तत् कृतमपि स्यात् बन्धकमपि न स्यादिति 'यज्ञार्थात् कर्मण'[1] इत्यादिश्लोकेन निरूपयति। ईश्वराराधनार्थात्, तत्प्रसादार्थात्, साक्षात्तदर्थाद्वा शास्त्रीयस्य विहितस्य कर्मणोऽनुष्ठानात् भिन्नेन भगवदनाराधनारूपेण, स्वर्गादिफलेच्छया, देवतान्तराराधनारूपेण वा अनुष्ठितेन कर्मणा अयं लोकः कर्माधिकारी जनः कर्मबद्धो भवति। अतः ईश्वराराधनार्थं तदर्थं वा निष्कामस्सन् कर्म कुर्विति योजना।

अनेन 'कर्मणा बध्यते जन्तुः' इति सामान्यं वचनं यज्ञार्थकर्मव्यतिरिक्तविषयमिति व्याख्यातं भवति। यज्ञशब्देनात्र शास्त्रीयं कर्म विवक्ष्यते; कर्मशब्देन तदर्थतया द्रव्यार्जनादिरिति श्रीमद्रामानुजः।

भगवत्पादादयः यज्ञशब्देनाऽत्र विष्णुरुच्यत इत्यभिप्रयन्ति । 'यज्ञो वै विष्णुः'[2] इति श्रुतेः। तथा च नियतं कर्म कर्तव्यमपि यज्ञार्थमेव कर्तव्यं न फलेच्छयेति निष्कर्षः । कर्मयोगो हि द्विप्रकारो भवति; फलत्यागमात्रेण

---

१. यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः।
तदर्थं कर्म कौन्तेय मुक्तसंगः समाचार॥
सैव, ३.९

२. तै० सं०, १.७.४

तदनुष्ठानमेकः, ईश्वरार्पणबुद्ध्या तदनुष्ठानमपरः । तयोरपि तरतमत्वं द्वादशाध्याये क्रमनिर्देशेन प्रपञ्चितम् ।[1] तत्रैव भगवत्पादः उपसंहरति यथा[2]—'अज्ञस्य कर्मणि प्रवृत्तस्य पूर्वोद्दिष्टोपायानुष्ठानाशक्तौ (ज्ञानध्यानाद्युपायानां) सर्वकर्मणां फलत्यागः श्रेयःसाधनमुपदिष्टं न प्रथममेव, अतः श्रेयो हि ज्ञानमभ्यासाद् इत्युत्तरोत्तरविशिष्टत्वोपदेशेन सर्वकर्मफलत्यागः स्तूयते सम्पन्नसाधनानुष्ठानशक्तौ अनुष्ठेयत्वेन श्रुतत्वात् ।......सर्वकर्मफलत्यागस्तुतिरियं प्ररोचनार्था ।' अयं च कर्मयोगः फलत्यागरूपः अज्ञानकार्यत्वेनैव प्रशस्यते न तु ज्ञानयोगात्तस्य ज्यायस्त्वविवक्षया । इदमपि तत्रैव भगवत्पादभाष्ये स्पष्टीकृतम्—'अथैतदप्यशक्तोऽसि' इति अज्ञानकार्यसूचनाद् न अभेददर्शिनः अक्षरोपासकस्य कर्मयोग उपपद्यते इति दर्शयति इति भाष्येण ।

जगन्निर्वाहचक्रे कर्मणः प्रधानं स्थानं कल्पितं येन लोकसङ्ग्रहार्थं ज्ञानिभिरप्यनुष्ठेयं तदिति, लोकयात्रार्थमन्यैः सर्वैरपि अनुष्ठेयमिति यदुक्तं तदेव 'सह यज्ञाः प्रजाः'[3] इति श्लोकेन उपपद्यते । शरीरयात्रानिर्वहणाय कर्माणि विहितानि पुरा यतस्तैरेव आधिभौतिकमादिदैविकं च प्रपञ्चद्वयं परस्परोपकाराय प्रभविष्यति । यज्ञात्पर्जन्यः, पर्जन्यादन्नम्, अन्नाद्भूतानि सशरीरजीवराशींश्च देवताप्रसादाद्वर्धयध्वमिति पुरा सृष्टिकाल एव व्यवस्था कृता

---

१. अभ्यासेऽप्यसमर्थोऽपि मत्कर्मपरमो भव ।
मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि ॥
गी०, १२.१०
अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥
सैव, १२.११
श्रेयो हि ज्ञानमभ्यासात् ज्ञानाद्ध्यानं विशिष्यते ।
ध्यानात्कर्मफलत्यागः त्यागाच्छान्तिरनन्तरम् ॥
सैव, १२.१२

२. भगत्पादभाष्य, १२.१२

३. इष्टान् कामान् हि वो देवाः दास्यन्ते यज्ञभाविताः ।
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥
गी०, ३.१२

हिरण्यगर्भेन स्रष्ट्रा। 'अनेन प्रसविष्यध्वम्' इत्यत्र अनेनेति एकवचनप्रयोगेन जात्येकवचनमेव विवक्षितम् इति सर्वमतसम्मतम्। प्रसवो नाम पर्जन्यादिक्रमेण प्रजापर्यन्तं वीजाङ्कुरन्यायेन वृद्धिरेव विवक्ष्यते। यज्ञेन तर्पिताः भगवदात्मकाः देवताः प्रजानामिष्टान् पूरयन्तीति भावः। जगच्चक्रनिर्वाहः प्रजानां देवानां च परस्परं तर्पणाधीनमेव। देवानिति बहुवचनमत्र तत्तच्छरीरभेदाभिप्रायेणैव, न तु उद्देश्यदेवताभेदाभिप्रायेण, अपरिच्छिन्नपरमात्मभावनया यज्ञानुष्ठानस्यैव कर्मयोगत्वम्। अनया रीत्या 'यज्ञार्थात् कर्मणोऽन्यत्र' इत्यत्र विष्ण्वर्थात् कर्मणोऽन्यत्रेति एकविष्ण्वर्थतया अनुष्ठितस्यैव कर्मयोगत्ववर्णनमपि न विरुद्ध्यति। 'परस्परं भावयन्तः' इत्यनेन सकृद् भगवदाराधनेन तत्फलप्राप्तिमात्रेण न विरामो युक्तः, पुनः पुनस्तदाराधनं चक्रवत् परिवर्तनेनावश्यमनुष्ठेयमिति सूचयति।

इदमेव आवर्तिरूपेण करणं जगच्चक्रस्य अविच्छिन्नप्रवर्तने उपकरोतीति अनन्तरश्लोकेऽपि 'दास्यन्ते' इति आत्मनेपदप्रयोगेण दर्शयति। देवताभिर्दत्ताः भोगाः न केवलं युष्मदर्थे किन्तु पुनरपि देवताभावनार्थे उपयोक्तव्या इति गम्यते। तैर्दत्तेभ्यः भोगेभ्यः एकमंशं देवताभ्योऽदत्त्वा सर्वं निजभोगायोपयुज्यते चेत्, राजदत्तक्षेत्रादिकं तदुद्दिष्टषष्ठांशकरदानं विना उपभुञ्जाना इव यूयं स्तेनाः दण्डार्हा भविष्यथ। अतः देवदत्तानेव उपभुञ्जानाः सर्वदा देवभावनां न परित्यजेयुः। तेभ्य उपलब्धायाः सम्पद एकमप्यंशं पुनरपि यज्ञादौ विनियोगेन तेभ्यः प्रतिपद्य तच्छिष्टमुपभोक्तुमर्हन्तीति भावः। यज्ञशिष्टं ह्यमृततुल्यम्। यथा वा अमृतप्राशनेन रोगजरादिभिर्मुक्तो भवति तथैव यज्ञशिष्टममृतरूपमन्नं भुञ्जानाः सर्वकिल्विषैर्मुक्ता भवन्ति। ये तु आत्मकारणात् स्वरसनेन्द्रियमात्रतर्पणमुपलक्ष्य अन्नादिकं पचन्ति ते ह्यघमेव पक्त्वा भुञ्जते। पक्वं भुज्यमानं च सर्वं तेषां पापमयमेव। पक्वस्यान्नस्य वैश्वदेवादिद्वारा देवताभ्योऽर्पणं विना भोजनं, पाकक्रियान्तर्गतानां बहुविधप्राणिहिंसादिपाप्मनां परिहाराभावात् पापभूयिष्ठं भवति।

मोधमन्नं विन्दते अप्रचेताः।
केवलाघो भवति केवलादी ॥[1] इति श्रुतेः।

'यज्ञशिष्टाशिन' इति प्रस्तुतस्य अन्नस्यैव जगत्स्थितिहेतुत्वं जगच्चक्रस्वरूप-

---

१. यजुर्वेदे अष्टकम्, २.८

निरूपणेन उपपाद्यते ।[1] यज्ञशब्दोऽत्र आहुतिपरः। आहुतिरेव अपूर्वतां गता रश्मिद्वारेण आदित्यं प्राप्य वृष्ट्यात्मना पृथिव्यां निपत्य व्रीहियवाद्यन्नभावमापद्य संस्कारानन्तरमुपभुक्ता शुक्रशोणितरूपेण परिणता प्रजाभावं गच्छति । एवमेव श्रीमद्रामानुजोऽपि व्याचष्टे । परन्तु पर्जन्यशब्देन तत्कार्यं वृष्टिरिति वदति । श्रीमदानन्दतीर्थः पर्जन्यशब्दस्य मेघः आदित्यो वा इति अर्थद्वयं स्वीकरोति । किन्तु आदित्यार्थस्वीकारे इदानींतनपुरुषकृतकर्मरूपेण यज्ञेन तदसम्भवात् चक्रप्रवेशो न भवतीति हेतोः सोऽर्थो न युज्यते । किन्तु मेघचक्राभिमानी पर्जन्यो देवतात्मा अथवा तदभिमन्यमाना मेघसन्ततिर्वा लक्षणया विवक्ष्यते । एवं च आदित्यभावं गतो यज्ञो वृष्टेः कारणमिति फलतो न विरोधः । 'यज्ञः कर्मसमुद्भवः' इत्यत्र यज्ञशब्देन अपूर्वभगवत्प्रसादो वा वेदान्तसिद्धान्तदृष्ट्या विवक्ष्यत इति भगवत्पादतदनुयायिनश्च । अपूर्वपरत्वं यज्ञस्य लक्षणयैवेति कृत्वा पुण्यपापादिकर्मपर एवेति श्रीमद्रामानुजः । श्रीमदानन्दतीर्थः यज्ञो देवतामुद्दिश्य द्रव्यत्याग इति व्याचष्टे । कर्मशब्दः ऋत्विग्यजमानादिकृतक्रियाविशेष एव, यत्र यज्ञार्थद्रव्यार्जनादिकं सर्वमन्तर्भवति, अत एव यज्ञशब्दोऽपि अपूर्वपर इति भगवत्पादमतम् । श्रीमद्रामानुजमते तु यज्ञार्थद्रव्यार्जनादिकं कर्मशब्देन, प्रधानं देवतोद्देश्येन द्रव्यत्यागरूपमदृष्टार्थं कर्म यज्ञशब्देन च विवक्ष्यत इति । श्रीमदानन्दतीर्थमते प्रधानं कर्म यज्ञः, अङ्गकर्माणि कर्मेति विवेकः । श्रीवल्लभाचार्यपक्षे यज्ञशब्देन भगवदर्थतया अनुष्ठीयमानं कर्म विवक्षितं योऽपि भगवदात्मक एव । तन्मते कर्मशब्देन तद्विभूतिरूपतया तदात्मकदेवतोद्देशेन क्रियमाणं कर्म विवक्ष्यते । पुरुषोत्तमविभूत्याराधनेन पुरुषोत्तम एव तृप्तो भूत्वा पर्जन्यादिद्वारा जगच्चक्रं प्रवर्तयतीति भावः ।

**कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।[2]**

इत्यत्र ब्रह्मपदार्थे मतभेदा वर्तन्ते । ब्रह्मपदेन वेदो विवक्ष्यत इति भगवत्पादतदनुयायिनो मन्यन्ते । श्रीमद्रामानुजः प्रकृतिपरत्वं ब्रह्मशब्दस्य स्वीकृत्य तद्विकार-

---

१. अन्नाद् भवन्ति भूतानि पर्जन्यादन्नसम्भवः ।
यज्ञाद्भवति पर्जन्यः यज्ञः कर्मसमुद्भवः ॥
गी०, ३.१४

२. सैव, ३.१५

भूतं शरीरमेवात्र विवक्षितमिति वदति। एतन्मते शरीरमात्रं न निर्दिष्टं किन्तु कर्मसाधनं शरीरमेव, तच्च प्रत्यगात्माधिष्ठितमेव सजीवमेव गृह्यत इति व्यवस्था। एवं च 'अन्नाद् भवन्ति भूतानि' इत्यत्र भूतशब्दोक्तमेव वस्तु शरीरमिति स्पष्टम्। श्रीमदानन्दतीर्थस्तु ब्रह्मपदार्थोऽत्र परं ब्रह्मैव न तु वेदः, न वा शरीरमिति मन्यते। श्रीवल्लभाचार्यः वेदो वा प्रजापतिर्वा ब्रह्मशब्देन उच्यत इति वदति। 'ब्रह्माक्षरसमुद्भवम्' इत्यत्र अक्षरशब्दः परं ब्रह्मेति भगवत्पादमते; प्रत्यागात्मेति श्रीमद्रामानुजमते, वेद इति च श्रीमदानन्दतीर्थमते। अक्षरशब्देन प्रणवो विवक्षित इति ब्रह्मानन्दगिरिप्रभृतयः।

श्रीमद्रामानुजव्याख्यानुसारेण विचार्यमाणे जीवशरीरस्य चक्रारस्थाने प्रवेशो वर्तत इति पुनः पुनः परिवर्तनं मध्ये विच्छेदं विना न सम्भवति। श्रीमदानन्दतीर्थः कर्मणः ब्रह्मोद्भवत्वं वेदद्वारकमिति मन्यते। तर्हि द्वारभूतस्य वेदस्य कर्मब्रह्मणोर्मध्ये प्रवेशः अवश्यं स्यात्। तन्नोक्तं मूलश्लोके। भगवत्पादमते ब्रह्मपदेन वेदस्यैव विवक्षणात् चक्रे वेदस्य स्वत एवान्तर्भावः।

अत्र श्रीमद्रामानुजः परमपुरुषेण प्रवर्तितं चक्रं निर्वर्णयन् भाषते— अन्नात् भूतशब्दनिर्दिष्टानि सजीवानि शरीराणि, पर्जन्यादन्नं, यज्ञात्पर्जन्यः, यज्ञः कर्मणः, कर्म सजीवात् शरीरात्, सजीवं शरीरं पुनरप्यन्नात् इति अन्योन्यकार्यकारणभावेन परिवर्तमानमिति। एतन्मते सशरीरस्य जीवस्य द्विवारं चक्रमध्ये प्रवेशो भवति। सशरीरजीवातिरिक्तस्य अक्षरस्य प्रत्यागात्मनः चक्रप्रवेशो न विवक्ष्यते। अक्षरस्य प्रत्यागात्मनो वा प्रणवस्य वा परमात्मनो वा नेमिस्थाने अक्षस्थाने निवेशेन चक्रस्वरूपमुपलभ्यते तन्मते।

एतेषां परिशीलनेन इदं ज्ञायते यच्चक्रत्वसङ्गतिः अद्वैतमते निर्दुष्टमक्लेशं च प्रतीयते, अन्यत्र कथञ्चन योजनीयं वर्तते। ब्रह्मणो वेदस्य अक्षरसमुद्भवत्वं 'जन्माद्यस्य यत'[1] इति सूत्रादिसिद्धमिति अन्नादिवदेव पूर्वपूर्वस्य उत्तरोत्तरकार्यत्वमादाय उपपद्यत एव। अद्वैतमते अक्षरस्य ब्रह्मणः सर्वकारणत्वात् अक्षस्थाने निवेशोऽप्यत एव।

एवं भगवता प्रवर्तितमिदं चक्रं न तु मनुष्यकृतमिति तस्य प्रवर्तनं यथावदनुवर्तनं सर्वेषां कर्तव्यम्। तच्च वेदमुखेन तत्तदनुष्ठेयं धर्मतत्वं विज्ञाय

---

१. ब्र० सू०, १. १. २.

तदनुष्ठानेन देवताप्रसादमन्तरा न घटते । अतः स्वधर्मतो वैमुख्यं जगन्निर्वाहकचक्रस्यैव प्रतीपगमनम् । तिर्यञ्चः पाषाणादयः अचेतनाः एतच्चक्रानुवर्तनेऽसमर्थाः सहस्रशो वर्तन्ते, तेषामनधिकारित्वं च सुप्रसिद्धम् । त्वं तु प्राप्तमनुष्यजन्मा तत्राप्युत्तमकुलजः; यदि स्वधर्मतो विमुखो भवसि तर्हि स्वाधिकारमुल्लङ्घ्य सर्वमपि त्वदायुरघमयं करोषि । अतः कर्मयोगानुष्ठानमेव तव श्रेयः न तु तद्विहाय अनधिकृते ज्ञानयोगे प्रवर्तनमिति निष्कर्षः ।

एवं सर्वेण प्राणिजातेनावश्यमनुवर्तितव्ये सति प्रपञ्चचक्रे, अस्ति वा कश्चित्कर्मनियमातीतः यद्विषये कर्माकरणमपि न प्रत्यवायजनकं स्यात् ? आत्मरतिः, आत्मतृप्तश्च आत्मन्येव च सन्तुष्टः यः कश्चिदस्ति चेत्तस्य कार्यं न विद्यते, स कर्मातीतो भवतीति वदति ।[1]

'एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाऽथ भिक्षाचर्यं चरन्ति',[2] 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्'[3] इति बृहदारण्यकश्रुतिवाक्याभ्यां कर्मयोगिभ्योऽप्युत्तमाः कृतकृत्याश्च ज्ञानिन इति प्रतिपादितम् । तेषां च कर्तव्यं किञ्चिन्नास्तीति च तत्रैव स्पष्टीकृतं भगवत्पादभाष्ये[4] । असाधनायत्तसर्वकर्मसन्यासिनः खलु तत्र विवक्षिताः । विद्वत्सन्यासिनामेव न कर्माधिकारः, विविदिषासन्यासिनां त्वस्त्येव कर्माधिकार इति निर्णयः अद्वैतमते । इदं च शास्त्रसिद्धान्तलेशसङ्ग्रहे अप्पय्यदीक्षितेन्द्रेण निश्चप्रचं निर्णीतं यथा—

आरुरुक्षोर्मुनेर्योगं कर्मकारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥

---

१. यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टः तस्य कार्यं न विद्यते ॥
गी०, ३. १७.

२. बृ० उ० ५.५.१.

३. सैव ३.५.१.

४. बृ० उ० भाष्य, पृ० १९१ (३.५.१)
न च विद्याविद्ये एकस्य पुरुषस्य सह भवतो, विरोधात् तमःप्रकाशाविव । तस्मादात्मविदो अविद्याविषयो अधिकारो न द्रष्टव्यः क्रियाकारकफलभेदरूपः ।

इत्यादिवचनानुसारेण चेतश्शुद्धिविविदिषादिरूपप्रत्यक्प्रावण्योदयपर्यन्तं कर्मानुष्ठानं ततः सन्यासः इति कर्मतत्सन्यासाभ्यां विद्यानिष्पत्त्यभ्युपगमात् ।[1] उक्तं हि नैष्कर्म्यसिद्धौ—

> प्रत्यक्प्रवणतां बुद्धेः कर्मण्युत्पाद्य शुद्धितः ।
> कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव । इति।।

के वा ते विद्वत्सन्यासिन इति श्लोकेनानेन वर्णयति 'यस्त्वात्मरति'[2] रित्यादिना । पञ्चमभूमिकायां षष्ठभूमिकायां च विद्यमानः स्थितप्रज्ञः आत्मरतिरात्मतृप्तः आत्मन्येव च सन्तुष्टो भवति; तस्य कार्यं न विद्यते । श्लोकेऽस्मिन् 'यस्तु' इति 'तु' शब्देन कर्मयोगप्रकरणाद्विच्छिद्य प्रत्युदाहरणतया ज्ञानयोगिनो निर्देशः क्रियते । गीतारहस्यं त्विदमपि कर्मयोगप्रकरणमेवेति व्याचष्टे । 'तस्य कार्यं न विद्यते' इत्यत्र 'तस्य' इति पदेन 'तदर्थं तेन कार्यं कर्तव्यं नास्ति, किन्तु परार्थं कर्तव्यमस्तीति तात्पर्यम् । अन्यथा 'तस्मादसक्तः सतत'मित्यत्र सततशब्दः, 'वर्त एव च कर्मणि'[3] इत्यत्र 'एव' शब्दश्च स्वरसो न भवतः इति सर्वदा कर्मानुष्ठानविवक्षयैव कर्मयोगप्रकरणान्तर्गतत्वत्वेनास्य श्लोकस्येति वदति । तन्नोपद्यते । 'यस्त्वात्मरतिरेव' इति प्रकरणविच्छेदक'तु'शब्दविरुद्धोऽयमाशयः । कर्मयोगिनः आत्मरतित्वात्मतृप्तत्वादेरसम्भवमभ्युपगम्यैव श्लोकोऽयं ज्ञानयोगिपर इति सर्वैराचार्यैं व्याख्यातः । श्लोकोऽयं मुक्तपर इति श्रीमद्रामानुजः, असंज्ञातसमाधिस्थपर इति श्रीमदानन्दतीर्थः, जीवन्मुक्तपर इति भगवत्पादाश्च । यस्तु मुक्तः, असंज्ञातसमाधिस्थः, जीवन्मुक्तो वा तत्तन्मतरीत्या, आत्मन्येव रतिमान्, न तु तद्व्यतिरिक्तेषु विषयेषु; आत्मनैव तृप्तः आत्मन्येव सन्तुष्टः । उद्यानस्रक्चन्दनवनितादिकं सर्वं यस्यात्मैव तस्य किमपि कर्तव्यं नास्ति; कस्यापि प्रयोजनस्याभावात् । न विषयसुखार्थं ततो विमुखत्वात् । नात्मदर्शनाय आत्मदर्शनस्य अयत्नसिद्धत्वात् । तस्य प्रयत्नसाध्यं किमपि नास्ति । कर्माकरणेऽपि प्रत्यवायदोषो नास्ति नित्यशुद्धबुद्धमुक्तस्वभावस्य तस्य कमपि भूतविशेषमर्थविशेषं वा

---

१. शा० सि० ले० सं०, पृ० ३०७.
२. गी०, ३.१७
३. सैव, ३.१९
४. सैव, ३.२२

आश्रित्य सम्पादनीयं प्रयोजनं तस्य न विद्यते । तैत्तिरीयोपनिषद्वार्तिके सुरेश्वराचार्यैर्यथोक्तम्[1] —

त्याग एव हि सर्वेषां मोक्षसाधनमुत्तमम् ।
त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक्परं पदम् ।।
त्यज धर्ममधर्मं च तथा सत्यानृते अपि ।
न्यासो ब्रह्मेति च प्राह तैत्तिरीयश्रुतिस्तथा ।।

अत्र गीताश्लोके 'मानव' पदप्रयोगेन ज्ञानिषु न जातिविवेकादिप्रयुक्तधर्मविशेषाधिकारोऽपि सार्थक इति द्योतयति । अथवा, इयं मुक्त्यवस्था सिद्धावस्था मनुष्यमात्रविषयिणी; जन्मान्तरे कृतसाधनाः पूर्वजन्मकृतसाधनापरिपाकात् विदुरधर्मव्याधादयः, अन्त्यवर्णजा अपि स्थितप्रज्ञा दृश्यन्त इति तात्पर्यम् ।

श्रीमदानन्दतीर्थः मानवपदं ज्ञानिपरमत्र अभिसन्धाय, ज्ञानिनामपि कर्माधिकारोऽस्ति न त्वसंज्ञातसमाधिस्थानामिति बोधनार्थं मानवपदमिति व्याचष्टे ।

एवं च स्थितप्रज्ञस्य मुक्तस्य असंज्ञातसमाधिस्थस्यैव न कर्माधिकार इति निरूप्य यावत्तादृशावस्थाप्राप्तिः तावदनासक्तिपूर्वकं कर्माचरणेनैव परमं मोक्षं भगवत्पाददृष्ट्या, शुद्धप्रत्यगात्मप्राप्तिः श्रीमद्रामानुजदृष्ट्या, परमात्मप्राप्तिः श्रीमदानन्दतीर्थमते च सिद्ध्यति । मुक्त-असंज्ञातसमाधिस्थ-स्थितप्रज्ञव्यतिरिक्तानां समेषां कर्माधिकारोऽस्त्येवेति निष्कर्षः । अद्वैतमते विविदिषासन्यासिनां तुरीयाश्रमेऽपि कर्माधिकारो वर्तत एव । 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः'[2] इति वक्ष्यमाणगीताश्लोकोऽपि पूर्वोक्तमेवार्थं परकृतिरूपेण अर्थवादेन प्रशंसन् समर्थयति । उक्तं च विष्णुपुराणे[3] यज्जनकः ब्रह्मविद्यामधिष्ठायापि साधनावस्थायां कर्मयोग्येव आसीदिति श्रूयत इति । साधनावस्थायामेव जनकस्य

---

१ तैत्तिरीयवार्तिकम्–प्रथमान्वाकः —१०, ११.
२. गी०, ३.२०.
३. इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः ।
ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया ।।
वि० पु० ६.६.६,

कर्माचरणं न तु सिद्धावस्थायामिति तत्रैव विष्णुपुराणे[1] जनकवचनमेव प्रतिपादयति । अत्र अविद्या-शब्देन ईश्वरार्पणबुद्ध्या फलत्यागमात्रेण वा कर्मानुष्ठानरूपः कर्मयोग एव विवक्ष्यते ईशोपनिषद्वाक्य[2]भङ्ग्या । अनेनावगम्यते दग्धमायापुण्यपापलेशाः ज्ञानप्रतिबन्धकाः जनकस्याप्यासन्निति । अत एव तदुपाख्यानोपसंहारे विष्णुपुराणे[3] उक्तं पराशरेण 'स कल्याणोपभोगैश्च क्षीणपापोऽमलस्ततः अवाप सिद्धिमत्यन्तपापक्षयफलां द्विजाः ।' अतः गीताचार्यैः 'कर्मणैव हि संसिद्धि'मित्यत्र संसिद्धिपदेन अत्यन्तपापक्षयफलमेव विवक्ष्यत इति ज्ञायते । सन्यासाश्रमः राजर्षीणां विहितो न वेति बहुभिः चर्चा कृता ।[4] तत्सर्वं न प्रकृतोपयोगीति न विचार्यते । 'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः'[5] इत्युक्तरीत्या संसिद्धेः मानवमात्राधिकारिकत्वं स च स्वतः सिद्धात्मसमाध्यवस्थायामेवेति तावत्पर्यन्तं जनकादिभिरपि कर्माचरितं, तद्वत् त्वमपि तदधिकारसिद्धिपर्यन्तं कर्मैव कर्तुमर्हसि, न तु विद्वत्सन्यासरूपं तुरीयाश्रमधर्ममिति निष्कर्षः । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन'[6] इति श्रुतिवाक्ये वार्तिककारः—

> ब्राह्मणग्रहणं चात्र द्विजानामुपलक्षणम् ।
> अविशिष्टाधिकारत्वात् सर्वेषामात्मबोधने ।।[7] इति

ब्राह्मणपदस्य व्याख्यानं कृतवान् । तेन अर्जुनस्यापि विविदिषासन्यासाधिकारो वर्तते । 'ब्राह्मणः क्षत्रियो वाऽपि वैश्यो वा प्रव्रजेत् गृहात्'[8]

---

१. अहमप्यविद्यया मृत्युं तर्तुकामः करोमि वै ।
राज्यं यागांश्च विविधान् भोगैः पुण्यक्षयं तथा ।।
विं०पु० ६.७.४.

२. अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ।
ई० उ० ११.

३. वि० पु० ६. ७.१०४

४. शा० सि० ले० सं० परिच्छेद : ३, पृ० ३१३–३१९.

५. गी०, ३. १७.

६. बृ० उ० ४. ४.२२.

७. बृ० उ० वा० ४.४.१०२९.

८. रघुवंशटीका, ८.१४. इति मनुस्मरणादिति मल्लिनाथेन श्लोकोऽयमुद्धृतः किन्तु मनुस्मृतौ नोपलभ्यतेऽयं श्लोकः ।

इति रघुवंशटीकायां मल्लिनाथोद्धृतं धर्मशास्त्रवचनमपि क्षत्रियवैश्ययोः सन्या-साधिकारित्वं सूचयति। तथापि सन्यासग्रहणाधिकारो न आपातवैराग्यमात्रेण, भीष्मादिबन्धुवधसम्भावनानिमित्तेन, किन्तु जनकस्येव अत्यन्तपापक्षयानन्तरमेव। अतः अर्जुनस्य तादृगवस्था नेदानीमपि सम्पन्नेति कर्मैव तेन कर्तव्यं न तु तत्त्याग इति भगवन्मतम्। सर्वथा तु यावद्विद्वत्सन्यासाधिकारं तावत्कर्म कर्तव्यम्।

अत्र संसिद्धिपदार्थः मोक्ष इति चित्तशुद्धिर्वेति भगवत्पादः। तत्र यदि जनकादयः अप्राप्तसम्यग्दर्शनाः तर्हि कर्मणा चित्तशुद्धिं प्राप्ता इति बोद्धव्यम्। यदि प्राप्तसम्यग्दर्शनाः तर्हि कर्मणा सहैव मुक्तिं गताः, मोक्षपर्यन्तं कर्म अनुष्ठितवन्तः, अथवा लोकसंग्रहार्थं कर्म कुर्वाणा एव मुक्तिं गता इति बोध्यम्।

श्रीमद्रामानुजः आत्मावलोकनमास्थिता इति कर्मयोगस्य ज्ञाननिष्ठा-साधनत्वमेव स्वीकरोति। श्रीमदानन्दतीर्थस्तु सम्पूर्णमोक्षः संसिद्धिः, साऽपि कर्मणा ज्ञानद्वारैव न तु साक्षादिति भाषते। कर्मणैव साक्षान्मोक्षप्रतिपादनं तत्र तत्र स्तुतिपरमेवेति तस्याशयः।

लोकसङ्ग्रहमेवापि सम्पश्यन् कर्तुमर्हसि।[1]

इत्यत्र 'अपि' इत्यस्य पश्यन्नित्यनेनान्वयः श्रीमद्रामानुजेन स्वीकृतः। भगवत्पादः श्रीमदानन्दतीर्थश्च 'लोकसंग्रहमपि' इत्यन्वयं कुरुतः। प्रथमान्वये लोकसंग्रहस्य प्राधान्यमिति भगवत्पादादयः। संग्रहोऽत्र रक्षैव, अन्यथा धर्माधर्म-सन्देहेन धर्मे प्रवृत्तिरेव न स्यादिति वेदान्तदेशिकः[2]। लोकानां धर्मे प्रवृत्तिरेव लोकसंग्रह इति तु परे। यतो लोकसंग्रहस्यात्र प्राधान्यं, तदकरणे लोकोपप्लवे हेतुर्भवतीति पापभाग् भवति ज्ञानयोगात् च्युतश्च भवति आधिकारिकोऽपीति भावः। शिष्टाचारप्रामाण्येनैव धर्माधर्मव्यवस्था; शिष्टस्य कर्मत्यागेन सर्वेऽप्यन्ये तं निदर्श्य कर्माणि त्यक्ष्यन्ति। सति चैवं 'कुलक्षये प्रणश्यन्ति कुलधर्माः

---

१. गी०, ३.२०.

२. लोकसंग्रहमपीत्यन्वये लोकसंग्रहस्याप्रधानता प्रतीयेत। पश्यन्नपीत्युक्ते तु कर्मकर्तव्यतायां पूर्वोक्तहेतुभ्यो लोकसंग्रहस्याधिक्यं द्योत्येतेत्ययमन्वय उक्तः।

ता० च०, ३ २०, पृ० ११०

सनातनाः'[१]; 'कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम्'[२] इत्यादिभिः कुलक्षयजन्यपापपरम्परां प्रति महती भीतिरर्जुनेन त्वया दर्शिता; किन्तु कर्मत्यागेन न केवलं कुलक्षयस्यैव किन्तु सर्वलोकक्षयस्य निमित्तं भविष्यसीति भावः। लोकहितार्थं स्वजनवधे स्वधर्मरूपे जुगुप्सा वा पापबुद्धिर्वा न कार्या।

को वा लोकसंग्रहे अधिकारी, कथं च स इति विचारे वदति 'यद्यदाचरति श्रेष्ठः'[३] इत्यादिना। श्रेष्ठो हि कृत्स्नशास्त्रज्ञः, तदनुष्ठाता, लोके तथा प्रसिद्धश्च। अकृत्स्नशास्त्रविदपि अनुष्ठातृतया, लोके प्रसिद्धः कृत्स्नशास्त्रज्ञ इति सर्वैः स्वीकृतश्चेत् तस्यापि लोकसंग्रहे अधिकारोऽस्ति। कृत्स्नशास्त्रज्ञोऽपि यदि लोके अनुष्ठातृतया न प्रसिद्धः तस्यानुष्ठानाननुष्ठानाभ्यां न कोऽपि बाधितो भवति। ये तु उपर्युक्तलक्षणत्रयविशिष्टाः ते अतीव विरलाः, तेषामाचारदर्शनेनैव साधारणो लोकः धर्माधर्मनिर्णयं करोति। धर्माधर्मविचिकित्सायां श्रद्धावन्तो जनाः शिष्टाचारं दृष्ट्वैव स्वानुष्ठेयं निश्चिन्वन्ति।[४] न केवलं ते शिष्टस्याचारमात्रमनुवर्तन्ते किन्तु लौकिकं वैदिकं वा वचनं यच्छ्रेष्ठः मनुते तदेव प्रमाणं मन्वते। श्रेष्ठाचारश्रेष्ठवचनैकप्रमाणाः सर्वेऽपि स्वस्वधर्मेभ्यो न प्रच्याव्या इत्याधिकारिकेण श्रेष्ठेन सर्वप्रजासङ्ग्रहार्थमपि स्वधर्मपरिपालनं कर्तव्यमेवेति भगवत्पादश्रीमदानन्दतीर्थयोर्व्याख्यासरणिः। श्रीमद्रामानुजस्तु 'यत्प्रमाण'मिति पदं 'यावदङ्गपरिमितं श्रेष्ठो यत्कर्म करोति तावदङ्गपरिमितमेव साधारणोऽपि जनोऽनुवर्तत' इति व्याचष्टे। प्रमाणपदं परिमाणपरत्वेनात्र व्याख्यातम्।

लोकसङ्ग्रहार्थं स्वधर्मपरिपालनं न केवलं जनकादिभिर्ज्ञानिभिः कर्तव्यं, किन्तु कदाऽपि असंस्पृष्टकर्मवासनेन ईश्वरेणाऽपि कर्तव्यमिति वदति—

न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि॥[५]

---

१. गी०, १.४०
२. सैव, १.३८
३. सैव, ३.२१
४. अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात्। ये तत्र ब्राह्मणाः सम्मर्शिनः युक्ता अयुक्ताः अलूक्षा धर्मकामाः स्युः। यथा ते तत्र वर्तेरन्। तथा तत्र वर्तेथाः।
तै० उ०, १.११.३,४
५. गी०, ३.२२-२४

इत्यादिश्लोकत्रयेण। कृतार्थेनाऽपि कर्म कर्तव्यमित्यत्र आत्मानमेव भगवान् निदर्शयति। त्रिषु लोकेषु कर्तव्याकर्तव्याभावः अवाप्तव्यानवाप्तव्यराहित्यादेवेति भगवत्पादश्रीमद्रामानुजादयो विवृण्वन्ति। त्रिषु लोकेषु अवाप्तव्यमनवाप्तव्यं वा कर्तव्यमकर्तव्यं वा नास्तीति अपरे विवृण्वन्ति। उभयथा कर्मानधिकारप्रयोजकेषु लोकेषु स्थितोऽपि कर्तव्यतानिर्बन्धरहितोऽपि कर्म कुर्वन्नस्मि, किमुत मनुष्यलोके इति भगवदाशयः। धर्मक्षेत्रे कर्मभूमौ आधिकारिकस्य श्रेष्ठस्य च मम तव वा कर्माकरणं महतेऽनर्थायेति सूचयितुं 'न मे कर्तव्य'मित्यनेन 'त्रिषु लोकेषु' इत्यस्यान्वयः। अस्मिन् व्याख्यापक्षे 'वर्त एव च कर्मणि' इत्यनेनाऽपि 'त्रिषु लोकेषु' इत्यन्वेति। ब्रह्माण्डनियामकस्य सर्वेश्वरस्य आप्तकामस्य सत्यसङ्कल्पस्य सर्वकर्मफलाधिष्ठातुश्च मम कर्मकरणं लोकसंग्रहार्थमेव। 'वर्त एव च' इत्यत्र 'च' शब्दः 'हि' इत्यर्थे प्रसिद्धिद्योतकत्वेन प्रयुक्तः। सर्वेश्वरस्यापि ब्रह्मचर्यनियम-गुरुकुलवास-विवाहादिधर्मास्तदा तदाऽनुष्ठीयमानाः प्रसिद्धाः पुराणेष्विति सूचयति। उत्तरश्लोकेन भगवता कर्माकरणेन लोके संकरस्य विनाशस्य च प्रसक्तिर्भवेदिति च वर्णयति।

ननु 'कर्मणा बध्यते जन्तुः' इति मनुष्यमात्रस्य स्वभावात्, यद्यपि परमेश्वरस्य सर्वनियामकस्य तन्न बन्धकं, तथापि साधारणानां बन्धकमेव; युद्धादिकर्म लोकसंग्रहार्थं कुर्वन्तं मामनुकुर्वतः जनस्य बन्धकमेव तत्कर्म भवेदित्याशङ्कायां, कर्म कदा बन्धकं कदा नेति विवेचयति—

सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत।
कुर्याद्विद्वांस्तथाऽसक्तः चिकीर्षुर्लोकसङ्ग्रहम्॥[1]

इति श्लोकेन। यद्यपि 'यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धन' इति पूर्वमेव यज्ञार्थस्य भगवदर्पणरूपस्य कर्मणो न बन्धकत्वमिति प्रपञ्चितं, तथापि ईश्वरार्पणबुद्धिं विना केवलं फलेच्छापरित्यागपूर्वकं कृतं कर्माऽपि न बन्धकमिति निरूप्यते। अत्र 'अविद्वांसः' इत्यनेन केवलं कर्मठा एव गृह्यन्ते। 'विद्वान्' इति पदेन कर्मयोगी विवक्ष्यते। कर्म हि अविद्वांसमेव बध्नाति, 'अहं कर्ता ममेदं फलं भविष्यति' इत्यासक्तिवशात्। विद्वांसमनासक्तं न बध्नाति बन्धकत्वशक्तेरभिभवात्।

---

१. सैव, ३.२५.

श्रीमद्रामानुजः, अविद्वांसः अकृत्स्नविदः ज्ञानयोगेऽनधिकृताः सामान्यत आत्मविदः; विद्वान् कृत्स्नवित्, ज्ञानयोगाधिकारीति भाषते। एतन्मतरीत्या लोकसंग्रहार्थं ज्ञानयोगाधिकृता अपि कर्मयोगमेव अनुष्ठातुमर्हन्तीति प्रकृतश्लोकार्थः कृतार्थस्यापि परानुग्रहार्थं कर्म कर्तव्यमेवेति भावः। ननु कथमविद्वत्वं विद्वत्वं च ज्ञातुं शक्यत इत्यत आह 'सक्ताः कर्मणि' इति। यः सर्वत्रानभिस्नेहः स विद्वान्, यः सर्वत्राभिस्नेहः सोऽविद्वान् इति भावः। अथवा लोकसंग्रहार्थं कर्मणि प्रवृत्तेन कथमात्मज्ञानापरित्यागेन अनासक्त्या कर्म कर्तव्यमिति बोधयितुमयं श्लोक इति शङ्करानन्दः।

श्रीराघवेन्द्रस्वामी तु अज्ञवदाग्रहेण यदि ज्ञानिनाऽपि कर्म कर्तव्यं तर्हि विद्वदविद्वत्कर्मणोरविशेष इत्याशङ्कानिवर्तनार्थमयं श्लोक इत्यभिप्रेति। सक्त्यसक्तिपूर्वकत्वेन कर्मानुष्ठानं तयोर्विशेषः। सर्वथा कृत्स्नरूपेण आत्मविदपि लोकसङ्ग्रहार्थं कर्म करोतीत्यत्र न वैमत्यम्।

लोकसङ्ग्रहार्थमकृत्स्नवित् कर्तव्यान्येव कर्माणि कुर्वन्नपि, तद्वत् कर्मबद्धो न भवति कृत्स्नविदिति यदुक्तं तत्र हेतुमाह—'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः'[1] इत्यादिश्लोकद्वयेन।

कर्मानुष्ठानमात्रं न बन्धकारणं किन्तु तत्र कर्तृत्वाभिमान एव कर्मणो बन्धकत्वनिदानम्। कर्माणि प्रकृतिगुणगतानि नात्मगतानि। मध्ये मार्गमन्येन भ्रियमाणस्य भारस्य स्वयं स्वशिरसि समानयनेन स्वयंकृतानर्थानुभव एवाऽयं प्राकृतगुणगतानां कर्मणामात्मन्यप्यारोपेण संसारबन्धानुभवो नाम। तत्र तत्रैव तस्य तस्य धर्मस्य स्थापने हि किमिति दुःखानुभवः? प्रकृतिगुणानात्मगुणान् मत्वा तद्गतानि सर्वाणि कर्माणि आत्मनि गृह्णाति, अभिमन्यते च कर्ताऽहमिति; तेन नु बध्यते। प्रकृतिपरिणामाहङ्कारतादात्म्याध्यासेन आत्मानमेव अन्यथा गृह्णाति। नैवं तत्ववित्। सूर्यो यथा सर्वजीवराशिं शत्रुमित्रादिभेदं विना साक्षि-

---

१. प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।
अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते ॥
तत्ववित्तु महाबाहो गुणकर्मविभागयोः।
गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥
सैव, ३.२७-२८

मात्रभूतः पश्यति, न तत्रासक्तः सन्नहमेव तत् इति वा मन्यते, न वा तदयीविकारान् कर्माणि वा स्वीयानीति मन्यते, न वा अन्यदीयेन सुखेन दुःखेन वा सुखी दुःखी वा भवति; तथा सत्वरजस्तमोगुणान् नात्मगुणान् मन्यते, न वा तदीयविकारान् कर्माणि वा स्वीयानिति, अत एव न तत्रासक्तो भवति। अन्यस्य स्वात्मतया ग्रहणम् अन्यत्र सुखदुःखमये वस्तुन्यहं ममाध्यास एव बन्धकारणं, तदभावस्तु मुक्तिकारणमिति निष्कर्षः। अमुमेवार्थम् उपदेशसाहस्र्यां विशदयति भगवत्पादः।[1] मायायाः गुणैः क्रियमाणानि तद्गतानि कर्माणि, अहङ्कारविमूढात्मा 'अहं कर्ता' इति मन्यते। अकर्त्रादिस्वभावोऽपि अनहंरूपोऽपि कर्तेति मन्यते। अकर्त्रादिरूपेणात्मानं जानानः, न गुणाः न वा कर्माणि स्वीयानि किन्तु प्रकृतेरेवेति विवेकेन, गुणा गुणेषु वर्तन्ते करणादीनि विषयेषु वर्तन्ते नात्मनीति मननेन निर्धार्य, न तत्र ममकाराध्यासं भजते, नाऽहमिति वा, कर्तेति वा मन्यते। एवमध्यासदोषान्निवृत्तस्य कर्म बन्धकं नैव भवतीति उपदेशसाहस्र्यां व्यक्तमुक्तं यथा—

अहं प्रत्ययबीजं यदहं प्रत्ययवत्स्थितम्।
नाहं प्रत्ययवह्न्युष्टं कथं कर्म प्ररोहति॥[2]

कर्मबीजं पुनः प्ररोहानर्हं भवति 'नाऽहं कर्ता' इति भावनारूपवह्निना दग्धं सत्। 'अहङ्कारविमूढात्मा' इति पदस्य शरीरादावहमभिमान-कर्तृत्वाद्यभिमानयुक्त इति भगवत्पादाभिमतोऽर्थः। श्रीमद्रामानुजमते अहंकारो नाम न अनात्मन्यन्तःकरणे आत्मबुद्धिः किन्त्वनहमर्थे शरीरादावहंभावः, येन अज्ञातात्मस्वरूपः गुणकर्मस्वहंकर्तेति मन्यते इति। तत्र प्रथममते नाऽहमर्थ आत्मा। द्वितीये तु अहमर्थ एवात्मा, परन्त्वत्र अहमर्थानन्तर्गतोऽहंकारो नावस्त्वन्तरम्। प्रथममते तु नैवमिति विशेषः। अज्ञानामासक्तौ तत्त्वविदामनासक्तौ च निमित्तमाभ्यां श्लोकाभ्यां निरूप्यत इति विषये न कस्यापि वैमत्यम्।

अहंकारविमूढात्मा न केवलमहंकर्तेति, अहं भोक्तेति च मन्यते, किन्तु गुणकर्मसु सज्जतेऽपि। आसक्तिरपि अहंकारविमूढत्वलक्षणमेवेति भावः। अत

---

१. अहं क्रियाद्या हि समस्तविक्रिया सकर्तृका कर्मफलेन संहता।
चितिस्वरूपेण समन्ततोऽर्कवत्प्रकाश्यमानाऽसिततात्मनो ह्यतः॥
उ० सा०, प्रकरणं १४, पद्यं ४३.

२. तत्रैव, प्रकरणं ५, पद्यं १.

एव वदति 'प्रकृतेर्गुणसम्मूढाः सज्जन्ते गुणकर्मसु'[1] इति। प्रकृतेर्गुणैः शरीरादिभिर्मूढाः तानेवात्मत्वेन गृह्णानाः शरीरादीनां कर्मसु वयं कुर्मः, वयं भुञ्ज्महे इति अभिमानवन्तो भवन्ति। इन्द्रियमनोबुद्धिभिः सुदूरं नीताः आत्मानमपि तद्रूपमेव पश्यन्ति। यथा व्याधकुलसंवर्धितो राजकुमारः आत्मानं व्याधमेव, न राजकुमारं मन्यते तद्वत्। अतोऽज्ञाः इमे केवलं कर्मयोग एवाधिकारिणः, न तु ज्ञानयोगे अतस्तेषां ज्ञानयोगोपदेशः बुद्धिभेदाय भवति, तन्न कर्तव्यमिति वदति—

तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत्।

इति। एवं लोकसंग्रहार्थम् अज्ञेषु बुद्धिभेदानुत्पादनार्थं कर्म कर्तव्यमेव ज्ञानिनाऽपि। आत्मविद्धि गुणेषु कर्तृत्वमनुसन्धत्ते, अनात्मवित्तु आत्मनि कर्तृत्वम्। तत्र प्रथमः आत्मनः स्वरूपप्रयुक्तं न कर्तृत्वम्, अपि तु गुणसम्पर्ककृतमिति प्राप्ताप्राप्तविवेकन्यायेन अनुसन्धत्ते, द्वितीयस्तु तद्विपरीतमिति भावः।

मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः॥[2]

इति भगवदर्पणं कर्मणामुपदिशन्नुपसंहरति प्रकरणमिदम्। आत्मानात्मविवेकेन ईश्वराय कर्म करोमीति बुद्ध्या, परमेश्वरेच्छयैव अहं कर्ता, वस्तुतस्तु स एव कर्ता इति मत्वा सर्वाणि कर्माणि तदीयानीति बुद्ध्वा निराशीर्निर्ममश्च भूत्वा विगतज्वरस्सन् युद्ध्यस्वेति वदति। तत्र परमेश्वरे कर्मणां सन्न्यासो निक्षेपो वा उच्यते। अस्य तात्पर्य-भृत्यकृतकर्मणां स्वामीव, मत्कृतकर्मणाम् ईश्वर एव फलभागिति बुद्धिविशेष एव, न तु परमेश्वरे अकर्तरि कर्तृत्वारोप इति केचिन्मन्यन्ते। ईश्वरस्यैव सगुणस्य सर्वकर्तृत्वात्, तत्रैव कर्तृत्वानुसन्धानमपि भगवत्पादमतेऽप्यविरुद्धमिति तत्र कर्तृत्वानुसन्धानमेव कर्मणां सन्न्यास इति परेऽभिप्रयन्ति। मधुसूदनसरस्वती 'अध्यात्मचेतसा' इत्यस्य व्याख्याप्रसङ्गेन द्वितीयं मतमनुसरति। आत्मानमन्तर्यामिणमधि-अध्यात्मं, तत्र चेतसेति विवृण्वन् अहमन्तर्याम्यधीनः ईश्वराय कर्म करोमीति बुद्धिरेव सन्न्यास इति व्याचष्टे।

---

१. प्रकृतेर्गुणसम्मूढाः सज्जन्ते गुणकर्मसु।
तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत्॥
गी०, ३.२९.

२. सैव, ३. ३०.

एवमेव श्रीधरस्वामी-सदानन्द-ब्रह्मानन्दगिरि-परमार्थप्रपा-नीलकण्ठा अपि । भगवत्पादभाष्ये तु 'अध्यात्मचेतसा' इति पदं 'विवेकबुद्ध्या' इति व्याख्यातम् । पैशाचभाष्यशङ्करानन्दावपि तमनुवर्तेते । परं त्वत्रापि गुणसम्पर्ककृतं कर्तृत्वमात्मनो नाऽनुसन्धेयमिति अत्रैव तात्पर्यात् फलतो न विशेषः ।

श्रीमद्रामानुजस्तु 'अध्यात्मचेतसा' इति पदं प्रत्यगात्मनो यथावत्स्वरूपज्ञानेनेति विवृण्वन् तस्य परमात्मशरीरतया तदपृथक्सिद्धस्य तन्नियम्यस्वभावतया अनुसन्धानमेव विवक्षितमिति व्याचष्टे । तेन च मच्छरीरतया मत्प्रवर्त्यात्मस्वरूपानुसन्धानेन सर्वाणि कर्माणि मयैव क्रियमाणानीति मयि परमेश्वरे सन्न्यस्य, तानि केवलं मदाराधनारूपाणीति कृत्वा निराशीर्निर्ममश्च भूत्वा विगतज्वरः युद्धं कुर्विति तदीया योजना । पूर्वं गुणकृतमेव कर्तृत्वमित्यनुसन्धानं कर्तव्यमित्युक्तम् । साम्प्रतं तस्यापि भगवन्नियम्यत्वात् भगवत्कृतमेव तदपि कर्तृत्वमित्यनुसन्धानं कुर्विति नियुज्यते ।

असक्त्या लोकरक्षायै गुणेष्वारोप्य कर्तृताम् ।
सर्वेश्वरे वा न्यस्योक्ता तृतीये कर्मकारिता ॥[१]

इति गीतार्थसङ्ग्रहश्लोके 'सर्वेश्वरे वा' इति वाशब्दः क्रमाभिप्राय एव, न तु विकल्पाभिप्राय इति तदीयं हृदयम् ।

शङ्करानन्दस्तु 'सर्वमिदमहं च ब्रह्म' इत्यपरोक्षज्ञानवान् आधिकारिको वा भवतु परोक्षज्ञानी वा भवतु, अनात्मज्ञो वा भवतु, सर्वैरपि नैराश्यनिर्ममताभिः साकं लोकहितार्थं, स्वस्य लोकस्य च हितार्थं, स्वमात्रस्य च हितार्थं च यथाक्रमं कर्म कर्तव्यमेवेति विवेचयति । प्रथमस्य प्रयोजनं परतारणमेव; द्वितीयस्य स्वतरणं परतारणं च; तृतीयस्य चित्तशुद्धिद्वारा ज्ञानं मोक्षश्च प्रयोजनम् ।

एवं तृतीयाध्याये कर्मणः कर्तव्यत्वं विद्वदविद्वत्समानं निर्वर्ण्य, तस्य बन्धकत्वतदभावयोश्च हेतुं निरूप्य, तुरीयाध्याये कर्मस्वरूपं विविञ्चन् कर्माकर्मविकर्मभेदं दर्शयति ।

---

१. गीतार्थसङ्ग्रहः, श्लो० ७. वेदान्तदेशिकग्रन्थमालासम्पादनम् ।

किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः।
तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥[1]

इति प्रतिज्ञाय भगवान् अशुभात् संसारदुःखादात्यन्तिकी निवृत्तिः कर्मज्ञानद्वारा अकर्मज्ञानात्प्राप्यत इति वदति। कर्मस्वरूपं त्वतीव दुरूहं यत्र कवयोऽपि मोहिता भवन्ति। कर्मस्वरूपाज्ञानिनामेव कर्मणः स्वभावतो बन्धकत्वे सति, कथमकर्तृत्वानुसन्धानेन तत्कुर्वतामपि बन्धकत्वहानिरिति विचिकित्सा स्यात्। एवमेव अकर्माऽपि व्यापारोपरममात्रमिति केचिद्व्यामोहिताः। 'तत्ते कर्म प्रवक्ष्यामि' इत्यत्र 'तत्ते अकर्म' इति अकारप्रश्लेषेण कर्म अकर्म वा ज्ञात्वा मोक्ष्यसे अतः अकर्म च वक्ष्यामीति प्रतिज्ञातं भगवता। अत्र अकर्मपदेन कर्माभावो विवक्ष्यत इति केचित्, संन्यासो विवक्ष्यत इत्यन्ये।

श्रीमद्रामानुजः—कर्तुरात्मनो याथात्म्यज्ञानं कर्मयोगान्तर्गतमिति अकर्मशब्दवाच्य आत्मयाथात्म्यज्ञाने, सत्यपि मोक्षे, कर्मयोगान्तर्गतत्वेन तस्याप्राधान्यात्, कर्मैव कर्मयोगापरपर्यायमत्र वक्तव्यमिति 'तत्ते कर्मेति' कर्ममात्रं वक्ष्यामीति वक्ष्यमाणत्वेन निर्दिष्टमिति भाषते। एतद्दृष्ट्या कर्मपदमत्र न अकर्मण उपलक्षणम्। अन्तर्गतात्मज्ञानवतः आत्मयाथात्म्यज्ञानेन सह कर्मयोगस्य ज्ञानं, ज्ञात्वा तदनुष्ठानं च अशुभान्मोचकमिति भावः। अत्र श्लोके 'यज्ज्ञात्वा मोक्ष्यसे' इत्यत्र ज्ञात्वा अनुष्ठेय इत्यस्यापि उपलक्षणमिति सर्वे अङ्गीकुर्वन्ति।

कर्म नाम कर्तृव्यापारः, अकर्म च कर्तुः कर्तृव्यापाराभावः, विकर्मापि कर्मैव। तथा च अन्तर्गतज्ञानत्वेऽपि कर्तृत्वाननुसन्धानेऽपि तस्य बन्धकत्वस्वभावः कथमपगच्छति तस्मिन् ज्ञातमात्रे इत्यत आह—'कर्मणो ह्यपि' बोद्धव्यमित्यादिना। 'गहना कर्मणो गति'रित्यत्र कर्मशब्दो कर्मविकर्मणोरप्युपलक्षणम् इति भगवत्पादः।

श्रीमद्रामानुजः कर्मणः—मोक्षसाधनभूतस्य; अकर्मणः—आत्मयाथात्म्यज्ञानस्य; विकर्मणः – नित्यनैमित्तिकादिरूपेण विविधकर्मणश्च विषये बोद्धव्यमस्तीति व्याचष्टे। यतो नित्यनैमित्तिककाम्यद्रव्यार्जनादीनि कर्माण्यपि फलभेदकृतं त्रैविध्यं परित्यज्य मोक्षैकफलानुसन्धानेन कर्तव्यानि। अत्र

---

१. गी०, ४. १६.

कर्मयोगस्य बोद्धव्यप्रकारः दुर्गम इति 'गहना कर्मणो गतिः' इत्यस्य कर्मयोगमात्रपरत्वेन व्याख्या कृता। तेन तन्मते कर्मपदं न कस्याप्युपलक्षणम्। विकर्माकर्मणोरपि कर्मण्येवान्तर्भावः। न ह्यस्मिन् मते विकर्म निषिद्धं कर्म। काम्यकर्माण्यपि हि फलेच्छापरित्यागमात्रेण कर्मयोगो भवतीति तदाशयः।

श्रीमदानन्दतीर्थः 'कर्मणि' इति पञ्चम्यन्तेन स्वीकृत्य कर्मणः सकाशादिति विविङ्क्ते। कर्मणः सकाशात् कर्माकरणनिषिद्धकर्मणी बोद्धव्ये; अकर्मणः सकाशात् विविच्य कर्मविकर्मणी ज्ञातव्ये; विकर्मणः सकाशात् विविच्य कर्माकर्मणी ज्ञातव्ये। ननु कवयोऽप्यत्र मोहिता इति वर्णनात् कथं पुनरत्र ज्ञातव्यत्वमुच्यत इति चेत्, नायं शापः यत्कोऽपि न ज्ञातुं शक्नोतीति, किन्तु दुर्विज्ञेयपरत्वाभिप्राय एवेति न विरोधः। कस्याञ्चनावस्थायां विहितमपि कर्म न कर्तव्यमधिकाराद्यभावे, यथा अर्जुनेन भिक्षाचर्यं न कर्तव्यम्। कदाचित् अकरणापेक्षया कर्मैव कर्तव्यं यथाऽर्जुनेन युद्धम्। कस्याञ्चनावस्थायां निषिद्धमपि कर्तव्यं यथा अर्जुनेन बन्धुहननम्।

श्रीराघवेन्द्रस्वामी तु 'कर्म नः, विकर्म नः, अकर्म नः' इति पदविभागं स्वीकरोति। भिन्नपदस्थत्वेऽप्यार्षत्वात् णत्वेन 'कर्मण' इत्यादिरूपाणि तथा च 'नः' इति सर्वत्र 'मत्तः' इत्यर्थे व्याचष्टे। कर्माकर्मविकर्मभेदाः सर्वे मत्तः ईश्वरादेवेति विज्ञेयम्। न कुत्रापि स्वातन्त्र्यम्।

शङ्करानन्दः—शास्त्राणामनेकत्वात् शास्त्रप्रवर्तकानां बहुविधत्वाच्च देश-काल - युग - अधिकारि - वर्ण - आश्रम - वयोऽवस्थाभेदेन संकोचविकोचाभ्यां कर्मविधेरनेकत्वाच्च कर्मणस्तत्वं विचार्य निर्णेयम्। एवं विकर्मणोऽपि अकर्मणोऽपि च। अकर्म च सन्यासः—काम्यकर्मत्यागः, निषिद्धत्यागः, कर्मफल-त्यागः, सर्वकर्मत्यागः, कर्ममात्रत्याग इति बहुधा भिद्यते, इति तस्याऽपि तत्वं ज्ञातव्यमिति विवृणुते।

परमार्थप्रपारीत्या कर्मनाम सत्वसम्पन्नेन मनसा सह ज्ञानेन्द्रियाणां कर्मेन्द्रियाणां वा विधिपूर्वको व्यापारः। स च द्विविधः—सफलोऽफलश्च। तत्राद्यः स्वर्गाद्यर्थः द्वितीयः मोक्षपर्यवसायी। एकमेव कर्म संकल्पभेदेन सफलमफलं च भवति। तत्राद्यं विकर्म, द्वितीयं तु कर्म अकर्मसंज्ञकम्। मोक्षो हि फलत्यागपूर्वकं क्रियमाणेन कर्मणापि भवति। अकर्म तु सन्यासः स्वरूपेण। अतः कर्माकर्म-विकर्मणोर्गतिः गहनेति व्याख्यातम्। अत्र मते विकर्मशब्देन काम्यं कर्मैव विवक्ष्यते, न निषिद्धं कर्म श्रीमद्रामानुजमत इव। इयान् विशेषः—यदेतन्मते

अकर्माऽपि न कर्मण्यन्तर्गतं, किन्तु स्वतन्त्रमेव मोक्षसाधनं सन्यासो नाम। एतन्मतेऽपि कर्मण एकस्यैव ज्ञानं तत्तद्रूपेण ज्ञानं दुष्प्रापमिति गहना कर्मणो गतिः। अतः अत्रापि कर्मपदेन अकर्मविकर्मणोरुपलक्षणं न विवक्षितम्।

अकर्मशब्दस्य तूष्णींभाव एवार्थ इति श्रीधरस्वाम्यादयः। सर्वथा कर्माकर्मविकर्मज्ञानमत्यावश्यकम्।

सर्वोत्तमः कर्मकृत् को भवतीति निरूपयितुं प्रवृत्ते

कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः।
स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्मकृत्॥[1]

इति श्लोके बहवो व्याख्याभेदाः दृश्यन्ते। अत्र श्रीधरस्वामी वदति—परमेश्वराराधनार्थे कर्मणि अकर्म अबन्धकत्वात् कर्माभावम्, अकर्मणि नित्यकर्माकरणे प्रत्यवायहेतुत्वात् बन्धकत्वाद्वा कर्म च यः पश्यति स मनुष्येषु बुद्धिमान् योगी कृत्स्नकर्मकृच्चेति स्तूयते इति। अकरणस्य अभावरूपस्य प्रत्यवायसाधनत्वकल्पनेन कर्मण्यकर्मदर्शनम्, अकर्मणि च कर्मदर्शनं चोभयं मिथ्यादर्शनमेव, तादृशदर्शनेन बुद्धिमान् योगी च कथं भवतीति श्रीधरीयां व्याख्यां मधुसूदनसरस्वत्यादयो निरस्यन्ति। वस्तुतः श्रीधरस्वामिना नात्र मिथ्यात्वदर्शनादिकं विवक्ष्यते। किन्तु तथा अनुसन्धानमेव, नित्यकर्म अबन्धकमित्यनुसन्धानमेव विवक्षितमिति नास्ति तत्र दोषलेशोऽपि। कर्मयोगस्य नित्यकर्मणो वा अनुष्ठातुरवस्था वर्णितेति श्रीधराशयः।

कर्मणि देहेन्द्रियादिव्यापारे सति स देहेन्द्रियादेरेव न त्वात्मन इति देहात्माभिमानं परित्यज्य आत्मनि अकर्म अर्थात् व्यापाराभावं निष्क्रियत्वं यः पश्यति स बुद्धिमान् इति मधुसूदनशंकरानन्दयोर्व्याख्या। यथा अतिवेगेन गच्छत्सु शकटेषु, पार्श्वस्थेषु वृक्षगुल्मादिषु सचलनेष्विव दृश्यमानेषु, वस्तुगत्या तेषां व्यापाराभावं निष्क्रियत्वं च; यथा वा मेघचलनेन सक्रियाविव चन्द्रसूर्यौ वस्तुतो निश्चलौ इत्यवगतिः तथा। सत्येवोपाधौ औपाधिकान् धर्मान् आत्मनि यो न पश्यति स परमार्थदर्शी। तादृशस्य योगिनः कर्तव्यं किमपि नास्ति इति व्याचक्षाते। एतौ हि देहादिव्यापारस्य आत्मनि मिथ्यात्वनिरूपणपरोऽयं श्लोकः सामान्यतो ब्रह्मव्यतिरिक्तस्य मिथ्यात्वपरतयापि श्लेषेण बोधयतीति मत्वा

---

१. सैव, ४.१८.

'यद्वा' इति व्याख्यान्तरमपि स्वीकुरुतः। तद्यथा—कर्मपदं ज्ञानकर्मतया दृश्यपरम्; अकर्मपदं च अवेद्यं स्वप्रकाशमात्मस्वरूपं बोधयति। तथा च कर्माणि दृश्ये जडे सर्वत्र ब्रह्मव्यतिरिक्ते, अकर्म--ब्रह्म यः पश्येदिति योजना।

अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्॥

इति प्रतिपन्नेषु नामरूपात्मना अदृष्ट्वा सच्चिदानन्दरूपमेव यः पश्येत्; एवमकर्मणि—अधिष्ठानभूते ब्रह्मणि कर्म आरोपितरूपेण च यः पश्येत् स बुद्धिमान् मनुष्येषु, परमार्थदर्शीति स्तूयते। कर्मयोगप्रकरणेऽस्मिन् साक्षात् जगन्मात्रमिथ्यात्वनिरूपणं वा ब्रह्ममात्रसत्यत्वनिरूपणं वा यद्यपि न प्रकृतं, तथापि देहेन्द्रियव्यापारमात्रस्य मिथ्यात्वे न तात्पर्यं किन्तु सर्वदृश्यजातमिथ्यात्वेऽपीति बोधनेन प्रकृतार्थमुपकरोति इति तयोराशयः। वस्तुतस्तु, देहेन्द्रियादिव्यापारोऽपि आत्मनि प्रतीयमानः तत्र नास्तीति दर्शनं, देहेन्द्रियादीनामेव मिथ्यात्वमादायैव सर्वैरप्यद्वैतिभिः वक्तव्यम्। अतः तस्यापि मिथ्यात्वमात्मन्यध्यारोपेण कल्पितमिति निरूपणेनैव समर्थनीयम्। तच्च विशेषतोऽनुमानेन सिद्ध्यतीति अन्ये व्याख्यातारः। मधुसूदनशंकरानन्दौ तु श्लोकवाक्यस्य भङ्ग्यन्तरेणैव सिद्ध्यतीति वदतः। तदपि समीचीनमेव।

भाष्योत्कर्षदीपिकामते कर्म—व्यापारमात्रम् आत्मन्यारोपितं, तत्र कर्माभावदर्शनं, नाहं कर्तेत्यादिरूपेण दर्शनं कर्तव्यम्; अकर्मणि-निवृत्तावपि कर्म अर्थात् क्रियारूपं यः पश्येत्स बुद्धिमानिति योजना। अनया दिशा मधुसूदनशंकरानन्दाभिमतं पूर्वोद्धृतं पक्षान्तरेण विवरणम् अत्राप्रकृतमिव भाति।

श्रीमद्रामानुजः कर्मणि—कर्मयोगे तदन्तर्गतत्वात् अकर्म—आत्मज्ञानमपि यः पश्यति, अकर्मणि—आत्मज्ञानेऽपि कर्मयोगान्तर्गते कर्माकारतायाः एव प्राधान्यात् कर्म च यः पश्यति स बुद्धिमान् मनुष्येषु इति योजयति।

श्रीमदानन्दतीर्थस्तु कर्मणि-जीवेन क्रियमाणे अकर्म-अस्य विष्णोः कर्म, विष्णुरेव सर्वस्य कर्मणः स्वयं कर्तेति यः पश्येत्; यश्च अकर्मणि कर्माभावे सुषुप्तादावपि कर्म--विष्णोर्व्यापारं पश्यति, स्वप्नेऽपि भगवता गजादिसर्जनात् भगवतो व्यापारं यः पश्येदित्यादिरीत्या व्याचष्टे।

श्रीराघवेन्द्रस्तु कर्मशब्दो जीवपरः विधिबद्धत्वात्, तद्भिन्न ईश्वरोऽकर्मेति, कर्मपदं पक्षान्तरेण व्युत्पाद्य, जीवे अकर्म अस्वतन्त्रत्वात् कर्माभावम्, अकर्मणि ईश्वर एव स्वतन्त्रत्वात् कर्मकर्तृत्वं च यः पश्येदिति व्याचष्टे।

सर्वेषु मतेषु भगवदाराधनाबुद्ध्या आत्मनि कर्तृत्वानुसन्धानपरित्यागेन शोधितत्वंपदार्थज्ञानपूर्वकं कर्मयोगानुष्ठाने कर्मणः स्वाभाविकं बन्धकत्वं नश्यति, तेन कर्मणाऽपि सर्वाऽशुभतो मोक्षो भवतीति संप्रतिपन्नम्। परमेश्वरे कर्तृत्वानुसन्धानं वा क्रियताम्, आत्मनोऽकर्तृत्वानुसन्धानं वा, उभयथा आत्मनि कर्तृत्वानुसन्धानमेव जीवानां बन्धकमिति तत्परित्याग एव श्रेयः साधनमिति मूलभूत आशयः।

भगवत्पादस्तु कर्म कर्तृतन्त्रम्, अकर्म अर्थान्निवृत्तिरपि कर्तृतन्त्रा. अतः कर्माऽपि व्यवहारदशायामेव, अकर्माऽपि तस्यामेवावस्थायां यः पश्येदिति योजयति। कर्मण्यकर्मदर्शनमात्मनः परमार्थतोऽकर्तृत्वात्। अतः परमार्थदृष्ट्या आत्मस्वरूपं ज्ञातव्यम्। एवं च देहेन्द्रियादिव्यापारेषु सत्स्वपि कर्माभावं द्रष्टुमर्हतीति, तथैव व्यापारेषु सत्स्वेव अव्यापारं पश्येत्। अनेन कथं कर्माणि न लिम्पन्तीत्यस्य उत्तरं दत्तं भवति। व्यवहारदशायामेव कर्माकरणेन बन्धपरिहारो संभवतीति तु हृदयम्। कर्माकर्मणी विपरीततया गृह्येते यथा मृगतृष्णिकायामुदकं, रज्ज्वां वा सर्पः। अतः यत्रात्मनि वस्तुतः कर्म वर्तते निवृत्तिदशायां, तत्र कर्माभावदर्शनं; (यथा नौस्थेन नावि गच्छन्त्यामेव तत्रागतिदर्शनम्)। यत्र तु वस्तुगत्या कर्म नास्ति तत्रात्मनि कर्मदर्शनं च विपरीततयैव गृह्यमाणं यथा रुद्धं स्यात्। यद्वस्तुतः अकर्म तदकर्मेति, यच्च सकर्म तत्सकर्मेति यथा ज्ञातं स्यात् तथा प्रयतितव्यम्। अकर्मणि कर्मदर्शनोदाहरणं-नौस्थस्य नावि गच्छन्त्यां तटस्थेष्वगतिषु नगेषु प्रतिकूलगतिदर्शनात्, दूरेषु चक्षुषा असन्निकृष्टेषु गच्छत्सु नावान्तरेषु गत्यभावदर्शनात् प्रदर्शितम्। यद्यपि 'नाऽसतो विद्यते भावः' इत्यादिभिः प्रपञ्चमिथ्यात्वमात्ममात्रसत्यत्वं च प्रतिपादितं, तथापि पुनः पुनरुपदेशो न दोषायेति भगवत्पादमतम्।[1] लोक-

---

१. तदेतदुक्तप्रतिवचनमपि असकृदत्यन्तविपरीतदर्शनभाविततया मोमुह्यमानो लोकः श्रुतमप्यसकृत्तत्वं विस्मृत्य, मिथ्याप्रसङ्गमवतार्य अवतार्य चोदयतीति पुनः पुनः उत्तरमाह भगवान् दुर्विज्ञेयत्वं चालक्ष्यवस्तुनः।
शां० भा०, ४.१८.

प्रसिद्धे कर्मणि कर्माभावं, नगेषु न गतिः किन्तु नाव्येवेतिवत्, यः पश्येत्, अकर्मणि च कार्यकारणव्यापारोपरमे, कर्मवदात्मन्यध्यारोपितेऽकर्मणि यः कर्म पश्येत् स बुद्धिमान् मनुष्येष्विति भगवत्पादीया योजना ।

कर्मण्यकर्मदर्शनं नाम कर्तृत्वाद्यभिमानाभाव एवेति तदनन्तरश्लोकेनाऽपि दर्शयति—

यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः ।
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥[1]

इति कर्मण्यकर्मदर्शनं हि कर्मफलेष्वनासक्त्या, कामकारणसंकल्पत्यागेन चेष्टामात्रशेषतायां दृढतरं भवति । तदा च आत्मतत्त्वज्ञानमेकमेव कर्मण्यकर्मदर्शिनः सम्भवति । स हि न स्वार्थं कर्म कुरुते, किन्तु लोकसंग्रहार्थं वा जीवनमात्रार्थं वा । अनेन शुभाशुभलक्षणानि सर्वाणि कर्माणि दग्धप्रायाणि भवन्तीति भगवत्पादीयः पन्थाः ।

श्रीमद्रामानुजस्तु कर्मण एव ज्ञानाकारता कामसंकल्पराहित्यमिति वदति । 'संकल्प'शब्दः तन्मते प्रकृत्या तद्गुणैश्च आत्मानमेकीकृत्य अनुसन्धानं सूचयति । कामश्च फलेष्वासक्तिः । उभयत्यागेन प्रकृतिवियुक्तस्यात्मनः याथात्म्यानुसन्धानं भवति । तादृशानुसन्धानेन सहितं कर्मानुष्ठानमेव कर्मणो ज्ञानाकारता नाम । तदानीं कर्मणो लेपस्य अवसरलेशोऽपि नास्ति ।

श्रीमदानन्दतीर्थमते परमात्मैव कर्ता नाऽहमित्यनुसन्धानमेव कामसंकल्पादिदूरीकरणाय प्रभवति इति हेतोः तत्प्रभावेण परमात्मसाक्षात्कारः, तद्बलेन च सर्वाशुभतो मोक्षश्च सिद्ध्यत इति व्याचष्टे ।

अत्र समारम्भशब्दः कर्मपरः कर्मव्युत्पत्त्येति भगवत्पादः, कर्मोपक्रमपर इति श्रीमद्रामानुजः । संकल्पशब्देन कामपूर्वभावी मानसव्यापारविशेष इति श्रीमद्रामानुजवर्जं सर्वेषामभिप्रायः । प्रकृत्यविविक्ततया आत्मानुसन्धानमिति श्रीमद्रामानुजः । ज्ञानाग्निना दाहस्तु प्रकृतेरङ्कुरभावात् च्युतिरेव न तु मूलतो नाशः । तेन क्रियमाणस्य कर्मणैव दाहो विवक्षितोऽत्र न तु सर्वकर्मनाशः । अत

---

१. गी०, ४. १९.

एव 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा'[1] इति सन्दर्भे प्रयुक्तः 'सर्व' पदो नास्त्यत्र ।

कर्मण्यकर्मदर्शनेन कर्मलिप्तो न भवतीति उत्तरश्लोकेनापि निरूपयति[2]—

त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित्करोति सः ।।

अयं श्लोकः योगवासिष्ठे निर्वाणप्रकरणे एवं व्याख्यातः[3]—

आसक्तिमाहुः कर्तृत्वमकर्तुरपि तद् भवेत् ।
मौर्ख्ये स्थितेऽपि मनसि तस्मान्मौर्ख्यं परित्यजेत् ।।
परं तत्वज्ञमाश्रित्य निरासक्तेर्महात्मनः ।
सर्वकर्मरतस्यापि कर्तृतोदेति न क्वचित् ।।
अकर्तृत्वादभोक्तृत्वमभोक्तृत्वात्समैकता ।
समैकत्वादनन्तत्वं ततो ब्रह्मत्वमाततम् ।।
नानातामलमुत्सृज्य परमात्मैकतां गतः ।
कुर्वन् कार्यमकार्यं च नैव कर्ता त्वमर्जुन ।।
यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः ।
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ।।

आत्मनः कर्तृत्वानुसन्धानत्याग एव 'त्यक्त्वा कर्मफलासङ्गम्' इत्यनेन विवक्ष्यत इति व्यक्तमनेन । 'नित्यतृप्तो निराश्रयः' इति पदाभ्यां समैकत्वं परमात्मैकदर्शित्वं च विवक्ष्यते । तेन च नैव कुर्वन्न कारयन्निति फलतीति व्यक्तमनेन प्रकरणेन । कर्मफलासङ्गो हि योगवासिष्ठरीत्या कर्तुत्वाभिमानत्यागः । शङ्करानन्दः, कर्मफलो देहः, तत्रासङ्गं कर्त्ता भोक्ताऽहमित्यभिमानं, तत्तादात्म्यरूपमिति व्याचक्षाणो योगवासिष्ठरीतिमेवानुसरति । अन्ये तु सर्वेऽत्र कर्मफलासक्तित्यागमेवाभिप्रयन्ति योगवासिष्ठोक्तेरपरिचयात् । तत्र फले-

---

१. गी०, ४. ३७
२. सैव, ४. २०
३. यो० वा०, नि० प्रकरण ५४.२९–३३.

ष्वनासक्तावपि कर्मण्यासक्तिरिति स्यात्। तद्वारणार्थं निराश्रय इति दृष्टादृष्टफलसाधननिरपेक्षार्थे इति भगवत्पादाशयः। नित्यतृप्तपदेन विषयनिराकांक्षा विवक्षितेति भगवत्पादः; नित्ये स्वात्मन्येव तृप्त इति श्रीमद्रामानुजश्च वदतः। निराश्रयत्वं च श्रीमद्रामानुजरीत्या अस्थिरप्रकृतावाश्रयबुद्धिराहित्यम्। परमात्मैकताप्राप्तिरिति योगवासिष्ठदिशा। 'नैव किञ्चित् करोति' इत्यस्य निष्क्रियात्मदर्शनसम्पन्नत्वात् नैव किंचित्करोतीति भगवत्पादव्याख्या योगवासिष्ठाभिप्रायेण युज्यते। कर्मापदेशेन ज्ञानाभ्यासमेव करोतीति श्रीमद्रामानुजः। अत्र योगवासिष्ठदिशैव 'त्यक्त्वा कर्मफलासङ्गम्' इति 'कामसंङ्कल्पवर्जितः' इत्यनयोः पौनरुक्त्यं न सम्भवति।

श्रीमदानन्दतीर्थस्तु 'त्यक्त्वा कर्मफलासङ्गम्' इत्यनेन तमंशमनूद्य तावतैव न कर्मण्यकर्मदर्शनं, किन्तु नित्यतृप्तो निराश्रयः ईश्वरसरूपोऽहमिति ज्ञानेनैव तत्परिपूर्णं भवतीति भाषते। ब्रह्मानन्दगिरिः निराश्रयत्वान्नित्यतृप्तत्वं, नित्यतृप्तत्वात् कर्मफलसङ्गत्याग इति व्याचष्टे।

सामान्यतः लेपनशीलं शारीरं कर्म कुर्वन्नपि तल्लिप्तो न भवतीत्यत्र गुणत्रयातीतत्वमेव कारणमिति वदति उत्तरश्लोकेन—

निरीशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः।
शारीरं केवलं कर्म कुर्वन् नाप्नोति किल्विषम्॥[1]

अभिलषितप्रार्थनारहितः निराशीरित्युच्यते। अर्थात् निगृहीतरजोगुणः। यतचित्तात्मा नित्यसत्वस्थः। त्यक्तसर्वपरिग्रहः निगृहीततमोगुणः। एवं निस्त्रैगुण्यः केवलं शरीरस्थितिमात्रप्रयोजनं कर्म कुर्वन् किल्विषं नाप्नोति। शारीरमिति विशेषणेन शरीरनिर्वर्त्यं कर्म न विवक्षितं, यतः शरीरनिर्वर्त्यनिषिद्धकर्माचरणेऽपि किल्विषं न प्राप्नोतीत्यनिष्टप्रसङ्गः स्यात्। शरीरमात्रनिर्वर्त्यं वाङ्मनोनिरपेक्षं तु कर्म न सम्भवत्यपि। 'केवलम्' इति पदस्य वैय्यर्थ्यं च स्यात्। अतः शरीरस्थितिमात्रप्रयोजनं करणत्रयप्रवृत्तं कर्मैव विवक्ष्यते शारीरं केवलं कर्मेति वदता भगवता। 'किल्वषं नाप्नोति' इत्यनेन ज्ञानाग्निदग्धकर्मत्वात् मुक्तिप्रतिबन्धहीनो भवतीत्यर्थः। अत्र शारीरं कर्मापि प्रारब्धत्वबुद्ध्या करोति न तु कामनावशात्। तदपि ह्यःश्वस्तनवृत्यैव, न तु

---

१. गी०, ४. २१.

बहुकालव्याप्तशरीरनिर्वाहयोग्यसामग्रीसंग्रहेणेति बोधयितुं निराशीरिति निष्परिग्रहश्चेति पदे। कथं तदित्यत आह—'यतचित्तात्मा' इति। यतमनोदेहः बुद्धिचापल्यादिरहित इत्यर्थः। श्रीमद्भागवते[1] यथा जडभरतः वर्णितः तथा इन्द्रियप्रीतिनिरपेक्षः। तथा च नारदपरिव्राजकोपनिषदि षड्विधानि लक्षणानि[2] उक्तानि—

अजिह्वः षण्डकः पङ्गुरन्धो बधिर एव च।
मुग्धश्च मुच्यते भिक्षुः षड्भिरेतैर्न संशयः॥
इदं मृष्टमिदं नेति योऽश्नन्नपि न सज्जति।
हितं सत्यं मितं वक्ति तमजिह्वं प्रचक्षते॥
अद्यजातां यथा नारीं तथा षोडशवार्षिकीम्।
शतवर्षां च यो दृष्ट्वा निर्विकारः स षण्डकः॥
भिक्षार्थमटनं यस्य विण्मूत्रकरणाय च।
योजनान्न परं याति सर्वथा पङ्गुरेव सः॥
तिष्ठतो व्रजतो वाऽपि यस्य चक्षुर्न दूरगम्।
चतुर्युगां भुवं मुक्त्वा परिव्राट् सोऽन्ध उच्यते॥
हिताहितं मनोरामं वचः शोकावहं च यत्।
श्रुत्वाऽपि न श्रृणोतीव बधिरस्स प्रकीर्तितः॥
सान्निध्ये विषयाणां यः समर्थोऽविकलेन्द्रियः।
सुप्तवद्वर्तते नित्यं स भिक्षुर्मुग्ध उच्यते॥

एवं वर्तमानस्य किल्विषप्रसक्तेरेवाभावात् नाप्नोति किल्विषमिति यदुक्तं तद्वितथमिति शंका स्यात्। तस्यापि यावज्जीवमग्निहोत्रं जुहोतीत्यादि, विधिवशप्राप्तनित्यनैमित्तककर्मणामकरणेन प्रत्यवायो नास्तीति बोधयितुमिति व्याख्येयम्। अथवा जन्मान्तरीयानां मुक्तिप्रतिबन्धकानां पापानां निवृत्तिरेव 'नाप्नोति किल्विष'मित्यनेन विवक्षितमिति व्याख्येयम्।

———————

१. भागवतम्—५. ९, १० अध्यायौ।

२. नारदपरिव्राजकोपनिषद्—II, *The Minor Upaniṣads*, PP. 146-47.

भाष्योत्कर्षदीपिका तु किल्विषशब्देन अत्र अकरणनिमित्तः प्रतिषिद्धानुष्ठान अन्यो वा प्रत्यवायो न विवक्ष्यते, किन्तु धर्माधर्माधिकाररूपः संसारबन्ध एवेति वदति। अत एव 'नैव किञ्चित्करोति सः'; 'कृत्वापि न निबध्यते' इत्यादिकमुक्तमिति समर्थयति। एतन्मते गृहस्थमात्रपरोऽयं श्लोकः। लोकसंग्रहार्थं क्रियमाणेन धर्मेणापि नास्य संसारबन्धः। अत्रेदं विचारणीयम्—अधर्मः विहिताकरणजन्यः उत निषिद्धाचरणजन्यः? अकरणस्य अभावरूपस्य न प्रत्यवायजनकत्वं यदि, तर्हि कस्य किल्बषाप्राप्तिर्विवक्ष्यते? यदि तात्कालिकं कर्मान्तरं विहितेतरं भावरूपमेव गृह्यते, तर्हि प्रत्यवायप्रसक्तिरनिवार्यैव। निषिद्धाचरणं यदि गृह्यते, संसारबन्धाभावो निषिद्धाचरणेनेति अनिष्टः प्रसङ्गः। अथ त्यक्तसर्वपरिग्रहस्य निराशिषश्च तदप्रसक्तिरेव चेत् 'नाप्नोति किल्बिषमिति' पृथक् कथनस्यानावश्यकता, 'कुर्वन्' इत्यास्यापार्थता च। अतो अकरणनिमित्तः प्रत्यवायो न प्राप्यत इत्येव विवक्षितमत्रेति शंकरानन्दाशयः समीचीनः प्रतिभाति। भाष्योत्कर्षदीपिका तु कर्मण्यभिप्रवृतस्यापि कर्मण्यकर्मदर्शिनः कर्मस्वभावस्तिरोहितो भवतीति वदति। शाङ्करभाष्ये[1] 'अनिष्टरूपं पापं धर्मं च' इत्यत्र अधर्मपदं त्वविवक्षितम्। धर्मस्यैव ज्ञानिदृष्ट्या अधर्मत्वेन, धर्मशब्दस्यैव विवरणं पापपदमिति मन्तव्यम्।

श्रीराघवेन्द्रस्वामी किल्बिषं कर्मबन्धमिति व्याचष्टे। अत्र किल्बषपदप्रयोगः धर्माधर्मादिमिथ्यात्ववादं निराकर्तुमिति अभिप्रेति। एतावताऽपि तन्मिथ्यात्ववादो निरस्तो न भवति। प्रत्युत मिथ्यात्वेनाभिमतस्य किल्बिषस्यैव कर्मबन्धस्थाने वर्णनात् स दृढीभवतीति अद्वैतिमतस्य न क्षतिः।

श्रीमद्रामानुजः, निर्गतफलाभिसन्धिः, यतमनोबुद्धिः, आत्मैकप्रयोजनतया प्रकृतिप्राकृतवस्तुनि ममतारहितः, शारीरं शरीरावधिकं, यावज्जीवम् अथवा शरीरसम्बन्धि कर्म कुर्वन् किल्बिषं नाप्नोतीति व्याचष्टे। शुद्धप्रत्यगात्मज्ञानपूर्वकमेव कर्म कुर्वतः तस्य कर्मणो बन्धकशक्तिः परास्ता भवतीति तदाशयः।

त्यक्तसर्वपरिग्रहस्य गृहस्थस्य यतेर्वा शरीरस्थितिमात्रप्रयोजकं कर्माऽपि याचनादिस्वप्रयत्नसाध्यं चेत् दोषायैवेति निरूपयितुं वदति—

---

१. न प्राप्नोति किल्बषम् अनिष्टरूपं पापं धर्मं च।
धर्मोऽपि मुमुक्षोः किल्बिषमेव बन्धापादकत्वात्॥

शाङ्करभाष्यः गी०, ४.२१

यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः ।
समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते ।।[1]

भिक्षाटनविधानं यथा मनुना[2] निरूपितं तदनुसारेण प्रयत्नं विना अयाचित-मसंक्लृप्तं यदृच्छया उपपन्नमेव पञ्चसु गृहेषु, विना पूर्वव्यवस्थां मधुकरवृत्या भिक्षाटनानपेक्षं लब्धेन सन्तुष्टः स्यात् । एवं यदृच्छालाभेन क्षुत्तृष्णादिबाधा शीतोष्णबाधा वा यदि न निवर्तते तदा तु तासां सहनमेवाऽयं करोति, न तु तत्परिहारार्थं स्वयं यतत इत्यत आह 'द्वन्द्वातीतः' इति । क्षुत्तृष्णादिबाधा हि व्युत्थानदशायामेव भवति, न तु समाधिदशायाम् । यदृच्छया यदि न किञ्चिदुपलभ्यते तदा समाधौ प्रविश्य तां बाधां वारयति, न तु कदापि किमपि कमपि प्रार्थयते कर्मण्यकर्मदर्शी । यतिर्वा गृही वा इत्यविरोधोऽत्र । यतिपरत्वे 'त्यक्तसर्वपरिग्रहः' इति कौपीनयुगलादियतिधर्मनिर्दिष्टवर्जं सर्वपरिग्रहत्यागः; गृहिपरत्वे स्वकर्मानुष्ठानयोग्यातिरिक्तानां सर्वेषां परिग्रहाणां त्याग इति मन्तव्यम् । यदृच्छया लब्धेन अपर्याप्तेन द्रव्येण अग्निहोत्रादिनिर्वाहः न शक्यते चेत् किं कर्तव्यमित्यत आह 'यदृच्छालाभसन्तुष्टः' इति । बहु स्वल्पं वा यल्लब्धं यदृच्छया तावतैव अग्निहोत्रादिकं करोति । अत्र द्रव्यलोपादिन्यूनतादोषो न भवति । 'नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते'[3] इति भगवतैवोक्तम् । एवं विकलं कर्म कुर्वतः फलहानिः स्यादिति चेत् तत्राह 'समः सिद्धावसिद्धौ च' इति । फलनिरपेक्षः समाचरेत् । तदानीं प्राप्तमपि स्वर्गादिफलं तं न बध्नाति । सर्वं चेदं प्रकरणं गृहस्थयतिसाधारणमेव ।

कर्मण्यकर्मदर्शी लोकदृष्ट्या भिक्षाटनादौ कर्तैव भवति । स्वानुभवे तु शास्त्रप्रमाणजनितसंस्कारेण न वस्तुतः कर्ता, अतो नाऽयं सन्तुष्टरूपोऽपि कर्म कुर्वाणोऽपि तत्राकर्मदर्शनात् बद्धो भवतीति भगवत्पादाशयः ।

श्रीमद्रामानुजस्तु, यदि शरीरधारणार्थद्रव्यार्जनादिष्ववश्यं प्रवृत्तिः कर्मण्यकर्मदर्शिनः, तर्हि अवर्जनीयाः शस्त्रसम्पातादिशीतोष्णादिस्पर्शाः,

---

१. गी०, ४.२२

२. न चोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया ।
नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित् ।।
म० स्मृ०, ६. ५०

३. गी०, २. ४०

ते च प्रवृत्तिविघातकाः क्रोधसन्तापादिकं हर्षामर्षादिकं च जनयिष्यन्तीति कथमात्मज्ञानवत् कर्मयोगसिद्धिरिति शङ्कावारणायाऽयं श्लोक इति यदृच्छालाभादिपदानि पूर्ववदेव व्याचष्टे । कर्मयोगे अनासक्तियोगेऽनुष्ठिते न संसारबन्ध इति तात्पर्यम् ।

यज्ञाय कर्म आचरतः, यज्ञरूपकर्मण्यभिप्रवृत्तस्य समग्रं कर्म यज्ञाय यज्ञनिर्वृत्त्यर्थं प्रविलीयते इत्युत्तरश्लोकेन[1] सकलस्यापि कर्मणः स्वर्गादिबन्धकत्व-फलदातृत्वं न भवतीति निरूप्यते । कर्मण्यकर्मदर्शिनः समग्रं कर्म विष्णुप्रीत्यर्थमेव भवति न तु स्वर्गादिफलार्थम् । स्वर्गादिकं सर्वं फलं तेनानुभूयमाने आत्मानन्दे प्रलीनमेव भवति । तदीयब्रह्मानन्दस्य मात्रा एव स्वर्गादयस्तत्रैवान्तर्गता इति भावः ।[2] श्लोकेऽस्मिन् 'यज्ञाय आचरतः' इत्यन्वयेन, तादृशस्य कर्मणि प्रवृत्तिः भगवत्प्रीत्यर्थमेवेति, तस्य समग्रं कर्म सफलं सवासनं प्रविलीयते, अर्थात् स्वकार्य-रूपबन्धाय न भवति, केवलमात्मानन्दायैव भवतीति भावः । एतदेवाभिप्रेत्य, कर्मण्यकर्मदर्शिनः कर्मणि प्रवृत्तस्यापि 'नैव किञ्चित्करोति सः' इति कर्माभाव उक्तः, न तु वस्तुगत्या कर्माकरणमेव । अन्यथा 'कर्मण्यभिप्रवृत्तोऽपि' इत्यनेन विरोधः स्यात् । कर्तृत्वाध्यासरहितस्य आत्मनि अकर्तृत्वमनुसन्दधानस्य समग्रं कर्म न स्वार्थं, किन्तु भगवदाज्ञापरिपालनार्थत्वात् भगवत्प्रीतये एव । तेनानुष्ठीयमानम् आहारव्यवहारादिकमपि शरीरादिकर्तृतयानात्मकर्तृतया अनुसन्धीयमानत्वात् तत्फलं च आत्मन्यसम्बद्धम् ऊषरे वर्षितमिव, उपभोक्तृ-शून्यं समूलं विनश्यतीति भावः । यज्ञपदं विष्णुपरमित्यानन्दगिरिः । भगवत्पादस्तु श्रीमद्रामानुजवत् यज्ञनिर्वाहार्थमित्येव यज्ञार्थशब्दं व्याचष्टे । गतसङ्गत्वादि-विशिष्टस्य कर्मचेष्टाविशेषाः सर्वेऽपि वैधकर्मपर्यवसायिन एव, केवलं लोकसङ्ग्रहार्थाचरणमेवेति, तथा आचरतः प्राचीनं पुण्यपापबन्धकं क्षीयत इति योजनाऽपि न भगवत्पादसिद्धान्तविरुद्धा । कर्तृत्वाध्यासादिरहितं क्रियमाणं कर्म अकर्मरूपेण दृश्यत इति, ज्ञानस्वरूपमेव भवतीत्यभिप्रायेण 'ज्ञानावस्थित-चेतसः' इत्युक्तम् । तेन च दग्धेन्धनादिवत् स्वयमेव नश्यति उपशमं प्राप्नोति इति योजनाऽप्युपपद्यते ।

---

१. गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।
यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥

सैव, ४. २३.

२. एतस्यैवानन्दस्यान्यानि मात्रामुपजीवन्ति ।

बृ० उ०, ४. ३२.

# पञ्चमः परिच्छेदः

## योगविचारः

भगवद्गीतायाः प्राचीनेषु हस्तलिखितग्रन्थेषु प्रत्यध्यायान्तं 'योगशास्त्रेऽमुकाध्यायः' इति लिखितं दृश्यते । वेदान्तपरा ये सन्ति पारिभाषिकाश्शब्दा गीतायां तेषां सङ्कलनं व्याख्यानभेदाश्चानुबन्धरूपेण पश्चाद्दीयते । किन्तु तेषां मध्ये योगशब्दस्य केवलं विशेषपरिशीलनमत्र चिकीर्षितम् । गीताया योगशास्त्रत्वात् योगशब्दस्य भिन्नभिन्नसन्दर्भेषु विभिन्नार्थेषु प्रयुक्तत्वात् प्रायशस्तस्य शब्दस्य या व्युत्पत्तयः तत्तत्सन्दर्भेषु भाष्यकृद्भिः प्रस्तुतास्तासां तुलनात्मकेनाध्ययनेन तद्भाष्याणामपि मौलिका भेदा अवगन्तुं शक्यन्ते ।

समस्ततया व्यस्ततया च मिलित्वा 'योगः', 'योगी', 'युञ्जानः', 'युक्तः', इति पदानि एकोत्तरशतवारं गीतायां प्रयुक्तानि । एकचत्वारिंशद्वारं योगशब्दस्य स्वतन्त्रतया प्रयोगो दृश्यते । योगशब्दस्य निर्वचनं योगिनां लक्षणमपि तत्र तत्र तत्तत्सन्दर्भानुरूपेण भगवतैव दत्तम् । यथा—

> योगः कर्मसु कौशलम् ।[1]
> अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।
> स सन्यासी च योगी च न निरग्निर्न चाक्रियः ॥[2]

---

१. गीता, २.५०
२. सैव, ६.१

यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ।[1]

× × ×

योगी युञ्जीत सततमात्मानं रहसि स्थितः ।[2]

× × ×

यदा विनियतं चित्तं……युक्त इत्युच्यते तदा ।[3]

× × ×

तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ।[4]

× × ×

सर्वभूतस्थमात्मानं……ईक्षते योगयुक्तात्मा ।[5]

× × ×

आत्मौपम्येन सर्वत्र……योगी परमो मतः ।[6]

एषु स्थलेषु फलाभिसन्धिं विना कर्मानुष्ठानं, मनस आत्मन्यवस्थितिः, मनस इन्द्रियाणां च विषयेभ्यो विनिवृत्यात्मन्यवस्थापनं, सुखदुःखयोः शीतोष्णयोश्च समानबुद्धिः, कर्तृत्वभोक्तृत्वाभिमानराहित्यं, जीवात्मपरमात्मनोरैक्यज्ञानं, तयोरङ्गाङ्गिभावज्ञानं; तयोः स्वस्वामिभावज्ञानं वा, प्राणायामादिभिर्मनसो वशीकरणं, ऐकाग्र्येण परमात्मध्यानं; सर्वसङ्कल्पसंन्यासः, भक्तियोगः, सर्वात्मना भगवति प्रपत्तिः, ब्रह्मनिर्वाणावस्थाया जीवन्मुक्त्यवस्थाया वा निकटपूर्वस्थितिः, जीवब्रह्मणोरैक्यमिति बहुधा व्याख्यातम् ।

द्वितीयाध्यायारम्भे देहिनो नित्यत्वं देहस्य च विनाशित्वं प्रतिपाद्य कर्मफलेष्वनासक्तिरेव योग इति विवृणुते भगवान् । 'युज्' धातोरुत्पन्नो

---

१. सैव, ६.२

२. सैव, ६.१०

३. सैव, ६.१८

४. सैव, ६.२३

५. सैव, ६.२९

६. सैव, ६.३२

योगशब्दः सङ्गत्यागेन फलासक्तित्यागेन च सम्पद्यत इति विरोधाभास इव प्रतिभाति। तत्र 'योगस्थः कुरु कर्माणि' इत्यत्र भगवत्पादैः 'केवलमीश्वरार्थं तत्रापीश्वरो मे तुष्यत्विति सङ्गं त्यक्त्वा' इति व्याख्यातम्।

अत्रायमभिप्रायः प्रतिभाति यत्, सर्वथा निष्कामनया अनुष्ठितं कर्म ईश्वरार्पितं भवति। फलाभिसन्ध्यभावात् कर्ता तदनुलिप्तो न भवति।

अत एव ईश्वरेण सह पूर्णतया युक्तं भवति तत् कर्म; तदंशलेशोऽपि कर्तरि नावशिष्यत इति हेतोः तस्य कर्मयोगत्वम्। तस्यैव कर्मणः फलाभिसन्धिश्चेत्, अभिमानवशात् कर्तृत्वं कर्तरि, कर्तुः फलाकांक्षया तत् फलदातृत्वं ईश्वरे, दत्तत्वात् फलस्य तद् भोक्तृत्वं पुनः कर्तरि इत्येवमुभयकूलभाङ् नदीव कर्म-प्रवाहः कुत्राऽपि युक्तो न भवति। अतः तादृशस्य कर्मणः कर्मयोगत्वं न भवितुमर्हति। तत्रैव द्वितीयाध्याये निष्कामकर्मानुष्ठानाङ्गभूता अथवा तत्-फलभूता या समत्वबुद्धिः लाभालाभादिविषये सा बुद्धियोग इति व्यपदिश्यते। अत्रापि विरोधाभास एव। बुद्धेः समत्वे योगः अथवा बुद्धेः लाभालाभाभ्यां वियोगः योगशब्दवाच्यो भवति। लाभालाभाभ्यां वियुक्तस्य तादृशबुद्धियुक्तस्य सुकृतदुष्कृताभ्यामपि वियोगः सम्भवति। अतः तस्य कर्मणः बन्धकत्वशक्तिः नष्टा भवति, अभिमानरूपरज्जवभावात्। एवं पुण्यपापाभ्यां निर्मुक्तः कुशल-कर्मकृत् भवति। अवश्यमनुष्ठेये सति कर्मणि तद्बन्धकत्वव्यावृत्या तदनुष्ठानं कुशलस्य समर्थस्य मार्गः। पालितव्येऽपि सर्पे तस्य विषदन्तोन्मूलनेन तं निरुपद्रवं कृत्वा पालनं कुशलेन खलु शक्यते। पुण्यपापनिवृत्तिः संसारबीज-नाशनमेव।

कर्मनिर्हरणम् आत्यन्तिकदुःखनिवृत्तये हेतुरित्युक्तम्। कर्मयोगस्तु लाभा-लाभयोः समत्वबुद्धिमुत्पादयतीत्युक्तम्। द्वयोर्मध्ये परमपुरुषार्थोपयुक्ताय कर्मनिर्हरणाय कर्मत्यागोऽनिवार्यश्चेत् पूर्वमेव कुतो न त्यज्यते, किमर्थं कर्मयोग इत्यर्जुनस्य जिज्ञासा।

त्यज धर्ममधर्मं च उभे सत्यानृते त्यज।
उभे सत्यानृते त्यक्त्वा येन त्यजति तत् त्यज॥[1]

इति शान्तिपर्वण्युक्तप्रकारेण पुण्यापुण्ययोस्त्यागाय यः कर्मयोगः उपकरोति

---

१. म० भा०, शान्तिपर्व, ३२९.४०

पुण्यपापत्यागानन्तरं स एव त्याज्य इति चेत् प्रथममेव कर्मत्यागो वरीयान् खलु ? मध्ये किमर्थं कर्मयोग इत्याशङ्का। अत्रोत्तरम्—यावत्किमप्यकुर्वाणो न स्थातुं शक्यते 'न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्' इति न्यायेन, तावत् बन्धकत्वविशिष्टकर्माचरणात् बन्धकत्वनिवृत्तकर्माचरणं वरम्, यस्यैव अपरं नाम कर्मयोग इति। अत्र नूत्नोऽयं संशयः उत्पद्यते। बन्धकत्वनिवृत्तं कर्म अनुष्ठेयं चेत् 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिनां फलश्रुति-मुखरितानां श्रौतवाक्यानाम् आनर्थक्यप्रसंगः सम्भवति। अस्मिन्नेव प्रसंगे गीताचार्यैः मीमांसकमतस्य खण्डनं क्रियते। सन्त्येव पुष्पिता वाचः वेदेषु, लोकेषु चिकीर्षामुत्पादयितुम्। किन्तु स्वर्गादिफलेभ्यः परं अवाप्तव्यं किञ्चिदस्तीति ता एव श्रुतयः उद्बोधयन्ति। 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति', 'विष्णोर्यत् परमं पदम्'; 'आनन्दो ब्रह्मेति व्यजानात्' इत्यादयः। कर्मणोऽनिवार्यता, तस्य आवश्यकत्वं, तत्राऽपि कर्मयोगः, तेन निर्लिप्तता, तस्मात् वासनाछेदः, चित्तनिर्मलीकरणं, तदनन्तरमात्मसाक्षात्कारः, तत् क्षणमेव विना प्रयत्नं कर्मणो नाशः अथवा कर्मनिर्हरणमिति व्यवस्था—

ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा।

इत्यत्र कर्मयोगावस्थायामनुष्ठेयस्य कर्मणो भस्मसात्वं न विवक्षितम्। कर्मयोग-जनितचित्तनैर्मल्यलाभात् परं यत् वासनारूपेण कर्माऽनुवर्तते तदेव भस्मसात् भवति ज्ञानयोगेन। ज्ञानयोग इति शब्देन ज्ञानेन कृतः जीवात्मपरमात्मनोर्योगः इत्यर्थः। वासनासहितस्य चित्तस्य नाशानन्तरं, पुनर्वासनायाः कर्मलेशस्य वा सम्बन्धप्रसङ्गाभावात् तावत् पर्यन्तं 'त्वं'पदार्थत्वेन परिगणितं वस्तु, 'तत्'-पदार्थ एवेति 'असि' शब्दवाच्यो योग एव तत्-त्वं-पदार्थौ युञ्जानः ज्ञानयोग इति व्यपदिश्यते। अत एव 'दुःखसंयोगवियोगं योगसंज्ञितम् इत्यत्र पुनरपि विरोधाभासभङ्ग्या वियोगस्य योगसंज्ञा दत्ता। दुःखेन संयोगः दुःखसंयोगः', अत्र सुखदुःखयोरुपलक्षणं दुःखम्। सुखस्यापि कर्मान्तरवासनाजनकत्वात् अनियतत्वात् बन्धकत्वाच्च आत्यन्तिकदुःखस्वरूपमेव। अतः सुखदुःखयोगात् वियोगो नाम भोक्तृत्वाभिमानत्यागः। यत्र यत्र कर्तृत्वाभिमानं तत्र तत्र भोक्तृत्वाभिमानमवश्यमन्वेति। तस्मात् कर्तृत्वभोक्तृत्वाभिमानयोस्त्यागः वियोगपदेन विवक्ष्यते। स त्यागश्च कर्मफलानासक्त्या एव भवति। अत्राऽपि अनासक्तिजन्यः चित्तनैर्मल्यजनकः कर्मयोग एव योगशब्देन व्यवह्रियते।

षष्ठाध्याये समाधियोगपरः योगशब्दः दृश्यते—

प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥
युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥

इत्यत्र अष्टाङ्गयोगाभ्यासक्रममुपवर्ण्य तदनन्तरं समाधिलक्षणं योगं वर्णयति । रजस्तमोवृत्तिशून्यत्वेऽपि सत्वधर्मज्ञाननिवर्तकज्ञानवत्वं समाध्यवस्थायां जायते । अत एव सुषुप्तिवैलक्ष्यण्यं समाधेः । सुषुप्तौ तदात्मना परिणामिनः मनसोऽभावः । समाधितो व्युत्थितस्य सुषुप्तेरुत्थितस्य चाऽयं भेदः यत् 'न किञ्चिदवेदिषम्' इति प्रतीतिः पूर्वस्य न सम्भवति; किन्त्वपरस्य सम्भवति । 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादौ त्वंपदार्थशोधकवाक्ये च पदार्थोपस्थिति-निमित्तोऽनुभवः समाधिदशाकालिक इत्यद्वैतिनः, तेषां मते 'योगिनम्' इति पदेन ब्रह्मैव सर्वमिति निश्चयवान् जीवन्मुक्तः स्थितप्रज्ञो व्यपदिश्यते । तादृशं योगिनमुत्तमं सुखमुपैति निरतिशयं सुखमुपगच्छति । इन्द्रियानपेक्षं विषयाजनितं सुखमुपैति । सुखतारतम्यं हि विषयतारतम्याधीनमेव । विषयोऽत्र नानन्दहेतुः । किन्तु अविषयः निरतिशय आत्मैवानन्दहेतुरिति निरतिशयत्वमस्य सुखस्य । सुखं ह्यत्र स्वयमुद्बुद्धं भवति, नत्वप्राप्तं प्राप्यते स्वप्रकाशात्मन एव सुखस्वरूप-त्वात् । अस्यैवार्थस्य उपसंहारार्थं द्वितीयः श्लोकः । तदर्थस्तु—एवं पूर्वोक्तप्रकारेण युञ्जन् समाधिमभ्यसन् विगतकल्मषः विगततमःप्रभावः, सुखेन अनायासेन ब्रह्मसंस्पर्शं ब्रह्मात्मस्वरूपं ब्रह्मैकरस्यं वा सुखमश्नुते प्राप्नोति इति । अत्र ब्रह्मभूतत्वं ब्रह्मणि स्थितिः । ब्रह्मभूतं ब्रह्मणि स्थितमित्यर्थ इति द्वैतिनः । स्वस्वरूपेणावस्थितमित्यर्थ इति श्रीमद्रामानुजः । श्रीमद्रामानुजो हि प्रायेण गीतायां ब्रह्मपदं शुद्धप्रत्यगात्मपरं मन्यते । एतन्मतेऽप्युत्तमसुखरूपत्वमेव आत्मस्वरूपस्येति सुखस्योपगमनम् । द्वितीयश्लोके ब्रह्मसंस्पर्शमिति पदं भगवत्वसंसर्गाभिव्यक्तमिति द्वैतिनां व्याख्या । श्रीमद्रामानुजमते शुद्धप्रत्यगात्माव-लोकनमिति विशेषः ।

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥
यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥

सर्वभूतस्थितं यो मां भजत्येकत्वमाश्रितः ।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥
आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥

समाधियोगप्रसङ्ग एव दृश्यमानेयं चतुश्लोकी योगयुक्तस्य वासुदेवेन सम्बन्धं विवृणुते। तत्र एकप्रकार एव योगी विवक्षितः उत भिन्नप्रकाराः इत्यत्र भाष्यकाराणां वैमत्यं दरीदृश्यते। तदत्रालोचयामः।

परवैराग्ययुक्तस्याप्यस्थितप्रज्ञस्य चतुर्विधां विपाकदशामाह चतुर्भिरेतैः श्लोकैरिति श्रीरामानुजाभिप्रायः। यतमानसंज्ञा, व्यतिरेकसंज्ञा, एकेन्द्रियसंज्ञा, वशीकारसंज्ञा इति विपाकदशाया भेदाः। यतमानसंज्ञायां दशायां बाह्येन्द्रियान् विषयेभ्यः प्रत्याहृत्य मनः आत्मनि स्थाप्यते। तदा हि मनः स्वमिव परानपि संविन्मात्रेण गृह्णाति; स्वस्थूलसूक्ष्मशरीरादीनामिव परस्थूलसूक्ष्मशरीराणामपि ग्रहणं न सम्भवति मनसः। तथा चात्मानं सर्वभूतस्थं संविन्मात्ररूपं, सर्वभूतानि स्वात्मस्वरूपं च सर्वत्र संविन्मात्रतया समरूपमीक्षते। सर्वान् जीवान् शरीराण्यपि तादात्म्येन औपाधिकभेदवत्तया व्यवहारदशायां प्रतीयमानान्, प्रत्यगात्मस्वरूपमात्रेण अहमिति समदृष्ट्या पश्यतीति भावः। द्वितीयायां व्यतिरेकसंज्ञायां विपाकदशायां न केवलं जीवात्मनामेव परस्परं साम्यदर्शनं, किन्तु चिद्रूपतया जीवेश्वरयोरपि साम्यदर्शनं सम्भवति। द्वितीयेन श्लोकेन विशदयतीदम्। यो मां सर्वत्र चिद्रूपेण पश्यति सर्वं च मयि चिद्रूपेण पश्यति तस्य योगिनो विषये जीवात्मपरमात्मनोः स्वस्वरूपेणापृथक्सिद्धतया प्रतिभानं विशदं भवति। तस्याहं स्वरूपेण न प्रणश्यामि स च मे न स्वरूपेण प्रणश्यति।

एकेन्द्रियसंज्ञाख्यायां तृतीयदशायामात्मानमन्तर्यामिरूपेण सर्वत्र एकरूपेण स्थितं जानाति। सर्वथा वर्तमानोऽपि सः योगी यत्किमपि कुर्वन् न दोषभाग्भवति। वशीकारसंज्ञाख्यां तुरीयां दशां 'आत्मौपम्येनेत्यादिना' वर्णयति परगतसुखदुःखादिसमं स्वगतसुखदुःखादिदर्शनमिति भावः। तथा आत्मसुखदुःखादावपि न सुखयति न वा दुःख्यति। सर्वत्र सुखं दुःखं वा न स्तः; आत्मौपम्येन समं पश्यति। स योगी परमो मतः। परवैराग्यपराकाष्ठां प्राप्त इति भावः।

सर्वेषां जीवात्मनां ज्ञानैकाकारतया पूर्वोक्तेन प्रकारेण साम्यदर्शनात् सुखं दुःखं वा व्यतिरेकविधया स्वयं मन्यते स्वसुखदुःखत्वेनेति व्याख्या नैव समीचीना। 'यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते' इति वाक्यादेव तत्स्पष्टम्। 'आत्मौपम्येन' इत्यस्य स्वयमिति पदेनान्वये अन्यतरपदस्य वैय्यर्थ्यं भवति। अत एव 'आत्मौपम्यमिति' पदं समदर्शने हेतुतया श्रीरामानुजेन व्याख्यातम्।

द्वैतिनस्तु उत्तमाधिकारिणां ध्येयस्वरूपनिरूपणं प्रथमश्लोकेन, ध्यानफलं द्वितीयश्लोकेन, तस्य स्पष्टीकरणं तृतीयेन, साम्यदर्शनस्य प्रकारान्तरनिरूपणं तुरीयश्लोकेन च कृतमिति वदन्ति। तत्र आत्मपदस्य परमात्मपरत्वं बहुजीवात्मपरत्वं च द्वैतविशिष्टाद्वैतमतयोः सम्मतमिति अभिप्रेत्य, सर्वव्यापकत्वेन सर्वत्रावस्थितं परमात्मानं, तन्नियम्यत्वेन सर्वाणि भूतानि परमात्मस्थानि तन्नियम्यानि ब्रह्मादितृणपर्यन्तानि योगयुक्तात्मा पश्यतीति व्याख्यास्यन्ति। अत्र भागवतादिप्रमाणमपि दर्शयन्ति।[1]

यद्यप्यत्र 'समदर्शनः' इति पदं विनाप्युक्तार्थलाभः सिद्ध्यति, तथापि न परस्पराध्यासेनात्रोभयत्रोभयदर्शनं किन्त्वेकत्र व्यापकत्वेन अपरत्र साम्यदर्शनेन परस्परत्र परस्परस्य स्थितिरिति स्पष्टीकरणार्थं 'समदर्शन' इति पदम्। तथा च 'सर्वं खल्विदं ब्रह्मे'त्यादौ गौणवृत्त्यैव सिंहो माणवक इत्यादाविव अभेदव्यपदेशः।

तर्हि द्वितीयश्लोकस्य वैय्यर्थ्यमिति चेत् प्रथमश्लोकार्थमनूद्य तथा ध्यायिनः फलमेवाह इति तदाशयः।

एवं मां सर्वभूतस्थं सर्वं च मत्स्थं पश्यतोऽहं मोक्षसुखप्रदः। स च मद्भक्त एव स्यात् इति द्वितीयश्लोकार्थः।

तृतीयश्लोकोऽपि प्रथमश्लोकार्थस्य स्पष्टीकरणम्। प्रथमश्लोके सर्वभूतेषु साम्यदर्शनं भगवन्नियम्यत्वेन प्रतिपादितम्।

---

१. आत्मानं सर्वभूतेषु भगवन्तमवस्थितम्।
अपश्यत्सर्वभूतानि भगवत्यपि चात्मनि ।। श्री० भा०, ३.२४. २६. इत्यत्र आत्मपदं भगवत्पदसमानाधिकरणं पठ्यते।
'समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्' इति गीतावाक्यमप्यत्र उद्धरन्ति।

तुरीयस्तु श्लोकः सर्वत्र भगवदनुवर्तिषु आत्मौपम्येन स्वस्यैव सुखं दुःखं च मन्यते इति भगवदनुवृत्तिविषयतया समदर्शनं प्रतिपादयति । अत्र 'सर्वत्र' इति पदं भगवदनुवर्तिमात्रपरतया सङ्कुचितं मन्तव्यम् ।

भगवत्पादाः तदनुयायिनश्च योगफलं ब्रह्मात्मैकत्वदर्शनमिति प्रथमश्लोकेन निरूपितमिति मन्यन्ते । तत् फलं ब्रह्मसाक्षात्कार इति द्वितीयश्लोकेन, तत्फलं जीवन्मुक्तिरिति तृतीयश्लोकेन च वर्णितमिति व्याख्यायन्ते । तस्य पापाचरणं परपीडनादि वा परमात्मसाक्षात्कारप्रतिबन्धकं न सम्भावितमिति तुरीयश्लोकव्याख्यां कुर्वन्ति । 'योगयुक्तात्मा' इति पदेन योगबलेन सर्वत्र एकरूपतया निर्विशेषं ब्रह्म पश्यन् जीवात्मनामपि सर्वेषामैक्यं पश्यति इति व्याचक्षते । असंप्रज्ञातसमाधिबलेन तत्वतः तत्पदलक्ष्यार्थज्ञानं त्वंपदलक्ष्यार्थज्ञानं उभयमपि भवतीति प्रथमश्लोकार्थः । द्वितीयश्लोकेन तत्वमसीति महावाक्यार्थज्ञानं तत्वं पदार्थज्ञानाधीनं प्रतिपाद्यते । तत्वसाक्षात्कारफलं मोक्षं प्रतिपादयति तृतीयश्लोकः । 'सर्वत्र समदर्शनः' इत्यत्र 'सम'पदं निर्दोषं ब्रह्म एव, 'निर्दोषं हि समं ब्रह्म' इति भगवतैव परिभाषितत्वात् ।

विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ।।

इति गीतां प्रत्यभिज्ञापयति 'सर्वत्र समदर्शन' इति प्रयोगः । तत्रैव अत्राऽपि ब्रह्मदर्शनमेव 'समदर्शनपदेन' विवक्षितम् ।

व्याख्यानानामेतेषां पर्यालोचनेन इदमेव स्पष्टं भवति यत् समाधियोगस्य अधिकारिविषये अनुष्ठेयविषये वा विप्रतिपत्तिर्नास्ति भाष्यकाराणाम् । किन्तु तत्फलनिरूपणे स्वस्वराद्धान्तानुगुणाः विप्रतिपत्तयः नूनं सन्ति । ब्रह्मात्मैकत्वदर्शनं, ब्रह्मसाक्षात्कारः, जीवन्मुक्तिर्वा समाधिफलरूपेण भगवत्पादीयाः स्वीकुर्वन्ति । तां दशामारूढः परमात्मसाक्षात्कारप्रतिबन्धकाभ्यां स्वगतपरगतसुखदुःखाभ्यां न पीड्यत इति 'न गुरुणाऽपि विचाल्यते' इत्यनेन अन्वेति । तेनैव कारणेन, उपरिवक्ष्यमाणा योगभ्रष्टदशा जीवन्मुक्तिदशा यावत् सम्भवितुं शक्यते न तु तुरीयावस्थायाम् । मतान्तरेषु ब्रह्मात्मैक्यसाक्षात्कारस्य अनभ्युपगमात् यस्यां कस्यामपि दशायां योगात् चलितमानसो भवितुं शक्यते ।

प्रायशः अध्यायेऽस्मिन् योगशब्दः ब्रह्मपरमात्मैक्यपर इति शङ्करभगवत्पादीयाः, कर्मयोगपर इति श्रीरामानुजानुयायिनः, जीवपरमात्मनोः नियाम्यनियामकसम्बन्ध इति द्वैतिनश्च अभिप्रयन्ति ।

'मद्योगमाश्रितः', 'मयि चानन्ययोगेन', 'अनन्येनैव योगेन' इत्यादिस्थलेषु प्रायशः द्वादशाध्याये भक्तियोगपर्यायत्वेन योगशब्दः प्रयुक्तो दृश्यते। कर्मयोगानुष्ठानेन निर्मलं चित्तं विषयाभिमुखं न धावति वासनानाशात्। तादृशं चित्तं यथा भगवल्लग्नं भवति तदा भक्तियोगः। भक्तिशब्दस्यैव संलग्नता, अभिनिवेशः, अनन्यव्यापृतत्वं, स्वस्वामिसम्बन्धः निष्कारणासक्तिः निर्व्याजं प्रेम इत्याद्यर्थाः। चित्तस्य भगवदुन्मुखत्वं नाम विषयान्तरेष्वप्रसक्तत्वात् गत्यन्तराभावात् ईश्वरमुपसर्पतीति नार्थः। किन्तु विषयवासनाछेदात् निर्मलं यत् चित्तं तस्य भगवदुपसर्पणमेव स्वभावः। तत्र सुखजनकेषु विषयेष्वपि सुखदत्वं चिदानन्दस्य ब्रह्मणः स्फूर्तिरेवेति अद्वैतिनां भगवद्भक्तियोगे नास्ति विचारभेदः। तथैव रामानुजीयानां मते शेषिभोग्यत्वात् शेषस्य, शेषादुपनिवृत्तं चित्तं शेषिन्यवतिष्ठते यतः तत्रैव परमप्रेमास्पदत्वं प्रपद्यत्वं च। द्वैतिमते जीवानां जडानां सर्वेषामपि नियामकत्वेन ईश्वरे अवस्थिते सति तदनुग्रहैकलभ्यत्वात् आनन्दस्य, विषयेभ्यः सुखस्य प्रत्याशा वृथैवेति ततः उपनिवृत्तं चित्तं नियन्तरि सर्वशक्तौ भगवति संलग्नं भवतीति न तत् चित्रम्।

एवं कर्मयोगभक्तियोगसमाधियोगैः परे वस्तुनि स्थिरीकृतमपि मनः कदाचित् विक्षोभं भजते। तदानीं सः योगभ्रष्टो भवति। एवं योगस्य उच्चं स्थानमधिरूढोऽपि यथा भ्रष्टो भवति तदा पुनः विषयवासना सुखदुःखे पुण्यपापे इत्यादिबन्धकसाधनैः परिवेष्टितस्य तावत्पर्यन्तमतिप्रयासेन सम्पादितानां कर्मयोगादीनां सर्वतो नाशः भवेत् वा इत्यर्जुनस्य शङ्का उदेति। यदि बहुप्रयाससाध्यानां कर्मभक्तिसमाधियोगानां एकेनैव स्खलनेन नाशः स्यात् तर्हि प्रयत्नो वृथा भवति। कदा तादृशो भ्रंशः भविष्यतीति न केनाप्यूहितुं शक्यते। जन्मजन्मेभ्यः कृतः प्रयासः क्षणमात्रेण नष्टः स्यात्। ऐहिकानामपि सुखानां त्यागो व्यर्थः स्यात्। तत्रैव भगवान् सकलप्राणिप्रोत्साहकं निराशावादध्वंसकं स्वं सिद्धान्तं प्रकटयति।—'नहि कल्याणकृत् कश्चित् दुर्गतिं तात गच्छति' इति। 'योगभ्रष्टः' इत्यत्र यः योगशब्दः प्रयुक्तः सः कर्मयोगभक्तियोगसमाधियोगान् समुच्चयेनैव व्यपदिशति। कथमिति चेत् अनासक्तिविशिष्टः कर्मयोगः, भगवत्यात्मनि वा मनसः संलग्नतात्मको भक्तियोगः, इन्द्रियाणां मनसश्च विक्षेपं विना आत्मनि स्थिरीकरणरूपः समाधियोग इति त्रयोऽपि परमपुरुषार्थस्य मोक्षस्य साक्षात् परम्परया वा हेतुभूता इति सर्वे वैदिकमतानुयायिनः स्वीकुर्वन्ति। अतः त्रिविधेषु योगेषु यं कमप्यनुतिष्ठमानः पुरुषः मोक्षाख्यस्य परमकल्याणस्य कृद्भवतीति हेतोः सर्वेऽपि ते कल्याणकृतः। ते कदापि दुर्गतिं दुःखोन्मुखीं गतिं न गच्छन्तीति भगवद्वचनस्य तात्पर्यम्।

# षष्ठः परिच्छेदः

## क्षेत्रक्षेत्रज्ञविचारः

सप्तमाध्याये ईश्वरस्य प्रकृतिद्वयं निर्दिष्टम् ।[1] तत्राद्या अपरा प्रकृतिः संसारहेतुभूता यस्या अष्टभेदास्तत्रैव निरूपिताः ।[2] सा च सत्वरजस्तमो गुणात्मिका । इममेव क्षेत्रमिति व्यपदिश्यते त्रयोदशाध्याये । अन्या परा प्रकृतिः जीवभावमापन्नस्य ईश्वरस्यैव स्वरूपभूता क्षेत्रज्ञशब्दवाच्या ।[3] 'जन्माद्यस्य यतः' इति ब्रह्मसूत्रनिर्दिष्टं जगत्सृष्टिस्थितिलयादिहेतुत्वमीश्वरस्य आभ्यां प्रकृतिभ्यामेव सिद्ध्यति । तत्र त्रिगुणात्मिका अपरा प्रकृतिः कार्यकारणरूपेण परिणता देहेन्द्रियाद्याकारतां प्राप्य पुरुषस्य भोगार्थं क्षेत्ररूपेण देहरूपेण वर्तते । 'क्षतत्राणात् क्षयात् क्षरणात् क्षेत्रवद्वा अस्मिन् कर्मफलनिर्वृत्तेः क्षेत्रम्'[4] इति भगवत्पादः क्षेत्रपदं व्युत्पादयति । अपक्षयादिविकारयुक्तत्वात् क्षेत्रम् । अथवा यथा क्षेत्रे बीजमुप्तं फलति तद्वत् कर्मबीजानां प्ररोहक्षेत्रं फल-

---

१. अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ।।
गी०, ७. ५.

२. भूमिरापोऽनलो वायुः खं मनोबुद्धिरेव च ।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ।।
सैव, ७. ४.

३. ब्र० सू०, १. १. १.

४. गी०, १३. १. शं० भा०

निष्पादनभूमिरिति हेतोः पञ्चभूतसंघातरूपोऽयं देह एव क्षेत्रमित्युच्यते।[1] एतत्क्षेत्रं स्वाभाविकज्ञानेन उपदेशजन्यज्ञानेन वा आपादतलमस्तकम् इन्द्रियैस्सह यो वेत्ति स क्षेत्रज्ञ इति व्यपदिश्यते। क्षेत्रक्षेत्रज्ञयोः पृथक् ज्ञानं येषां ते तद्विदः। तं क्षेत्रज्ञं वदन्ति। अर्थात् क्षेत्रज्ञः चेतनभूतः ईश्वरः, देहे अहं ममेत्यभिमानवान्। कर्मेन्द्रियज्ञानेन्द्रियमनसां सङ्घातरूपे क्षेत्रे 'अहम्' इत्यभिमानः, तदवयवेषु इन्द्रियादिषु पृथक्तया 'मम' इत्यभिमानः, एवं क्षेत्रज्ञस्य द्विविधोऽभिमानः। अत्र 'कृषीवलवत् फलभोक्तृत्वात्' इति ब्रह्मानन्दगिरिव्याख्यायां उदाहरणत्वेन गृहीतस्य कृषीवलस्य स्वत्वाभिमाने सत्यपि अहमेव क्षेत्रमित्यभिमानाभावात् उभयविधाभिमानयुक्तस्य प्रकृतस्य क्षेत्रज्ञस्य पूर्णोपमा न भवति।

'क्षिणोत्यात्मानमविद्यया त्रायते च विद्यया' इति नीलकण्ठव्याख्यादृतः क्षेत्रशब्दार्थः, देहस्य कर्मपरम्पराजनकत्वं तदुदितसंसारानन्त्यहेतुत्वं, तथैव निष्कामकर्मानुष्ठानोपयोगित्वं तद्द्वारा स्थितप्रज्ञत्वप्राप्तिकारणत्वं च युगपदुद्बोधयति। 'एतद्यो वेत्ति' इत्यत्र 'वेत्ति' इति पदं भासयतीति व्याख्यातम्। ज्ञानेन विषयीकरोतीति भगवत्पादाभिमता व्याख्या फलतः भासनपरेव। अहं ममेत्यभिमानदशायामात्मनः तादात्म्यं भासयति, सम्यक् ज्ञानावाप्तौ अभिमानविच्छित्तौ आत्मभिन्नं भोगायतनमिति तमवगच्छति। संसारावस्थायां भोगायतनत्वेन, ज्ञानावस्थायां प्रारब्धोपचयोपयुक्तं कर्मक्षेत्रमिति च वेत्तीत्याशयः।

श्रीमद्रामानुजस्तु चिदचिदोर्देहात्मनोः स्वरूपं; देहस्य वास्तवं ज्ञानं; देहातिरिक्तात्मस्वरूपस्य प्रापणोपायं; विमुक्तात्मनो लक्षणम्; आत्मनः प्रकृतिसम्बन्धे कारणम्; एतत्सर्वं ज्ञात्वा विवेकेन अनुसन्धानस्य क्रमः इत्येते त्रयोदशाध्याये प्रतिपादिता इति वदन्ति। तन्मते भोगायतनं देहः; तत्र भोक्ता जीवः, जीवो देहश्च यद्यपि भिन्नौ तथापि अज्ञानिनः 'अहं देवः, अहं मनुष्यः, अहं स्थूलः, अहं कृशः' इति देहधर्मान् जीवे आरोप्य देहमेव आत्मवद्व्यवहरन्ति। ये देहात्मनोः पार्थक्यं जानन्ति ते तं देहं क्षेत्रमिति, तत्र 'अहं ममे'

---

१. इदं शरीरं कौन्तेय क्षेत्रमित्याभिधीयते।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः॥

गी०, १३. १.

त्यभिमानयुक्तमात्मानं क्षेत्रज्ञ इति च कथयन्ति। जीवात्मनः स्वरूपं तावदिन्द्रियैर्न वेद्यम्। मनसैव ध्यानयोगेन अवगन्तुं शक्यते। मनसा तद्याथात्म्यावगमने अशक्ताः अज्ञानिनः देह एव आत्मेति व्यवहरन्ति। घटादिबाह्यवस्तुग्रहणवेलायां 'मनुष्योऽहं घटमिदं जानामि' इति यज्ज्ञानमुत्पद्यते तत्र देहात्मनोः सामानाधिकरण्येन वेदितृत्वं, घटादेर्वेद्यत्वं च। 'इदं मम शरीर'मित्यत्र घटादिवत् शरीरमपि वेद्यतया अनुभूयत इति हेतोः देहव्यतिरिक्तः वेत्ता आत्मा क्षेत्रज्ञसंज्ञः इति सिद्ध्यति। प्रकृतेः सान्निध्यादेव घटादिविषयग्रहणवेलायां स्वात्मानं वेत्तारमपि वेद्यवेदितृत्वाभेदेन पश्यति। 'गृह्यमाणयोरेव क्षीरनीरद्रव्ययोः न्यूनाधिकसमभावेन संसर्गविशेषेषु क्षीरत्वेन नीरत्वेन वा उपलम्भः' यथा भवति तद्वदेवेति वेदान्तदेशिकः सदृष्टान्तमिदं निरूपयति।

श्रीमन्मध्वमते आदितः द्वादशाध्यायेषु प्रपञ्चिता विषया एव त्रयोदशे सङ्ग्रहेण निरूपिताः। 'इदं शरीर'मित्यनेन शरीरहेतुभूताः अव्यक्तमहदहङ्काराद्याः विवक्षिताः ये क्षेत्रशब्देन व्यपदिश्यन्ते। क्षेत्रज्ञस्य ईश्वरस्यायतनभूता इति तेषां क्षेत्रसंज्ञा। अव्यक्तादीन् यो वेत्ति तेषामन्तर्यामी भगवानेव क्षेत्रज्ञ इति विद्वांसः—क्षेत्रं क्षेत्रज्ञं च सम्यक् जानन्तः वदन्तीति भावः।

'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत' इति जीवेश्वरयोरभेद एव प्रतिपादित इति शाङ्करं मतम्। क्षेत्ररूपोपाधिभेदेन नानात्वेन व्यवह्रियमाणः क्षेत्रज्ञ एव ईश्वर इति निरूप्य क्षेत्रक्षेत्रज्ञव्यतिरिक्तं किञ्चिन्नावशिष्यत इति हेतोः तयोर्ज्ञानमेव परमं ज्ञानमिति 'क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम' इति उत्तरार्धेन वदति। श्लोकेऽस्मिन् अद्वैतसिद्धान्तानुगुणान् शब्दप्रयोगान् विचारयामः—

'क्षेत्रज्ञं चापि' इत्यत्र एकवचनप्रयोगः, 'सर्वक्षेत्रेषु' इति बहुवचनप्रयोगश्च, उपाधिभेदेन नैकतया दृश्यमानः क्षेत्रज्ञ एक एवेति निरूपयतः। सर्वक्षेत्रेषु अन्तर्यामिरूपेण अवस्थितमेकं 'क्षेत्रज्ञं चापि मां विद्धि' इति जीवेश्वरयोरभेदः प्रतिपाद्यते। 'मां क्षेत्रज्ञं विद्धि' इत्यनुक्त्वा 'क्षेत्रज्ञं मां विद्धि' इति वदता भगवता क्षेत्रज्ञानात् क्षेत्रज्ञज्ञानं, क्षेत्रज्ञज्ञानात् तदभिन्नपरमात्मज्ञानं च क्रमेण विवक्षितमिति ज्ञायते। क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत् तदेव भगवदभिमतं परमं ज्ञानमिति तदतिरिक्तं ततोऽप्युत्तमं ज्ञेयं वस्तु नास्तीति प्रतिपादनात् क्षेत्रज्ञभिन्नमीश्वरतत्वं नास्तीत्युक्तं भवति। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा या उपनिषत्सु कृता सैवाऽत्र विवक्षितेति सिद्ध्यति। 'क्षेत्रज्ञं चापि मां विद्धि'

इति वचनात्, 'यत्तत् ज्ञानं मतं मम' इति तस्य ज्ञानस्य स्तुत्या च, क्षेत्रज्ञेश्वरयोरभेदज्ञानमेव परमं ज्ञानमिति फलति। अनेन ईश्वरस्यैव बन्धमोक्षप्रसंगः सम्भाव्यते; ईश्वरस्य संसारबन्धोऽनुपपन्नः इति चेत्, ईश्वरस्य क्षेत्रज्ञस्य कदापि वस्तुतः संसारबन्धो न विवक्ष्यते; अविद्यया ईश्वरे संसारादिकमारोपितं दृश्यते यथा जलमरीचिकायां जलं, रज्जौ सर्पञ्चारोपितं दृश्येते इति समाधानम्। स्वभावतः संसारादिबन्धयुक्तं किमपि वस्तु कदाऽपि तद्बन्धात् मोक्षं न प्राप्येत इति रहस्यम्। यदि मोक्षो भवति तर्हि, यतो मोक्षः तन्न तस्य स्वभाव इत्यूह्यम्। औष्ण्यमग्नेः स्वभावः; अत एव औष्ण्यं विना कदाप्यग्निर्नोपलभ्यते। जलस्य स्वभावः शैत्यम्; अग्निसंयोगात् यदौष्ण्यं जले भवति तदागन्तुकमपोह्यं च।[1] स्वभावसिद्धं शैत्यमेव पुनः प्राप्नोति जलम्। अतो ज्ञायते यदागन्तुकादेव मोक्षः न तु स्वभावसिद्धात्। अतः ईश्वरे प्रपञ्चमारोपितमविद्यारूपेण अज्ञानेन। यदि चन्द्रमण्डलद्वयं कश्चित्पश्यति तर्हि तस्य कारणं न चन्द्रमण्डले अन्वेष्टव्यं किन्तु द्रष्टुः नयनगतदोष एवेति तत्र उपाधिभूतस्य रोगस्य निरासाय यत्नः कर्तव्यः। उपाधिनिरासेन चन्द्रे यद् द्वित्वमनुभूतं तदारोपितमेव न वास्तवमिति ज्ञायते। अनेन ज्ञानेन चन्द्रे न कश्चिन्नूत्नो गुणविशेषः समुपलब्धः, नाप्यस्य प्राक् द्वित्वसमुपलम्भदशायां चन्द्रस्य कापि हानिः। एवमेव आत्मनो बन्धमोक्षप्रसंगः नैवोपपद्यते यतस्तस्य किञ्चिद्धेयं किञ्चिदुपादेयं वा नास्ति। अविक्रिये तस्मिन्नारोपिता विक्रिया वस्तुतः उपाधिगता एव इति यद् ज्ञानं तदेव परमं ज्ञानम् इति मे मतमिति भगवत्पादीया व्याख्या। इदमेवाष्टादशाध्याये—

सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे।
समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा॥

इति श्लोकभाष्ये विस्तरेण प्रपञ्चितम्।[2]

---

१. उष्णत्वमग्न्यातपसम्प्रयोगात्।
शैत्यं हि यत्सा प्रकृतिर्जलस्य॥ रघुवंशः, ५. ५४.

२. तस्मादविद्याध्यारोपणनिराकरणमात्रं ब्रह्मणि कर्तव्यं न तु ब्रह्मज्ञाने यत्नः अत्यन्तप्रसिद्धत्वात्। अविद्याकल्पितनामरूपविशेषाकारापहृतबुद्धित्वात् अत्यन्तप्रसिद्धं सुविज्ञेयमासन्नतरम् आत्मभूतमपि अप्रसिद्धं दुर्विज्ञेयमतिदूरमन्यद् इव च प्रतिभाति अविवेकिनाम्।
शा० भा० गी०, १८. ५०.

श्रीमद्रामानुजस्तु पूर्वश्लोके क्षेत्रक्षेत्रज्ञौ अचिज्जीववाचकावित्युक्त्वा तमेव जीवं 'मां विद्धि' इत्यस्मिन् श्लोके यदुक्तं तस्य व्याख्यामेवं करोति—पृथिव्यादिपञ्चभूतसङ्घातरूपं क्षेत्रं, तत्र अहं ममेत्यभिमानवान् क्षेत्रज्ञः इत्युभावपि भगवच्छरीरतया समानौ विद्धि इति। अत्र 'क्षेत्रज्ञं चापि' इत्यपि शब्देन 'क्षेत्रं चापि मां विद्धि', 'क्षेत्रज्ञं चापि मां विद्धि' इत्युभयोः भगवच्छरीरत्वं व्याख्यातं भवतीत्याशयः। 'मां विद्धि' इत्यस्य मद्विशेषणतैक-स्वभावतया विद्धीति व्याचष्टे। जीवः भगवतः शरीरं, भगवान् जीवस्य शरीरी; मम इति स्थाने मामिति प्रयोगः कृतः। कथं स्वशरीरस्यैव स्वतादात्म्येन भगवता निर्देशः कृत इति चेत्, यद्यपि जीवेश्वरौ भिन्नौ तथापि जीवः परमात्मानं विना, परमात्मा जीवं विना कदाऽपि न भवतः; अतस्तयोरपृथक्-सिद्धत्वम्; अनेन अपृथक्सिद्धत्वसम्बन्धेन शरीरिशरीरसम्बन्धेन विशेषणविशेष्यसम्बन्धेन च 'जीवं मम शरीरं विद्धि' इति वक्तव्ये 'मामेव जीवं विद्धि' इति उक्तं भगवता। अनेनैव कारणेन क्षेत्रं चापि मां विद्धि इति भगवता उक्तम्। अतः क्षेत्रक्षेत्रज्ञयोः स्वरूपभेदं ज्ञानं तयोरात्मत्वेन नियामकत्वेन स्वामित्वेन च परमात्मा ताभ्यामतिरिक्तं इति च यज्ज्ञानं तदेव ज्ञानं मम ईश्वरस्य मतमिति श्रीमद्रामानुजः।

श्रीमदानन्दतीर्थस्तु, जीवः अल्पक्षेत्रज्ञः, अतस्तस्य क्षेत्रज्ञत्वव्यपदेश एव नोपपद्यते, अतः अव्यक्तमहदहङ्कारादिसर्वक्षेत्रेषु क्षेत्रज्ञरूपेणावस्थितं मां विद्धीति व्याचष्टे। अस्मिन् मते क्षेत्रज्ञ इति एकवचनप्रयोगः अद्वैतमत इव उपकरोति, यद्यपि भिन्नदिशा।

श्रीवल्लभाचार्यमतेऽपि यथा मध्वमते, क्षेत्रज्ञः सर्वेश्वर एव। 'क्षेत्रज्ञं चापि मां विद्धि' इत्यत्र, क्षेत्रिभावेन संसृष्टोऽपि, स्वस्य क्षेत्राद्विविक्ततामजानताऽपि येन केनचिज्जीवेन मदनुग्रहविशेषात् भगवान् सर्वक्षेत्रेषु क्षेत्रज्ञ इति अवगम्यते चेत्, तं तादृशं जीवविशेषं क्षेत्रक्षेत्रज्ञज्ञानवन्तं 'मां विद्धि' मदंशत्वात् मद्रूपं पुरुषं जानीहि इति भावः। अत्र 'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्' इति व्याससूत्रं प्रमाणत्वेन स्वीकृत्य भगवद्गुणसारवत्त्वं क्षेत्रज्ञे विद्धि इति व्याचष्टे।

क्षेत्रक्षेत्रज्ञयोर्लक्षणं बहुभिः पुरा गीतमिति सङ्क्षेपेणात्र उच्यत इति प्रतिज्ञाय षष्ठसप्तमश्लोकाभ्यां क्षेत्रस्वरूपं विवृणोति।

आकाशादिपञ्चमहाभूतानि, अहङ्कारः, महत्तत्वं, माया, ज्ञानेन्द्रिय-कर्मेन्द्रियभेदाः, मनः, शब्दस्पर्शरूपरसगन्धाः, इच्छाद्वेषौ, सुखदुःखे, शरीरं,

ज्ञानाकारा मनोवृत्तिः, धैर्यमित्यादिविकारैरन्वितं क्षेत्रमित्युच्यते। भगवत्पादः भूतानां महाभूतत्वनिर्देशः सकलप्रकारेषु विकारेषु तेषां व्याप्तिदर्शनादित्यभिप्रेति। अनेन सूक्ष्मभूता एव विवक्षिताः न तु स्थूलभूताः। भूतानामुत्पत्तिरहंकार-तत्वात्, तच्च महत्तत्वात्। निश्चयात्मिका बुद्धिरेव महत् यदव्यक्तात् जातम्। प्रत्यक्षागोचरत्वात् अव्यक्तमिति अस्यैव संज्ञा। ईश्वरशक्तिः माया इति नामान्तराणि। एवमुपर्युक्ता अष्टधा विभक्ता प्रकृतिः सङ्कल्पविकल्पात्मकेन मनसा सह पञ्चज्ञानेन्द्रियैः पञ्चकर्मेन्द्रियैः पञ्चतन्मात्राभिस्साकं चतुर्विंशतितत्वात्मकं क्षेत्रमित्युच्यते। इच्छाद्वेषसुखदुःखसङ्घातचेतनाधृतयः आत्मगुणा इति तार्किका मन्यन्ते। किन्तु 'कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव' इति[1] श्रुत्यनुसारेण ते मनोगुणा एवेति भगवदभिमतम्। 'इदं शरीरं कौन्तेय' इति वदता भगवता महाभूतादारभ्य धैर्यपर्यन्तानां प्रत्येकं क्षेत्रत्वनिर्देशात् तेषां सङ्घातरूपो देहोऽपि क्षेत्रमिति व्यपदेशमर्हति, किन्तु शरीरमेव क्षेत्रमिति न वक्तुं शक्यते, शरीरमपि क्षेत्रमित्येव वक्तव्यमिति निष्कर्षः।

श्रीमद्रामानुजमते महाभूतादयः न क्षेत्रसंज्ञकाः। पञ्चमहाभूतैः अहङ्कारमहत्प्रकृतियुक्तैः सम्भूतोऽयं देह इति हेतोः क्षेत्राङ्गभूतानां तेषामौप-चारिक एव क्षेत्रत्वव्यवहार इति तन्मतम्। दशेन्द्रियाणि मनः विषयाश्चेति द्वादशतत्वानि महाभूताहङ्कारमहत्प्रकृतय इति चत्वारि इत्येवं षोडशतत्वानि क्षेत्रमाश्रित्य वर्तन्ते। इच्छाद्वेषसुखदुःखरूपाश्चत्वारः क्षेत्रजन्या आत्मगुणा एव न तु देहगुणाः। किन्तु शरीरसम्बद्धस्यात्मनः गुणा इति शरीरे उपचर्यन्ते। अत एव 'पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते' इति श्लोके पुरुषगुणत्वेन वर्णिताः। 'चेतनाधृतिः' इति समस्तपदत्वेन व्युत्पादयति। चेतनस्य आधारभूत इति व्याख्यानम्। पञ्चमहाभूतादीनां तत्वानां सङ्घातरूपोऽयं देहः स्वर्गादीनां मोक्षस्य च प्राप्त्यै चेतनस्य आत्मनः आधारो भवतीति व्याख्यातम्। एतदाधारद्वारा आत्मा सुखदुःखादीन् अनुभवति। एवं क्षेत्रं प्रकृत्यादिभूमि-पर्यन्तानाम् अष्टद्रव्याणां सङ्घातेनोत्पन्नं, इन्द्रियाणामाश्रयः, इच्छादीना-मुद्भवस्थानं, सुखदुःखादीनामनुभवस्याधारभूतमिति सङ्क्षेपेण तत्स्वरूपं व्याख्यातम्।

---

१. बृ० उ०, १.५.३

श्रीमन्मध्वमते सर्वत्र श्रीमद्रामानुजोक्तप्रकारेणैव व्याख्यातम् । किन्त्वियान् विशेषः, यदिच्छादयो विकाराः क्षेत्रस्यैव न त्वात्मनः ।

एवं क्षेत्रस्वरूपं निर्वर्ण्य क्षेत्रज्ञस्वरूपज्ञानाय साधनभूतानां शमदमादीनां निरूपणं कृत्वा क्षेत्रज्ञलक्षणं प्रस्तौति द्वादशे श्लोके—

ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ।
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ।। इति ।।[1]

पूर्वं तावत् क्षेत्रक्षेत्रज्ञयोर्ज्ञानं, तत्रापि क्षेत्रज्ञेश्वरयोरभेदज्ञानम्, अवयवावयविज्ञानं, अङ्गाङ्गिभावज्ञानं, स्वस्वामिभावज्ञानं वा 'मम मतं ज्ञान'मिति प्रशंसन्, तयोर्मध्ये अमृतत्वहेतुर्ज्ञानं किमिति पृथक्तया वदत्यस्मिन् श्लोके । यस्मात् ज्ञानादमृतत्वमश्नुते तद्व्यतिरिक्तं सर्वमपराविद्यान्तर्गतं न संसारात्यन्तमोक्षाय प्रभवतीति सूचयति ।

अत्र अनादिशब्देनैव ब्रह्मणोऽनादित्वे सिद्धे, 'अनादिमत्' इति मत्प्रत्ययस्य प्रयोजनाभावेऽपि छान्दसत्वान्न दोषायेति श्रीधरस्वामी । अथवा अनादि-मत्-परम् इति पदच्छेदेन सगुणाकारस्य विष्णोः मत्-मम, परं-निर्गुणं ब्रह्मतत्वं तदेव यत् सन्नोच्यते नाप्यसदुच्यते इति योजनया व्याख्येयमिति श्रीधरस्वामी पक्षान्तरमपि वदति ।

भगवत्पादः उपर्युक्तां रीतिं भङ्ग्यन्तरेण प्रतिपाद्य एवमपि केचिदत्र पदयोजनां कुर्वन्ति, किन्तु तन्न समीचीनमिति प्रतिपादयति । अनया योजनया वासुदेवाख्योऽहं यस्य उत्तमशक्तित्वेनाऽस्मि तद्ब्रह्म इति सिद्ध्यति । अनेन शक्तियुक्तं सगुणमेव ब्रह्म अत्र निरूपितं भवति न तु निर्गुणं ब्रह्म । एवं सति 'न सत्तन्नासदुच्यते' इति निर्गुणवाचकयोः विशेषणयोरस्थाने प्रयोगः । अतः मत्प्रत्ययः अनादिशब्दघटित एव, श्लोकपूरणार्थं एवेति न तस्य विशेषोऽर्थः कल्पनीयः । ज्ञेयं यद्ब्रह्म तन्न सत् नाप्यसदिति श्लोकेनानेन उच्यते । कथमिद-

---

१. गी, १३. १२.

मुभयविलक्षणं घटत इति चेत् अत्र श्रुतिवाक्यान्येव प्रमाणत्वेन सन्ति ।[1] एतेषु विशेषप्रतिषेधेन एव ब्रह्मतत्वस्य निर्देशः क्रियते । 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह'[2] इत्युक्तरीत्या वागादीनामगोचरत्वादेव साक्षान्निर्देशे अक्षमा श्रुतिः निषेधवाक्यैरेव[3] तस्य निरूपणे यत्नं करोति । यद्वस्तु प्रत्यक्षाद्यन्यतर-प्रमाणगोचरत्वादस्तीति व्यवह्रियते तत्सत् । यदस्तीति व्यवहर्तुं न शक्यते तदसत् । सर्वं वस्तु अस्तीति वा नास्तीति वा अन्यतरव्यवहारयोग्यमेव वर्तते । एतादृशी अस्तीति ज्ञानविषयता वा उत नास्तीति ज्ञानविषयता वा ब्रह्मणि, इति विचारः कर्तव्यः । यत इन्द्रियाणां विषयो न भवति अत एव उभयविध-व्यवहारयोग्यं तन्नेति सिद्धम् । कुत इति चेदुच्यते—यथा 'अयं घटः' इत्यस्य ज्ञानस्य घटः विषयः तथा 'अत्र घटो नास्तीति' प्रतीतेरपि घट एव विषयः । कदाप्यश्रुतमदृष्टमननुभूतं वस्तु नास्तीति व्यवहारयोग्यं न भवति । येषामिन्द्रियग्राह्यत्वं तेषामेव भावाभावौ वक्तं प्रसक्तिरस्ति । अतः ज्ञेयं ब्रह्म इन्द्रियागोचरत्वात् शब्दप्रमाणेनैव ज्ञातुं शक्यते । तत्रापि इतरव्यावृत्तिपरैर्निषे-धात्मकशब्दैरेव ज्ञेयम् । सति चैवं प्रमाणान्तरैरस्य अस्तित्वनास्तित्वव्यवहारस्य प्रसंग एव नास्ति । अत एव 'अन्यदेव तद्विदितादथोऽविदितादधि'[4] इत्युपनिषदुक्तिः ।

कस्यचिद्वस्तुनो निर्देशाय तन्निष्ठाः धर्मा उपकुर्वन्ति । जाति-क्रिया-गुण-सम्बन्धाः खलु प्रायशः वस्तुनिर्देशाय उपयुज्यन्ते । 'अयं गौः' इत्यादयः

---

१. 'स एष नेति नेत्यात्मागृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गो न हि सज्यतेऽसितो न व्यथते न रिष्यत्येतमु हैवैते न तरत इत्यतः
बृ० उ० ४. ४.२२

अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमः अवाटवनाकाशमसंग-मरसमगन्धमचक्षुष्कमश्रोत्रमवागमनः अतेजस्कमप्राणममुखममात्रमनन्तरम बाह्यं न तदश्नाति किञ्चन न तदश्नाति कश्चन ।'
बृ० उ०, ३. ३. ८

२. तै० उ० ब्रह्मानन्दवल्ली०, ४. १.

३. नेति नेत्यादिशास्त्रेभ्यः प्रपञ्चोपशमो द्वयः ।
अविज्ञातादिशास्त्राच्च नैव ज्ञेयो ह्यतोऽन्यथा ।।
उ० सा०, १८. ७१.

४. के० उ०, १. ३.

गोत्वजातिनिष्ठाः। 'अयं पाचकः, अयं मालाकारः' इत्यादयः पाचनादिक्रियानिष्ठाः। 'अयं पीतः, अयं वामनः' इत्यादयः पीतत्वादिगुणाश्रिताः। 'अयं धनी' इत्यादयः सम्बन्धनिष्ठाश्च व्यपदेशाः। प्रपञ्चगतमखिलं वस्तुजातम् एतेष्वन्यतरं धर्ममाश्रित्य व्यवह्रियते। किन्तु ब्रह्मतत्वनिर्देशाय जातिगुणक्रियासम्बन्धवाचकाः शब्दाः न प्रयुज्यन्ते श्रुत्या, किन्तु 'निष्क्रियं निष्कलं शान्त'[1]-मित्यादिशब्दा एव प्रयुज्यन्ते। अतः सदिति वा असदिति वा न निर्देष्टुं पार्यते। प्रकृतश्लोके अनादिमत् आद्यन्तहीनं परं ब्रह्मैव सदसद्विलक्षणं यत्क्षेत्रज्ञपदेन व्यपदिश्यत इति भगवत्पादसिद्धान्तः।

श्रीमद्रामानुजस्तु—ज्ञेयं यत् अमानित्वादिसाधनसम्पदा ज्ञेयं प्रत्यगात्मस्वरूपं यद् ज्ञात्वा अमृतमश्नुते—यत्स्वरूपज्ञानेन जननमरणादिप्रकृतिसम्बन्धान्मुक्तः शुद्धात्मस्वरूपं प्राप्नोति तत्—ज्ञेयत्वेन निर्दिष्टं मुक्तात्मस्वरूपम्, अनादि आद्यन्तहीनं (अनादित्वादेव अनन्तं 'न जायते म्रियते'[2] इत्यादिश्लोकोक्तरीत्या), मत्परं—मत्तः[3] परं मच्छरीरभूतं[4] मामुत्तमदैवत्वेनाश्रितं शेषभूतं प्रत्यगात्मस्वरूपं ब्रह्म-ब्रह्मत्वयुक्तं महत्प्रमाणयुक्तं पूर्णप्रमाणयुक्तं क्षेत्रज्ञतत्वमिति विद्धि इति व्याचष्टे। तस्य पूर्णस्य आत्मनः असङ्ख्येषु क्षेत्रेषु अपूर्णत्वेनावस्थितिः स्वभावकर्मणा। कर्मबन्धाद्विमुक्तः महत्वं पूर्णत्वं च प्राप्नोतीति हेतोः तस्य ब्रह्मपदवाच्यत्वम्।[5] प्रकृतिविमुक्तात्मस्वरूपमापन्नः जीवः न सत्पदवाच्यः नाप्यसत्पदवाच्यः। सदित्यस्य कार्यमित्यर्थः, असदित्यस्य कारणमिति च।

---

१. श्वे० उ०, ६. १९.

२. गी०, २. २०.

३. जीवस्वरूपं परमेश्वराद्भिन्नमिति
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्। जीवभूतां महाबाहो ययेदं धार्यते जगत्। (गी०, ७. ५) इति वाक्येन।

४. 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्य आत्मा शरीरम्' (बृ० उ०, ५. ७. २२); 'प्रधानक्षेत्रज्ञपतिः गुणेशः (श्वे० उ०, ६. १६) इत्यादिश्रुतिवाक्यैः ब्रह्मणः शरीरत्वं जीवानाम्।

५. स गुणान् समतीत्यैव ब्रह्मभूयाय कल्पते। गी०, १४. २६.
ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च॥ सैव, १४. २७.
ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति। सैव, १८. ५४.

मुक्तात्मभावमापन्नः जीवः न कार्यं नापि कारणम् । कार्यावस्थायां देवमनुष्यभावमासाद्य सदिति व्यवहार्यो भवति । कारणावस्थायां देवादिनामरूपाभावात् असत्पदवाच्यो भवति । 'असद्वा इदमग्र आसीत् ततो वै सदजायत' इति[1] श्रुत्या तन्निरूपितम् । अयं च कार्यकारणभावः कर्मस्वरूपाविद्यासम्बन्धेन उत्पद्यते न तु तत्स्वभावोऽयम् । अतः सदसत्सम्बन्धाभ्यामात्मस्वरूपं न व्यवह्रियते । 'असद्वा इदमग्र आसीत्' इति श्रुतिवाक्येन सर्वस्य कारणत्वे ब्रह्मणि प्रतिपादिते सति आत्मनः कारणावस्था कथमिति चेदुच्यते—सूक्ष्मचिदचिद्रूपौ जीवजडावपि ब्रह्मणः शरीरमिति हेतोः, तच्छरीरयुक्तस्य ब्रह्मणो यत्कार्यं तदेव शरीरस्य कार्यमिति व्यवहारं भजते । अत एव शरीरभूतौ क्षेत्रक्षेत्रज्ञौ कारणत्वेनोच्येते ।

द्वैतिमते प्राकृतदेहेन्द्रियाद्विमुक्तमादिमत् सादि, प्राकृतदेहेन्द्रियाद्ययुक्तमनादीति तदेव परमात्मतत्वं ज्ञेयम् । तच्च न सत्, अर्थात् कार्यरूपप्रपञ्चान्तर्गतं न भवति । नासच्च यतः कारणभूतेष्वव्यक्तादिषु अनन्तर्गतत्वात् । उभयोः कार्यकारणयोरन्यः परमात्मा सदिति वा असदिति वा वक्तुं न शक्यते । अथवा मूर्तामूर्ताभ्यामतीत इति तस्य सदसद्वाच्यत्वं नास्तीति व्याख्यातम् ।

अस्मिन् श्लोके प्रयुक्तौ सदसच्छब्दौ पूर्वं नवमाध्याये[2] एकादशाध्याये[3] च परमात्मनो विशेषणत्वेन प्रयुक्तौ । नवमाध्याये 'सदसच्चाऽहमर्जुन' इति भगवतोक्तम् । एकादशाध्याये 'त्वमक्षरं सदसत् तत्परं यत्' इति अर्जुनवाक्यम् ।

---

१. तै० उ०, ब्रह्मानन्दवल्ली, ७.

२. गी०, ९. १९. सद् यस्य यत्सम्बन्धितया विद्यमानं तद्विपरीतमसच्च एवाहमर्जुन । न पुनरत्यन्तमेवासद् भगवान् स्वयम् । कार्यकारणे वा सदसती—शां० भा०
'सद्यद्वर्तते, असद्यदतीतमनागतं च, सर्वावस्थावस्थितचिदचिद्वस्तुशरीरतया तत्तत्प्रकारोऽहमेवावस्थित इत्यर्थः । रा० भा०

३. गी०, ११. ३७. 'सद्विद्यमानम्, असच्च यत्र नास्तीति बुद्धिः, ते उपादानभूते सदसती यस्याक्षरस्य यद्द्वारेण सदसदित्युपचर्यते । परमार्थतस्तु सदसतोः परं तत् यदक्षरं वेदविदो वदन्ति तत्त्वमेव नान्यदित्यभिप्रायः' ।शां० भा०

अत्र प्रकृते श्लोके ब्रह्म सदसद्विलक्षणमिति चोक्तम् । अनयोरस्ति विरोधः । तयोः श्लोकयोर्व्याख्यावसरे नास्ति प्रकृतश्लोकेन विरोध इति भाष्यकर्तृभिर्विवेचितम् ।

सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ।।[१]

'सदसद्विलक्षणमिति कथमुच्यते ? यतः लोके सर्वे पदार्थाः अनयोरन्यतरस्मिन् अन्तर्गताः ।' 'ब्रह्मैवेदं सर्वम्', 'आत्मैवेदं सर्वम्'[२] इत्यादिश्रुतिषु सर्वमपि ब्रह्म इत्युक्तत्वात् सद्वा असद्वा भवितुमर्हति इति पूर्वश्लोकोत्थामाशङ्कां परिहर्तुमयं श्लोक इति श्रीधरस्वामी । 'परास्य शक्तिर्विविधैव श्रूयते'[३] इत्यादिभिः श्रुतिभिः परमात्मा अचिन्त्यशक्तियुक्त इति प्रसिद्धम् । तच्च ब्रह्म उपाधिभेदैः सदसत्पदाभ्यां व्यपदिश्यत इति तस्याभिप्रायः ।

भगवत्पादस्तु ब्रह्म सत्संज्ञाविषयं न भवति, अतः सद्व्यतिरिक्तायामसद्गोष्ठ्यां किमिति न परिगण्यत इति निरूपणाय अयं श्लोक इत्यभिप्रैति । सकलप्राणिनां देहेन्द्रियादिभिः कारणभूतैरुपाधिभिरेव सदिति व्यवहारः; त उपाधयः अध्यारोपिताः मिथ्याभूताः; तेषामुपाधीनां व्यपोहनेन शुद्धब्रह्मतत्वमवबोधयत्ययं श्लोक इति वदति ।

श्रीमद्रामानुजमते मुक्तात्मनः सर्वशक्तत्वं करचरणाद्यवयवाधीनं न इति वक्तुमयं श्लोकः । करचरणाद्यवयवसद्भावे तैर्निर्वर्त्यं सर्वं कार्यं यादृशं निर्वृत्तं भवति तादृशमेव, प्रकृतिविमुक्तात्मस्वरूपमापन्नो जीवः तैरवयवैर्विनाऽपि निर्वर्तयितुं प्रभवति । 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः'[४] इति श्रुत्या तादृशी शक्तिः परमात्मनः खलु विवक्षिता ? कथं सा जीवस्येति चेत् प्रकृतिविमुक्तात्मनः जीवस्य परमात्मना परमं साम्यं श्रुत्यन्तरेणैवोक्तम् ।

---

१. बृ० उ०, २. ५-१.
२. छा० उ०, ७. २५. २.
३. श्वे० उ०, ६. ८.
४. श्वे० उ०, ३. १९.

यथा 'निरञ्जनः परमं साम्यमुपैति'[१] इति । 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः'[२] इति गीतावाक्येनाऽपि इदमेवोच्यते ।

श्लोकोऽयं परमात्मनः महिमावर्णनाय प्रस्तुत इति श्रीमदानन्दतीर्थमतम् । प्रत्यवयवं तस्य अवयवान्तराणां सर्वेषां शक्तिरस्ति । प्रतीन्द्रियं विषयग्रहणपाटवं, कार्यक्षमता च सर्वेष्विन्द्रियेषु भवति इत्यभिप्रायः । अथवा, सर्वेषु लोकेषु प्रतिलोकं शिरोऽक्षिमुखाद्यवयवैः सर्वत्र व्याप्य तिष्ठतीति भावः ।

तदेव ब्रह्मतत्वं श्लोकचतुष्टयेन वर्णयति ।[३] सर्वेन्द्रियगुणाभासमित्यत्र सर्वेन्द्रियाणां विषयाकारवृत्तिषु तत्तद्विषयाकारेण भासमानम्, अथवा इन्द्रियाणि गुणान् तत्तद्विषयांश्च प्रकाशयन्तमित्यर्थः । भगवत्पादः गुणाभासमित्यस्य ज्ञानेन्द्रियकर्मेन्द्रियमनोबुद्धीनां चेष्टाभिः प्रवृत्तिमदिव परिदृश्यमानमिति व्याचष्टे । सर्वेन्द्रियैः विषयान् ज्ञातुं मुक्तात्मा प्रभवतीति श्रीमद्रामानुजः । श्रीमदानन्दतीर्थः सर्वेषामिन्द्रियाणां विषयाणां च प्रकाशकं ब्रह्मेति अनेनोक्तमिति वदति । सर्वेन्द्रियविवर्जितमित्यस्य यथाश्रुतमेव व्युत्पाद्य भगवत्पादः 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स श्रृणोत्यकर्णः'[४] इति श्रुत्या इन्द्रियवर्जितोऽपि ग्रहणचलनादिक्रियाः कथमिति शङ्कामुत्थाप्य तत्र उपाधिगताः क्रिया एव विवक्षिता न तु वस्तुतस्तस्य क्रियावत्वमिति भाषते । इन्द्रियैर्विनाऽपि सर्वविषयज्ञाने सक्षम इति श्रीमद्रामानुजव्याख्या ।

---

१. मु० उ०, ३. १. ३.

२. गी०, १४. २.

३. सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥
बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥
अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तत् ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥
ज्योतिषामपि तज्ज्योतिः तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥
सैव, १३. १४-१७

४. श्वे० उ०, ३. १९.

'दूरस्थं चान्तिके च तत्' इत्यस्य 'तदेजति तन्नैजति तद्दूरे तद्वन्तिके'[1] इति ईशोपनिषदुक्तरीत्या ध्यानरहितानां दूरस्थमपि ध्यायतामन्तिकस्थमिति भगवत्पादव्याख्या । अमानित्वादिगुणरहितानामज्ञानिनां देहस्थोऽपि दूरस्थवदनुभूयते, अमानित्वादिसाधनसम्पन्नानां निकटस्थ इति श्रीमद्रामानुजः वदति । श्रीमन्मध्वमते सर्वत्र व्याप्तः दूरेऽपि अन्तिकेऽपि वर्तत इति ।

'अविभक्तं च भूतेषु विभक्तमिव च स्थितम्' इति कारणरूपेण अविभक्तमखण्डमपि कार्यरूपेण विभक्तमिव दृश्यमानमित्यर्थः । यथा सर्वभूतेषु आकाशः अखण्डाकारतया एकरूपेण वर्तते तद्वदविच्छिन्नतया सर्वत्र व्याप्तमिति देहाद्युपाधिभेदैः विच्छिन्नमिव परिदृश्यमानमिति भगवत्पादव्याख्यार्थः । देवमनुष्यादिविविधदेहेषु वर्तमानमपि समानरूपेणैव वर्तमानत्वात् ज्ञानिभिः सर्वत्र ज्ञानाकारतयैव दृश्यमानम्, अज्ञानिभिः देवमनुष्याद्यवस्थासु नानाप्रकारेण गृह्यमाणमिति श्रीमद्रामानुजो व्याचष्टे । सर्वभूतेष्वखण्डाकारतया वर्तमानमपि अज्ञानिभिः पृथक्तया खण्डितमिव दृश्यमानमिति, मध्वाभिमता व्याख्या ।

'भूतभर्तृ च भूतानां ग्रसिष्णु प्रभविष्णु च' इत्यत्र जगदुत्पत्तिस्थितिलयहेतुभूतमिति भगवत्पादः । पञ्चमहाभूतयुक्तस्य देहस्य धर्त्ता, भूतसम्बद्धानामन्नादीनां भोक्ता, भुक्तस्यान्नस्य स्वरूपान्तरप्राप्त्या वस्त्वन्तरोत्पत्तौ हेतुभूत इति श्रीमद्रामानुजाभिमतोऽर्थः । भगवत्पादीयरीत्या दृष्ट्यादिकर्तृत्वमपि रज्जौ सर्प इवारोपितमिति भावः । भूतानां सृष्टिस्थितिसंहारादयः जडस्य देहस्य प्रवृत्तयो न, किन्त्वात्मैव तेषां कारणमिति श्रीमद्रामानुजाशयः ।

एवमुपर्युक्तैः चतुर्भिः श्लोकैः ज्ञेयं ब्रह्मतत्वं तावत् इन्द्रियाणां विषयाकारवृत्तिषु तत्तद्विषयाकारेण भासमानम्; अथवा इन्द्रियाणां तेषां गुणानां, तत्तद्विषयाणां च प्रकाशकम्; इन्द्रियरहितं; कुत्राप्यनभिष्वक्तं; सर्वाधारभूतं; चराचाणामन्तर्बहिश्चावस्थितं; नामरूपाद्यविशिष्टत्वात् स्थावरत्वेन जङ्गमत्वेन वाऽनिर्देश्यं, ज्ञानिनां समीपस्थम् इत्यनुभूयमानम्; स्थावरजङ्गमादिषु भूतेष्वखण्डितमपि खण्डितमिवावस्थितं, सृष्टिस्थितिलयादिहेतुभूतं; सूर्यचन्द्रादीनामपि भासकम्, अविद्यासम्बन्धरहितं; ज्ञानाकारं; ज्ञानविषयं; सकलप्राणिहृत्सु विशेषेणावस्थितं यत्तदेव ब्रह्मेत्युच्यत इति विवक्षितम् ।

---

१. ई० उ०, ५.

एतत्सर्वं जीवपरत्वेनेति श्रीद्रामानुजमतम् ।

उत्तरश्लोकेन प्रकृतिपुरुषयोरनादित्वम् उत्पद्यमानानां गुणविकारादीनां प्रकृतिसम्भवत्वं च प्रतिपादयति—

प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् ॥[1]

इति । प्रकृतिः पुरुषश्च अनादी, उत्पत्तिर्धर्मिणौ न इति ज्ञेयौ । ये ह्युत्पन्ना भवन्ति ते सर्वे प्रकृतिसम्भवा एव । प्रकृतिरपि प्रकृत्यन्तरादुत्पन्नेति कथं नोच्यत इति चेत् ततः तस्यापि प्रकृत्यन्तरस्य उत्पत्तिहेतुरन्यदित्येवमनवस्थाप्रसङ्गः । अत एव प्रकृतिरनादिः ; पुरुषस्तु ब्रह्मणोंश इति सोऽप्यनादिः नित्यः ।

भगवत्पादस्तु—'भिन्ना प्रकृतिरष्टधा' इति माया नाम ईश्वरस्य अपरा प्रकृतिः, 'अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे परां जीवभूताम्' इति जीवः ईश्वरस्य परा प्रकृतिरिति चोक्तम् । मायाजीवाविमौ क्रमेण प्रकृतिपुरुषौ क्षेत्र-क्षेत्रज्ञाविति निर्वर्ण्य, तावनादी नित्याविति अस्मिन् अध्याये निरूपयितुमुपक्रमते श्लोकेनानेन इति व्याचष्टे । ईश्वरस्य नित्यत्वमनादित्वं च अभ्युपगच्छद्भिरस्माभिः तस्य परापरप्रकृतिभूतो मायाजीवावपि नित्यावनादी इत्यभ्युपगन्तव्यौ । आभ्यां प्रकृतिभ्यामेव सृष्टिस्थितिसंहारादिकारणत्वमीश्वरस्योच्यते । प्रकृतिपुरुष-योरनादित्वनित्यत्वे सिद्धे तयोरीशिता ईश्वरः सिद्ध्यति । ईशितव्याभावे ईश्वरः किमर्थमिति प्रश्नः उदेति । तयोरनादित्वं न चेत्, तयोरुत्पत्तेः प्राक् ईश्वरत्वस्याप्यभावप्रसङ्गः भवति, अनादिः कर्मबन्धश्च न सिद्ध्यति । यदि पूर्वकर्मानपेक्ष्यैव ईश्वरः कञ्चित् सुखिनं कञ्चिदपरं दुःखिनं च सृजति, तर्हि तस्य वैषम्यनैर्घृण्यादिदोषाः प्रसज्यन्ते, येन ईश्वरत्वस्यैव हानिः । अस्तु वैषम्यनै-र्घृण्यादिदोषवानीश्वरः इति चेत् बन्धस्यैव प्रसक्तिर्न स्यात्, बन्धाभावे मोक्षस्याप्यप्रसक्तिः, निवृत्तिमार्गपराणां श्रुतीनामानर्थक्यं चेत्यनर्थपरम्परा स्यात् अतः प्रकृतिपुरुषावनादी इति साधूक्तमिति भगवत्पादाशयः ।

श्रीमद्रामानुजस्तु परस्परसंम्बद्धौ प्रकृतिपुरुषावनादी इत्यवेहि, इच्छाद्वेषा-दयौ अन्धहेतवो विकाराः, अमानित्वादयो मोक्षहेतवो गुणाश्च प्रकृतिसम्भवा-विति च विद्धीति व्याचष्टे । अनादिः प्रकृतिः अनादिना पुरुषेण सम्बद्धा क्षेत्रा-

---

१. गी०, १३. २०.

कारेण परिणतिं प्राप्य, स्वाविकारभूतैरिच्छाद्वेषादिदोषैः पुरुषस्य बन्धहेतुर्भवति। अमानित्वादिगुणैश्च तस्य मुक्तये च भवति।

श्रीमदानन्दतीर्थः प्रकृतिशब्देन पञ्चविंशतितत्वानि विवक्षितानि, अथवा जगत्कारणभूतः परमात्मा निर्दिश्यत इति वदति। पुरुषस्तु जीवः, उभावप्येतौ अनादी विद्धि इति व्याचष्टे।

अनयोः प्रकृतिपुरुषयोः कारणत्वं कुत्रेति उत्तरश्लोकेन विवृणोति

कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते॥ इति॥[1]

जडा प्रकृतिः कथमुत्पादकत्वेन कारणं भवति? जडाऽपि प्रकृतिः जीवस्य अविद्याकार्येण अनादिकर्मरूपेण अदृष्टवशेन विकारं प्रापिता, देहेन्द्रियाद्याकारेण परिणमति। शिशुः (जीवः) यदा उत्पद्यते तत्समकालमेव तज्जीवनाधारभूतमचेतनं (जडं) स्तन्यं यथा उत्पद्यते तद्वत् जीवोपभोगार्थं बहवो जडपदार्था उत्पद्यन्ते। एवं नानाजडपदार्थानां रूपेण प्रकृतिरेव परिणमति। अत एव प्रकृतेः कारणत्वमुक्तम्। अस्तु नाम प्रकृतेः कारणत्वं, किन्तु जीवस्य हेतुत्वं कथम्? जीवस्वभावः न विकारमर्हति। इन्द्रियमनश्चिताहङ्कारादयः क्षुत्पिपासादयश्च न वस्तुतः जीवस्य सन्ति, अथ कथं तेषां भोक्तृत्वं तस्येति चेदुच्यते—जीवश्चिन्मात्रस्वरूपी। तस्य चित्, अर्थात् ज्ञानं न सुखदुःखादिजनकं विषयज्ञानम्। तथाऽपि स देहेन्द्रियादिद्वारा विषयान् जानाति। ते देहेन्द्रियादयः कर्मजन्याः। देहोत्पत्त्यनन्तरमेव सुखदुःखादिबोधकं विषयज्ञानं जीवेन प्राप्यते। इत्थं सुखादिविषयज्ञानं प्राप्यते पुरुषेणाऽनेनेति स सुखदुःखादिभोक्तृत्वे कारणमित्युच्यते। अयमत्र निष्कर्षः श्रीधरस्वामिव्याख्यासरणिमाश्रित्य पुरुषसान्निध्यात् प्रकृतेः कर्तृत्वं; प्रकृतिसंयोगात् पुरुषस्य भोक्तृत्वं च विवक्षितम् इति।

भगवत्पादोऽप्यत्र श्लोके मायायाः कर्तृत्वं प्रतिपादितमिति वदति। शरीरं कार्यं, तस्य कारणानि इन्द्रियमनोबुद्ध्यहंकाराः त्रयोदश। अथवा भूतानि विषयाश्च कार्यं, सत्वादयस्त्रयो गुणाः कारणम्। कारणरूपां प्रकृतिमाश्रिता गुणा अपि कारणत्वेन निर्दिष्टाः। अनयोः कार्यकारणयोरुभयोरपि

---

१. सैव, १३.२१.

मूलभूता माया, यतः सा कर्त्रीत्युच्यते । अथवा साङ्ख्यमतानुसारेण मनसा सह एकादशेन्द्रियाणि, पञ्च महाभूतानि, षोडशविकाराश्च कार्यरूपाः । प्रकृतिविकारभूताः बुद्ध्यहङ्कारतन्मात्राः सप्त कारणानि । एतेषां कारणं प्रकृतिरिति तस्याः कर्तृत्वनिर्देशः । सुखदुःखादीनां वेदिता जीवः, येन स सुखदुःखादीनां भोक्तेत्युच्यते । यदि प्रकृतिः देहेन्द्रियाद्याकारेण सुखादिरूपेण च न परिणमति तर्हि जीवस्य संसारबन्ध एव न स्यात् । जीवस्य संसरणाय प्रकृतिरेव कारणमिति तस्याः कर्तृत्वमुक्तम् । प्रकृतिकार्येषु देहेन्द्रियादिषु सुखदुःखादिषु च अहं ममेत्यहङ्काराभिमानद्वारा पुरुषः संसारहेतुर्भवति; अत एव तस्य भोक्तृत्वे हेतुरिति वर्णितिमिति भगवत्पादाशयः ।

श्रीमद्रामानुज एवं व्याचष्टे—कार्यं शरीरं; कारणं ज्ञानेन्द्रियकर्मेन्द्रियमनांसि । देहेन्द्रियादीनां व्यापारः कर्तृत्वमित्युच्यते । कार्यकारणयोः कर्तृत्वहेतुः प्रकृतिः । अत एव तयोः कर्तृत्वं प्रकृतेरित्युक्तम् । जीवस्य भोगसाधनभूताः क्रियाः, तस्यायतनभूतां, देहादिरूपं प्राप्तां प्रकृतिमाश्रित्य वर्तन्त इति क्रियाणां कर्ता प्रकृतिरित्युच्यते । पश्यति, वदति, चलतीति क्रियाणां जीवः कर्तेति लोके व्यवहारस्तु तासां क्रियाणां कारणभूतं देहमधिवसति जीवः, तत्रैवाध्युषितुं प्रयत्नवांश्च स इति हेतोः तस्य कर्तृत्वव्यवहारः । सुखदुःखाद्यनुभवानामाश्रयत्वात् तेषामनुभवानां हेतुर्जीव इत्युक्तमिति श्रीमद्रामानुजीया व्याख्यासरणिः ।

श्रीमन्मध्वमते कार्यं देहः, कारणमिन्द्रियाणि कर्तृत्वं क्रिया । प्रकृतिरेव प्रकारत्रयेण वर्तते । अतः त्रयाणामपि प्रकृतिहेतुरित्युच्यते । जीवः ज्ञप्तिस्वरूपः सुखादीन् जानातीति सुखदुःखाद्यनुभवानां हेतुत्वं तस्मिन्नुक्तम् । श्रीराघवेन्द्रः देहेन्द्रियाणां कर्तृत्वे कारणं चित्प्रकृतिरिति व्याचष्टे । जीवस्य प्रकृतिविकारभूतानां सुखादीनामनुभवाय पुरुषो भगवान् हेतुरुच्यते इति योजना । सर्वस्य कर्तुः भगवतः इन्द्रियादीनां कर्तृत्वे सत्यपि, यद्यपि भोगदातृत्वं देव्या (लक्ष्म्याः) अप्यस्ति तथापि सुखदुःखादिभोगदातृत्वे तस्या हेतुत्वम् अल्पमेव, कार्यकारणविषयेषु हेतुत्वमधिकं वर्तते । अत एव दैवी प्रकृतिः कार्यकारणकर्तृत्वे हेतुरित्युक्तम् । भगवतः देहेन्द्रियकर्तृत्वप्रवृत्तिरल्पा, भोगदातृत्वप्रवृत्तिरधिका, अत एव सुखदुःखहेतुः भगवान् पुरुष इत्युक्तम् । अथवा प्रकृतिशब्देन जडा प्रकृतिर्विवक्ष्यते पुरुषो जीवः, जडा प्रकृतिः देहेन्द्रियादिव्यापारे हेतुः, जीवः सुखदुःखाद्यनुभवे हेतुरिति द्वेधा व्याख्यातं श्रीराघवेन्द्रेण ।

कथं जीवः सुखादिभोक्ता भवति, कथं च संसरतीत्युत्तरश्लोकेनोक्तम्—

पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् ।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ।। इति ।।[1]

अत्र भगवत्पादः, कार्यकारणरूपामविद्यालक्षणां प्रकृतिम् अहं ममेत्यभिमन्यमानः पुरुषः सुखदुःखाद्यनुभोक्ता जीवः, प्रकृतिजान् सुखदुःखमोहाकारान् गुणान् प्राप्नोतीति व्याचष्टे । अहङ्कारममकारात्मको गुणसङ्गः अस्य भोक्तुर्जीवस्य देवमनुष्यपशुपक्ष्यादिजन्मग्रहणे कारणं भवति । एतद्विदित्वा अहङ्कारममकाराख्यात् गुणसङ्गाद्विमुच्य बन्धापनुतये प्रयतितव्यमिति भावः ।

श्रीमद्रामानुजस्तु—पूर्वजन्मकर्मभिः जीवः देवमनुष्यादिदेहेषु स्थितस्सन् तत्तद्देहद्वारा सत्वादिगुणजन्येषु सुखादिष्वासक्त्या तत्तद्देहान् सुखदुःखानि च भोक्तुं कारणभूतेषु पुण्यपापादिषु प्रवर्तते । तस्मात्स उत्तममध्यमाधमयोनिषु जनिं लब्ध्वा तत्तज्जन्मसु विहितान् सुखदुःखादीननुभवन्नेव पुनः पुनः कर्मसु प्रवर्तते तदनुरूपांश्च जन्मसुखदुःखादींश्च भूयो भूयः प्राप्नोति इति वदति । अमानित्वादिसाधनसम्पदं विना जननमरणचक्रान्न मोक्ष इति भावः ।

श्रीराघवेन्द्रः 'प्रकृतिस्थो हि' इत्यत्र 'हि' शब्देन देहजन्यान् सुखदुःखादीन् जीवः भुङ्क्ते इत्यस्य मिथ्यात्वं द्योत्यत इति व्याचष्टे ।

जीवशरीरयोः सम्बन्धवाचके उत्तरश्लोके,[2] उपद्रष्टा, अनुमन्ता, भर्ता, भोक्ता इत्यादिविशेषणानां स्वस्वमतानुरूपेण ब्रह्मभिन्नजीवात्मपरतया भगवत्पादेन, शेषिपरतया श्रीमद्रामानुजेन, स्वामिपरतया श्रीमदानन्दतीर्थेन च व्याख्यानं कृतम् । उपद्रष्टृत्वं साक्षिचैतन्यपरतया व्युत्पाद्य अनुमन्ता इव वर्तते न तु वस्तुतः देहेन्द्रियादिव्यापाराणामनुमन्ता स इति भगवत्पादाशयः । स्वसान्निध्यमात्रेण नियामक इव अनुमन्ता इव प्रतीयमान इत्यर्थः । श्रीमन्मध्वमते तु स्वयमुपदेशनिर्देशादेशादि ददातीति व्याख्यातम् । भोक्तृत्वं च सुखदुःखादिष्वसम्बद्धस्यापि देहेन्द्रियादिसम्बन्धेन सुखाद्यनुभोक्तेव प्रतीयमान इति शाङ्करं मतम् । साक्षाद्देहेन्द्रियादिप्रवृत्तिफलानां भोक्ता इति श्रीमद्रामानुजो व्याचष्टे । सर्वकर्मफलसारग्रहीतृत्वेन भोक्तृत्वमिति श्रीराघवेन्द्रः ।

---

१. सैव, १३. २२.

२. उपद्रष्टाऽनुमन्ता च भर्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ।।
सैव, १३. २३.

क्षेत्रक्षेत्रज्ञयोः सम्बन्धेनैव सर्वे स्थावरजङ्गमाः उत्पद्यन्त इति[1] सप्तविंशतितमे श्लोके विवृणोति। क्षेत्रक्षेत्रज्ञयोः सम्बन्धो नाम अविवेकजनिता देहादावात्मत्वबुद्धिरेव इति श्रीधरस्वामी। भगवत्पादोऽपि तयोरन्योन्यधर्माध्यास एव विवक्षित इति वदति। देहादिषु चलनादिव्यापाराः ये सन्ति ते आत्मव्यापारत्वेन अध्यस्य, आत्मगतान् ज्ञानादिधर्मान् 'अहं जानामि' इति देहे अध्यस्य प्रपञ्चं सृजति। रज्जौ सर्पधर्माध्यासेन यथा अविद्यमानं सर्पतज्जनितकम्पनवेपथुप्रभृतयो विकाराश्च तद्वदिति भावः।

श्रीराघवेन्द्रोऽत्र चित्प्रकृतेर्लक्ष्म्याः परमात्मनश्च सम्बन्धेन सकलजगत्सर्गः, तयोर्मध्ये परमात्मा मुख्यं कारणमिति व्याचष्टे।

सर्वत्र अन्तर्यामित्वेन वर्तमानस्यात्मनः निलयभूतेषु भूतेषु विनश्यत्स्वपि न काचित्क्षतिरिति उत्तरश्लोकेन निरूपयति—

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति॥[2]

अविद्यानिवर्तकमात्मस्वरूपज्ञानं यत्पूर्वमेव निरूपितं तदेव भङ्ग्यन्तरेण निरूपयतीति भगवत्पादः। देहेन्द्रियमनोबुद्ध्यव्यक्तेभ्यो विलक्षणमात्मतत्त्वं, परमेश्वर इति व्यपदिश्यते सर्वनियामकत्वात्। तदेव आब्रह्मस्थावरान्तं सर्वेषु भूतेषु समानं वर्तते। दृश्यमानाः पदार्थास्तेषां कारणभूतानि तत्वानि च विनाशशालीनि। तेषां विनाशेऽपि नाशरहितं यद्वर्तते तदेव परमेश्वरपदवाच्यम् अर्थात् मत्तः वासुदेवादभिन्नमिति भगवदाशयः। आत्मा एकः ईश्वरादभिन्न इति यो जानाति स एव विस्तरेण सम्पूर्णतया जानातीत्यर्थः। सम्यग्दर्शी चन्द्रमण्डलमेकमेव पश्यति। नेत्रातुरः कश्चित् चन्द्रद्वयं पश्यति। यद्यप्युभावपि पश्यतः, एकरूपेण यः पश्यति स एव सम्यक् पश्यति। एवमेव अविद्याविलसितेन एकमद्वितीयमात्मवस्तु नानात्वेन मूढाः पश्यन्ति।

---

१. यावत्संजायते किञ्चित् सत्वं स्थावरजंगमम्।
क्षेत्रक्षेत्रज्ञसंयोगात् तद्विद्धि भरतर्षभ॥
सैव. १३. २७.

२. सैव, १३. २८.

श्रीमद्रामानुजमते प्रकृतिपुरुषयोः सम्पर्कात् देवमनुष्यमृगपक्ष्यादिषु ज्ञानाकारतया समानरूपेणैव आत्मा वर्तत इति सम्यग्दर्शी पश्यति। परमात्मनो भिन्नमेवात्मतत्वं ज्ञानाकारतया समानमेव वर्तत इति, तच्च देहादीनां नाशेऽपि न विनश्यतीति ज्ञातव्यम्। तत्तद्देहेषु देहेन्द्रियमनोबुद्धिभ्यो विलक्षणः, तेषां स्वामी, अविनाशिस्वभाव इति।

श्रीराघवेन्द्रस्तु उत्कृष्टनिकृष्टजन्मवत्सु सकलप्राणिषु अचिन्त्यशक्तिः परमात्मा सर्वत्र समानाकारेण वर्तत इति यो जानाति, यश्च प्राणिगताः दोषाः परमात्मनि न सन्तीति च जानाति स यथार्थज्ञानी इति व्याचष्टे।

एवमेव कर्तृत्वमपि अध्यासजनितमिति उत्तरश्लोकेन वदति।[१] 'अहङ्कार-विमूढात्मा कर्ताऽहमिति मन्यते' इति यत्पूर्वमेवोक्तं तदेवात्र अनूद्यते। यथा प्रतिपादितं भगवत्पादेन उपदेशसाहस्र्याम्—

> योऽहङ्कर्तारमात्मानं तथा वेत्तारमेव च।
> वेत्ति नात्मज्ञ एवासौ योऽन्यथाज्ञः स आत्मवित्॥[२]

माया तु देहेन्द्रियाद्याकारतां प्राप्य कर्म करोति, आत्मा न कर्ता, स तु शुद्धो निर्गुण इति यदा जानाति तदा परमात्मज्ञानवान् भवतीति भगवत्पादः व्याचष्टे। प्रकृतिः कर्त्री, न आत्मा; प्रकृतिसम्बन्धेन शरीरभूतायां प्रकृत्यां स्वावस्थितत्या स अज्ञानवशात् सुखदुःखादयः आत्मना अनुभूयन्ते इति यो वेत्ति स सम्यग्ज्ञानं प्राप्तः इति भावः।

श्रीराघवेन्द्रस्तु 'प्रकृत्या' इत्यस्य ईश्वरणेति व्युत्पाद्य, जीवस्य पूर्वकर्मानु-रूपेण इह जन्मनि ईश्वरः कर्माणि कारयति; तं चेश्वरमुत्पत्तिकारणरहितं च यो जानाति स यथावत् जानातीति व्याचष्टे। पूर्वकर्मानुरोधेनैव जीवान् कर्मसु नियोजयतीति हेतोः ईश्वरे वैषम्यनैर्घृण्यादयः न सन्तीति भावः। अथवा प्रकृत्या-चित्प्रकृत्या, ईश्वरेण च जीवः कर्मसु नियोज्यते; जीवः न स्वतन्त्र इति यो जनाति स सम्यग्जानाति इति व्याचष्टे।

---

१. प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः।
यः पश्यति तथात्मानमकर्तारं स पश्यति॥

सैव, १३. ३०

२. उ० सा०, १४. २४

प्रकृतिः सृष्ट्यादिकं करोति नाऽऽत्मेति ज्ञानमेव ब्रह्मभावप्राप्त्यै उपकरोतीति वदति उत्तरश्लोकेन—

यदा भूतपृथग्भावं एकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म सम्पद्यते तदा ॥[१] इति

शास्त्राचार्योपदेशाभ्यां, दृश्यमानं वस्तुजातमात्मत्वेन यथा प्रत्यक्षीकरोति, 'आत्मैवेदं सर्वम्'[२] इत्युपनिषदुक्तरीत्या आत्माकारेण पश्यति; विस्तारं चाऽनुपश्यति—एवमेव सर्वप्रपञ्चमात्मनः उद्भूतमिति च पश्यति तदा ब्रह्मभावं प्राप्नोतीति भगवत्पादः व्याचष्टे ।

प्रकृतिपुरुषयोर्मध्ये प्रकृतिरेकैव देवमनुष्यादिरूपेण वर्तते; तत्तद्देहगताः देवत्वमनुष्यत्ववृद्ध्यपक्षयादिधर्माः देहाश्रिता धर्माः, न आत्मधर्मा इति च, प्रकृतिरूपाद्देहादेव पुत्रपौत्रादिरूपेण प्रपञ्चं विस्तारं प्राप्नोतीति च यदा जानाति तदा पूर्णज्ञानप्रकाशयुक्तं प्रकृतिविमुक्तमात्मस्वरूपं प्राप्तो भवतीति श्रीमद्रामानुजः ।

श्रीराघवेन्द्रस्तु श्लोकेऽस्मिन् 'एकस्थम्' इत्यस्य एकरूपतया वर्तमाने विष्णौ आश्रितमिति व्याचष्टे । 'तत एव च विस्तारम्' इत्यस्य तस्माद्विष्णोरेव पुनरुत्पद्यमानम्; अनुपश्यति—जीवेश्वरभेदं जीवानां परस्परभेदं च तारतम्येन यः पश्यति इति व्याचष्टे ।

देहस्थस्याप्यात्मनः अकर्तृत्वमनिर्लिप्तत्वं च वदत्युत्तरश्लोकेन—

अनादित्वान्निर्गुणत्वात् परमात्माऽयमव्ययः ।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥[२] इति

भगत्वपादः, कर्मणां कर्तृत्वं, सुखदुःखादीनां भोक्तृत्वं च कस्येति विचारयन् वदति—यदि जीवश्चेत् कर्ता भोक्ता च, तर्हि 'न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः'[३] इत्युक्तरीत्या ईश्वरे कर्तृत्वभोक्तृत्वाभावात् ईश्वरादन्य एव जीवः इति भवति । ततो अद्वैतत्वहानिः । ईश्वरः जीवादनन्यश्चेत् कर्मणां

---

१. गी०, १३. ३०
२. सैव, १३.३२
३. सैव, ५. १४

कर्ता तत्फलानां च भोक्ता ईश्वर इति वक्तव्यं भवति। तदा 'न करोति' 'न लिप्यते' इति कथं वक्तुं शक्यते ? अस्य समाधानं, 'स्वभावस्तु प्रवर्तते',[1] 'प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः यः पश्यति'[2] इत्यादिभिः पूर्वमेवोक्तम्। कर्तृत्वं भोक्तृत्वं च प्रकृतिगतमनाद्यविद्यावासनया आत्मन्यारोपितमिति।

श्री राघवेन्द्रस्तु, अविनाशी अयं परमात्मा देहसम्बन्धं प्राप्तोऽपि, अनादित्वात् सत्वादिगुणवर्जितत्वात् न करोति नापि चिन्तादिदुःखानुलिप्तो भवतीति व्याचष्टे। 'सर्वं खल्विदं ब्रह्म', 'पुरुष एवेदं सर्वम्' इत्यादीनां श्रुतीनां ब्रह्मप्रपञ्चयोरभेदबोधकत्वेन यद्वर्ण्यते तत्तु तासां श्रुतीनां तात्पर्यज्ञानाभावादेव इति भगवतेवोक्तमस्मिन् श्लोके इति वदति। कथमिति चेत्—अनादित्वात् देहेन सह संयोगे, तद्वियोगे वा कारणाभावात् निर्गुणत्वाच्च, शरीरस्थोऽपि न इति पदच्छेदेन, जीवत्वमेव न प्राप्नोति, कथं तस्य जडत्वमिति कैमुतिकन्यायेन भाषते। सः करोति-क्रियावान् वर्तते किन्तु न लिप्यते—कर्मफललिप्तो न भवति। अयं पुनर्जीवस्तु नाऽव्ययः, देहनाशे नश्यति, शरीरस्थः—देहाभिमानी, न अनादित्वात् देहसंयोगवियोगयोः कारणवानित्यतः, न परमात्मा, अत एव न करोति—न स्वतन्त्रः कर्ता, तथापि लिप्यते कर्मणा बद्धो भवतीत्येवं द्विविधया पदयोजनया परमात्मपरत्वेन जीवपरत्वेन च पृथक्तया व्याचष्टे। अकर्तृत्वेऽपि जीवस्य लिप्तता, कर्तृत्वेऽपि परमात्मनो निर्लिप्तता इति भावः।

अध्यायारम्भे क्षेत्रज्ञशब्दस्य क्षेत्रं भासयतीति यदुक्तं तदेव विशदयति—

यथा प्रकाशयत्येष कृत्स्नं लोकमिमं रविः।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥[3]

इति श्लोकेन। यथा एकोऽपि रविः समस्तं विश्वं स्वभासा प्रकाशयति तथैव क्षेत्रज्ञः कृत्स्नं क्षेत्रं प्रकाशयति। सूर्यप्रकाशः यस्मिन् वस्तुनि पतति तस्य वस्तुनो गुणाः सूर्यं यथा न लिम्पन्ति तद्वत् यस्मिन् देहे आत्मा प्रकाशमानो वर्तते तस्य देहस्य स्वभावैर्गुणैश्च स न लिप्तो भवति। एकः सूर्यः यथा कृत्स्नं

---

१. सैव, ५.१४
२. सैव, १३.२९
३. सैव, १३.३

प्रपञ्चं प्रकाशयति तद्वदेक एवात्मा सर्वाणि क्षेत्राणि प्रकाशमानो वर्तत इति उदाहरणबलेन आत्मैकत्वं द्योतितमिति भगवत्पादाशयः ।

श्रीमद्रामानुजस्तु कृत्स्नमिति पदं प्रकाशयतीत्यनेन सह संयोज्य पठन्, यस्मिन् क्षेत्रे जीवः विराजते तं कृत्स्नं पूर्णतया प्रकाशयतीति व्याचाष्टे । आपादतलमस्तकं शरीरं प्रकाशयति; प्रकाश्यमानेभ्यो वस्तुभ्यो यथा सूर्यः भिन्नः, तद्वत् क्षेत्रज्ञोऽपि प्रकाश्यमानात् क्षेत्राद् भिन्न इति व्याचष्टे ।

एवं क्षेत्रक्षेत्रज्ञभेदं त्रयोदशाध्याये प्रतिपाद्य, चतुर्दशे अचेतनप्रकृतेः कर्तृत्वं कथं भवति, क्षेत्रज्ञस्य तत्र किं स्थानमिति वदति––

मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
सम्भवः सर्वभूतानां ततो भवति भारत ।। इति श्लोकेन ।

कालदेशाद्यपरिच्छिन्ना सर्वत्र व्याप्ता प्रकृतिः भगवतो गर्भाधानयोग्या भवति । तस्यामीश्वरः गर्भमादधाति येन विरिञ्च्यादिप्रपञ्चस्योत्पत्तिः । सकलोत्पत्तिहेतुत्वात् प्रकृतेर्ब्रह्मपदव्यपदेश इति श्रीधरस्वामी । अविद्याकामकर्मादिभिस्सह प्रलयावस्थायामीश्वरे लीनं चिदाभासं क्षेत्रज्ञं सृष्टिकाले तस्य भोगायतनभूतेन प्रकृतिरूपेण क्षेत्रेण (देहेन) सह संयोजयति परमात्मा इति श्रीधरीया व्याख्या। भगवत्पादोऽपि भगवदधीना माया सकलभूतोत्पत्तिकारणं कार्यरूपात्प्रपञ्चात् बृहदिति तां ब्रह्मसंज्ञया व्यपदिशतीति व्याचष्टे । तस्यां सर्वजगत्सृष्टिहेतुभूतस्य हिरण्यगर्भस्य उत्पादनाय बीजावापः क्रियते भगवता । क्षेत्रक्षेत्रज्ञाख्येन शक्तिद्वयेन सम्पन्नः परमात्मा अविद्याकामकर्मसंवलितं क्षेत्रज्ञं क्षेत्रेण संयोजयतीत्यर्थः । हिरण्यगर्भात् सर्वप्राणिनामुत्पत्तिर्भवति ।

श्रीमद्रामानुजमते 'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च' इति अष्टविधा प्रकृतिः महदहङ्काराणां कारणभूता ब्रह्मपदेन व्यपदिश्यते । अत्र 'तस्माद् ब्रह्म नामरूपमन्नं च भवति' इति श्रुतिः प्रमाणम् । अचेतनायामस्यां प्रकृत्यां गर्भं दधाति इत्यनेन 'अपरेयमितस्त्वन्या' इत्युक्तदिशा चेतनसमूहरूपां परां प्रकृतिं सकलप्राणिबीजभूतां, अचेतनप्रकृत्या संयोजयामीत्यर्थः । भगवत्सङ्कल्पजन्योऽयं प्रकृतिद्वयसंयोगः आस्तम्बब्रह्मपर्यन्तं प्रपञ्चमुत्पादयति ।

श्रीमन्मध्वमते 'महत्, ब्रह्म' इति पदाभ्यां चित्प्रकृतिर्विवक्ष्यते । चित्प्रकृतिस्तु श्रीदेवी-भूदेवी-दुर्गा इति त्रयाणां समाहारवाचकः । तासु गर्भं दधामि

---

१. सैव १४.३

ताभ्यो सकलं प्रपञ्चमुत्पादयामीति तात्पर्यम् । चतुर्विंशतितत्वयुक्तान् जीवान् रेतःस्वरूपेण चित्प्रकृतौ निक्षिपामीति विवेकः ।

एवं क्षेत्रक्षेत्रज्ञयोर्मिथः सम्बन्धं तयोर्द्वारा प्रपञ्चसृष्टिं च निर्वर्ण्य, पञ्चदशाध्याये 'ममैवांशो जीवलोक' इत्यादिश्लोकद्वयेन प्रकृतिबन्धादनिर्मुक्तः जीवः प्रलयकालेऽपि कथं तद्बन्धं पालयति यतः पुनः संसरतीति वदति । मायासम्बद्धो जीवः, ईश्वरांशभूतोऽपि अनादिरपि मायान्तर्गतानि अर्थात् मायावशंगतानि इन्द्रियाणि मनसा सह कर्षति, तेषां वासनया सहैव उत्क्रामति देहात् । यथा कश्चित्पुरुषः दिने कार्याणि कुर्वन् रात्रौ सुषुप्त्यवस्थायां स्वकृतानां कर्मणां साक्षात् ज्ञप्तिं विना स्वपन्, तेषां वासनया सह सुषुप्तिं गत्वा, प्रातरुत्थाय पूर्वदिनकृतानां कर्मणामनुरूपं प्रवर्तते तद्वत् । मनः षष्ठानीन्द्रियाणि अचेतनप्रकृतिस्थानि सूक्ष्मरूपेण स्ववशे कर्षन् तेभ्यः साकमेव जीवो लयं याति । परमात्मनोंऽशभूतः जीवः तस्मादनन्यः, किन्त्वविद्योपाधिना संसारे स्वयं कर्ता भोक्ता इत्यभिमानयुक्तः चिरात् कालाद्वर्तते । तादृशः संसरञ्जीवः कथं भगवदंश इति चेत् आकाशस्थस्य सूर्यस्य जले प्रतिबिम्बं बिम्बभूतात् सूर्याद् भिन्नम् इव दृश्यते उपाधिभेदेन यथा, यथैव सर्वव्यापकमाकाशतत्वं घटे मठे वा संकुचितत्वेन घटाकाशः मठाकाश इति व्यपदेशं भजते, तथैव परमात्मनोऽनन्यः जीवः अविद्योपाधिना भिन्न इव दृश्यमानोऽपि उपाधिनिवृत्तौ अंशभूतः जीवः अंशिनि परमात्मनि निलीय न पुनः पार्थक्यं भजते। यावत्पर्यन्तं मनःषष्ठानामिन्द्रियाणां कर्षणं तावत्पर्यन्तं जीवस्य सोपाधिकत्वम् अत एव परमात्मनो अंश इति व्यवहारश्च । इदमेव शांकरं मतम् ।

श्रीमद्रामानुजस्तु अनादिः भगवदंशभूतः जीवः अनादिकर्मरूपया अविद्यया संवलितः मन्दीभूतज्ञानैश्वर्यादिगुणः पूर्वकर्मानुसारेण प्रकृतिसम्भूतदेवमनुष्यादि–शरीरेभ्यः मनसा सः षष्ठानीन्द्रियाणि विषयोपभोगार्थं कर्षति । अन्यः जीवः प्रकृतिविमुक्तः स्वस्वरूपमापन्नः अवतिष्ठते अर्थात् विमुक्तात्मस्वरूपो भवति इति मुक्तामुक्तयोः जीवयोः पार्थक्यं सूचयत्यनेन श्लोकेन ।

संसारोच्छित्त्यै ब्रह्मादिदेवतान्तराणामाश्रयेण न कोऽपि लाभः, नारायणाश्रयेणैव स सुशक इति बोधयितुमयं श्लोक इति श्रीराघवेन्द्रः । मनः षष्ठानामिन्द्रियाणां विषयेषु प्रवर्तनपर्यवसायि देवतान्तराणां कर्तृत्वं, न तु संसारोच्छित्त्यै ते प्रभवन्तीति तात्पर्यम् ।

परापराख्ये द्वे प्रकृती पूर्वमेव वर्णिते। प्रकृतिद्वयसंवलितश्चेतनोऽपि द्विप्रकार इति निरूप्य जीवेश्वरपरमात्मनोः भेदं निरूपयति त्रिभिः श्लोकैर्भगवान्—

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ इति ॥

प्रकृतिसंवलितस्य चेतनस्य द्वौ भेदौ स्तः; एकः क्षरः अपरस्त्वक्षरः। क्षराक्षराभ्यां व्यतिरिक्तः परमात्मा पुरुषोत्तमपदवाच्य इति वदति। क्षरपदेन सर्वाणि विनाशशालीनि भूतानि सूच्यन्ते। तस्मादन्यः मायोपाधिः परमेश्वरस्य मायाशक्तिरूपः यः कूट इव राशिरिव वर्तत इति हेतोः कूटस्थ इत्युच्यते। संसारबीजानामानन्त्यात् पर्वत इवाक्षुण्णः सः। सर्वासाम् अद्वैतपराणां व्याख्यानां परिशीलनेन इदं ज्ञायते यद्विक्षेपशक्त्याख्यया मायया सह वर्तमानः, तां मायामात्मवशे स्थापयित्वा 'अहं बीजप्रदः पिता' इत्युक्तरीत्या लोकसर्गप्रवर्तकः पुरुषः, न क्षरतीति अक्षरसंज्ञको भवति। आवरणाख्यया अविद्याशक्त्या युक्तः, अविद्याशक्त्यधीनः, अहं ममेति प्रकृतिगतगुणौघेष्वभिमानयुक्तः नानादेहाद्युपाधिभेदेन वर्तमानः उपाधिनाशेन नश्यतीति हेतोः क्षरसंज्ञया व्यपदिश्यते। 'कर्मक्षये सुप्तिप्रलयकैवल्यादौ उपाधिनाशमनु विनाशशीलो जीवो ब्रह्मप्रतिबिम्बभूतः जलार्कोपमः' इति नीलकण्ठव्याख्यायाम्।

अत्र श्रीमद्रामानुजः बद्धमुक्तजीवपरौ क्षराक्षरपदे इति व्याचष्टे। अचित्संसृष्टानि सर्वभूतानि क्षरणशीलानीति क्षरशब्देनोच्यते। तेषामसंख्येयत्वेऽपि एकवचननिर्देशः अचित्संसर्गरूपोपाधेः एकत्वात्। अचित्सम्बन्धविमुक्तः स्वरूपेणावस्थितो मुक्तात्मा अक्षरशब्देनोच्यते। अचिद्वियोगरूपोपाधेः एकत्वादत्राप्येकवचनम्। ते च मुक्तात्मानः भगवत्साम्यं गताः 'न स पुनरावर्तते', 'मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते', 'निरञ्जनः परमं साम्यमुपैति' इत्यादिवचनोक्तरीत्या न भूयः संसरति। 'उत्तमः पुरुषस्त्वन्यः' इत्यस्य देहाद्यविद्याकृतात्मभ्यः विलक्षणः, परमः, सर्वभूतानां प्रत्यक्चेतनः इति हेतोः परमात्मपदव्यपदिष्टः, क्षराक्षराभ्यां पुरुषाभ्यामुत्तम इति ज्ञायत इति भगवत्पादः। कार्यरूपोपाधिः क्षरः कारणरूपोपाधिरक्षरः, ताभ्यामन्यः निरुपाधिः पुरुषोत्तमः योऽसौ मायया ईश्वरत्वं प्राप्य लोकत्रयमाविश्य अन्तर्यामित्वेन विराजते।

बद्धमुक्ताभ्यां पुरुषाभ्यामन्यः पुरुषोत्तमः इति श्रीमद्रामानुजः। लोकत्रयमित्यस्य अचेतनं, चेतनं, मुक्तात्मानं चेति लोकत्रयमन्तर्यामित्वेन आत्मतया आविश्य तिष्ठतीति तात्पर्यम्।

एवं पुरुषोत्तमतत्वं यो जानाति स सर्वविद् भवति । असम्मूढः यो जानातीति योजनया 'अयमहमस्मि' इति पुरुषोत्तमं यो जानाति स सर्वात्मना सर्वं वेत्तीति भगवत्पाद उत्तरश्लोकं व्याचष्टे । सर्वात्मचित्ततया सर्वभूतस्थं मां भजति । अनेन सर्वत्र अखण्डाकारचैतन्यमात्माभिन्नं पश्यति नित्यनिरतिशयानन्दभावं भजते इति तात्पर्यम् ।

श्रीमद्रामानुजस्तु एवं व्याचष्टे—'यो मां पुरुषोत्तमं नाशरहितं, क्षराक्षरव्यतिरिक्तं, प्रपञ्चं व्याप्य स्थितं, प्रपञ्चस्य धर्त्तारमीश्वरं वेत्ति सः सर्वविद् अर्थात् मत्प्राप्त्युपायं सर्वं जानाति; सर्वभावेन भजति—येन येन प्रकारेण भजनीयोऽहं मां प्राप्तुं तेन तेन भावेन भजति इति ।

असम्मूढः इत्यस्य सर्वोत्तमत्वे मिथ्यात्वबुद्धिरहित इति श्रीराघवेन्द्रः व्याचष्टे ।

# सप्तमः परिच्छेदः

## मोक्षविचारः

आत्यन्तिकी दुःखनिवृत्तिरेव मोक्षः, यत्कृते सर्वेषां दर्शनानां[1] विशिष्य वेदान्तशास्त्रस्य प्रारम्भः। केवलं शास्त्रपरिचयेन मोक्षो न सिद्ध्यति,[2] किन्तु शास्त्राभ्यासजनितसंस्कारेण सह आचार्योपदेशबलेन निर्मलीकृतान्तःकरणे शमदमवैराग्यादिसाधनसम्पद्विशिष्टे अपरोक्षज्ञानानुभवो यदा भवति तदा दुःखनिवृत्तिरूपो मोक्ष इति सर्वैरभ्युपगतम्। भगवद्गीतायाः तुरीयाध्याये आत्मतत्वज्ञानिन एव आचार्यभूतास्तमुपदेष्टुं प्रभवन्तीति, तेभ्यस्तत्प्राप्त्युपाया अपि दर्शिता यथा—

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्वदर्शिनः ॥इति॥[3]

---

१. धर्मविशेषप्रसूतात् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्वज्ञानान्निःश्रेयसम् ॥
वैशेषिकसूत्रम्, १. १
दुःखत्रयाभिघातात् जिज्ञासा तदपघातके हेतौ। सांङ्ख्यकारिका, १. १

२. सत्येन लभ्यस्तपसा ह्येष आत्मा ।
सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् ॥ मु० उ० ३. १. ५
न गच्छति विना पानं व्याधिरौषधशब्दतः ।
विनापरोक्षानुभवं ब्रह्मशब्दैर्न मुच्यते ॥ वि० चू० ६४

३. गी०, ४.३४

पश्चात् 'सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि'[1] इति ज्ञानमात्रस्य मोक्ष-साधनत्वं च प्रतिपाद्यते। 'सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि';[2] 'वासुदेवः सर्वमिति',[3] 'एकस्थमनुपश्यति'[4] इत्यादिवाक्यैः ज्ञानस्वरूपं किमिति च तत्र तत्र निरूप्यते। ज्ञानानुभवप्रकारो यो वाक्यैरेतैर्दर्शितः तद्विषये व्याख्याभेदा मतभेदानुसारेण वर्तन्ते। मोक्षस्वरूपपराणां गीताश्लोकानां व्याख्याभेदानत्र विचारयामः।

द्वितीयाध्याये 'पदं गच्छन्त्यनामयम्'[5] इति कर्मफलत्यागेन अनामयं पदम् अर्थात् मोक्षः प्राप्यत इत्युक्तम्। सुखदुःखादिद्वन्द्वेषु समत्वबुद्धिमाश्रित्य कर्म-फलभूताभ्यां पुण्यपापाभ्यां निर्मुक्ताः, जननमरणदुःखाच्च विमुक्ताः दुःखलव-सम्बन्धरहितं मोक्षं प्राप्नुवन्तीत्याशयः। सुखदुःखेषु समत्वबुद्धिरेव परमात्म-ज्ञानाय भवतीति भगवत्पादः विवृणोति। 'कर्मजं फलं त्यक्त्वा' इत्यस्य कर्मज-फलत्यागः कर्मवासनात्यागश्चेति श्रीराघवेन्द्रो व्याचष्टे। जन्मबन्धविनि-र्मुक्तत्वं नाम जीवन्मुक्तिरिति[6] भगवत्पादमतम्। ज्ञानमार्गव्यतिरिक्ता ये कर्म-मार्गादयः तेभ्यः प्राप्यं स्वर्गादिसुखं यावत्पुण्यक्षयं तिष्ठति, ततः परं नश्यति; ज्ञानसाध्यं मोक्षसुखं तु शाश्वतमिति द्योतयितुम् 'अनामयम्' इति विशेषणम्। किन्तु श्रीमद्रामानुजभाष्यटीकायां वेदान्तदेशिकः 'अनामयं पदम्' इत्यस्य 'प्रकरणवशादत्र ब्रह्मपर्यन्तजीवस्वरूपं वा'[7] इति व्याख्यामप्यङ्गीकरोति। किन्तु उत्तरश्लोकसन्दर्भेन[8] अयं व्याख्याविकल्पः न युज्यते, यतस्तत्र 'श्रोतव्यस्य

---

१. सैव, ४.३६
२. सैव, ६.२९
३. सैव, ७.१९
४. सैव, १३.३०
५. कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः।
   जन्मबन्धबिनिर्मुक्ताः पदं गच्छन्त्यनामयम्॥
   सैव, २.५१
६. जीवन्त एव जन्मबन्धविनिर्मुक्ताः।
   शां० भा०, २.५१
७. ता० च०, पृ० ८०
८. यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति।
   तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च॥
   गी०, २.५२

श्रुतस्य च निर्वेदं गन्ताऽसि इति' ज्ञानसाधनभूते वेदान्तशास्त्रेऽपि वैराग्य-प्राप्तिर्विवक्ष्यते । मुक्तप्रायावस्था चेद्वेदान्तदेशिकदृष्ट्या पूर्वश्लोके विवक्षिता, तादृशस्य मुक्तप्रायस्य महावाक्यजन्यज्ञानस्यानपेक्षा नाभ्युपगन्तुं शक्यते । अतः कर्मबन्धविनिर्मुक्तिर्नाम मोक्ष एवेति फलति । कर्मफलेष्वनासक्तिरूपं वैराग्यं, मोक्षसाधनरूपम् इहैव प्राप्यम् इति हेतोः जीवन्मुक्तिपरा भगवत्पादीया व्याख्या युज्यते ।

तुरीयाध्याये 'उपदेक्ष्यन्ति ते ज्ञानम्'[1] इत्युक्त्वा ज्ञानस्वरूपं वदति— 'येन भूतान्यशेषाणि द्रक्ष्यस्यात्मन्यथो मयि'[2] इति । अखण्डाकारतया सर्व-भूतेष्वेकमेव आत्मतत्वं तच्च परमात्मनि, परमात्मनोऽभिन्नतया, येन ज्ञानेन पश्यति तदेव ज्ञानमिति अद्वैतिनां राद्धान्तः । श्लोकेऽस्मिन् 'आत्मनि' इति पदेन प्रत्यगात्मनि, 'अपि मयि' इत्यनेन वासुदेवे परमात्मनि च इमानि भूतानि वर्तन्त इति ज्ञानं विवक्षितमिति[3] भगवत्पादः व्याचष्टे । अशेषेषु भूतेषु क्षेत्रज्ञमात्मानं, तं क्षेत्रज्ञं च परमात्मनि द्रक्ष्यसीति तात्पर्यम् । अनेन जीवात्मैकत्वं, जीवब्रह्मैक्यं च प्रतिपादितं भवति अद्वैतमतरीत्या ।

श्रीमद्रामानुजमते देहादिष्वात्माभिमानः तज्जन्या ममताबुद्धिश्च येन ज्ञानेन नश्यति, येन च मोहनिवृत्या देवतिर्यङ्मनुष्याद्याकारेण वर्तमानं समस्तं भूतजातमात्मनि द्रक्ष्यसि, अर्थात् प्रकृतिविमुक्तात्मस्वरूपाः सर्वे निजात्म-स्वरूपसमानाः ज्ञानाकारतया वर्तन्त इति द्रक्ष्यसि, तदेव परमं ज्ञानं तत्व-दर्शिनः उपदेक्ष्यन्तीति विवेकः । 'आत्मनि द्रक्ष्यसि' इत्यस्य अखण्डाकारत्वेन द्रक्ष्यसीति नार्थः, किन्तु प्रकृतिविनिर्मुक्ताः जीवात्मानः परस्परेण समानाकारा इति द्रक्ष्यसीत्यर्थः । 'अथो मयि' इत्यस्य मत्साम्यावस्थां गता इत्यर्थः । 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः';[4] 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति'[5] इत्यादिश्रुतिस्मृतिवाक्यान्यत्र प्रमाणम् । सर्वे

———————

१. सैव, ४.३४
२. सैव, ४.३५
३. क्षेत्रज्ञेश्वरैकत्वं सर्वोपनिषत्प्रसिद्धं द्रक्ष्यसि ।
शां० भा०, ४.३५
४. गी०, १४.२
५. मु० उ०, ३.१.३१

जीवात्मानः प्रकृतिविमुक्तावस्थायां स्वरूपेण ज्ञानाकारतया मिथस्समानाः; तेषां परमात्मना च साम्यमेव न तारतम्यमिति निर्णयः ।

श्रीमन्मध्वमते ज्ञानप्राप्त्या सर्वभूतानि परमात्मनि, परमात्मानं चान्तर्यामित्वेन आत्मनि द्रक्ष्यसीति भावः । 'आत्मनि मयि' इति योजनया अन्तर्यामित्वेन वर्तमाने मयि ईश्वरे सर्वं प्रपञ्चं द्रक्ष्यसीति व्याख्यातम् ।

ज्ञानेन सर्वं पापमपोह्य कर्मबन्धाद्विमुच्यत इति तस्मिन्नेव तुरीयाध्याये ज्ञानप्रयोजनं कर्मनिर्हरणमेवेति श्लोकद्वयेन प्रतिपादयति ।[1] 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा' इत्यत्र प्रारब्धव्यतिरिक्तानां सर्वकर्मणां नाशो विवक्षित इति भगवत्पादीयाः द्वैतिनश्च । अनादिकालादनुवर्तमानाः कर्मसमूहा एव नश्यन्तीति श्रीमद्रामानुजमते प्रारब्धनाशोऽपि विवक्षित इव भाति । श्रीवेदान्तदेशिकः 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि'[2] इत्यादिवाक्यानामन्यपरत्वं स्वीकृत्य प्रायश्चित्तशास्त्राणामपि सार्थक्यं प्रारब्धकर्मणामपि नाश्यत्वाङ्गीकारेणैवेति भाषते । किन्तु 'ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति'[3] इति अनुपदमेव वदता भगवता 'अचिरेणे' ति पदप्रयोगेन ज्ञानप्राप्तिसमकाल एव मोक्षावाप्तिर्न विवक्षितेत्यूह्यम् । अन्तरा प्रारब्धकर्मानुभवकालस्य प्रतीक्ष्यमाणत्वात् जीवन्मुक्तावस्था अङ्गीकृतेव भाति ।

ज्ञानं च अज्ञानापोहनद्वारा परमात्मतत्वं प्रकाशयतीति पञ्चमाध्याये वर्णयति यथा—

---

१. अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।
सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ॥
गी०, ४.३६

यथैधांसि समिद्धोऽग्निः भस्मसात्कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥
सैव, ४.३७

२. सर्वकर्माणीति वचनात् विरोधित्वेन स्थितस्य सांसारिकपुण्यविशेषस्यापि निवर्तकत्वमवगतम् । नाभुक्तं क्षीयते कर्मेत्यादि त्वन्यपरम्, अन्यथा प्रायश्चित्तशास्त्राण्यपि कुप्येयुरिति भावः ।
ता० च०, पृ० १५८

३. गी०, ४.३९

ज्ञानेन च तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति यत्परम् ॥[1]

इति सूर्यप्रकाशो यथा वा अन्धकारं व्यपोह्य वस्तूनि प्रकाशयति तद्वदेव ब्रह्मज्ञानेन अज्ञाननाशः परमात्मतत्वप्रकाशनं च भवतीति अद्वैतिनां व्याख्या-सरणिः । श्रीमद्रामानुजस्तु 'येषां नाशितमात्मनाम्' इति पाठान्तरं स्वीकृत्य येषां प्रकृतिविमुक्तानामात्मनाम् अनादिकालात्प्रवाहरूपेण अनुवर्तमानं कर्म-समूहरूपमज्ञानम् आत्मस्वरूपविषयकज्ञानेन विनाशितं भवति, तेषां तत्परि-पूर्णं स्वभावभूतं ज्ञानं सूर्यप्रकाशवत् कृत्स्नं प्रकाशयतीति व्याचष्टे । अत्र 'येषामात्मनां तेषाम्' इति बहुवचनप्रयोगेन प्रकृतिविमुक्तात्मस्वरूपावस्थायां जीवात्मनां यदेकत्वमद्वैतिभिः स्वीकृतं तन्निरस्तमिति विशिष्टाद्वैतिनामाशयः । यद्यविद्योपाधिवशात् नानात्वेन केवलं प्रतीयते, न वस्तुतो नाना, तर्हि अविद्या-निवृत्यवस्थायामपि बहुवचननिर्देशो न प्रयुज्येत । अतो ज्ञायते, जीवबहुत्वं जीव-ब्रह्मणोर्भेदश्च गीताचार्याभिमतमिति तेषां सिद्धान्तः । किन्तु 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत',[2] 'अन्तवन्त इमे देहा नित्यस्योक्ताश्शरीरिणः'[3] इत्यादिस्थलेषु, देहवाचकानां शब्दानां बहुवचने प्रयोगः, आत्मवाचकानां पदा-नामेकवचने निर्देशश्च अद्वैतिनां डिण्डिमघोषायोपकुर्वन्ति इति न विस्मर्तव्यम् । अतः केवलमेकवचनबहुवचनप्रयोगाभ्यां गीताचार्याणां कुत्र तात्पर्यमिति वा कस्मिन्मते पक्षपात इति वा निर्णेतुं न शक्यमिति फलितोऽर्थः ।

ज्ञानं हि सर्वोत्तमः उपायः, बुद्धिचित्तश्रद्धादिसर्वभावैः तस्याश्रयणेन अपुनरावृत्तिरूपो मोक्षः सिद्ध्यतीति वदति—

तद्बुद्धयस्तदात्मानः तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः । इति श्लोकेन ।[4]

निश्चितब्रह्मज्ञानेन ब्रह्मणि सुप्रतिष्ठितमनस्काः ब्रह्मण्येव निष्ठां प्राप्तवन्तः ब्रह्मण्येव आश्रयन्तः ज्ञानेन निरस्तसकलपाप्मानः पुनर्न संसरन्ति,

---

१. सैव, ५.१६
२. सैव, १३.२
३. सैव, २.१८
४. सैव, ५.१७

मोक्षं प्राप्नुवन्ति । 'तद्बुद्धयः' इत्यस्य स्वात्मज्ञानदर्शने निश्चितबुद्धय इति श्रीमद्रामानुजः वदति । 'तदात्मानः' इत्यस्य ब्रह्म एव निजात्मस्वरूपेण वर्तते इति जानन्त इति भगवत्पादः, आत्मस्वरूपावलोकने व्यवसितमनस इति श्रीमद्रामानुजः, परमात्मानमेव स्वस्वामित्वेन अवगच्छन्त इति श्रीराघवेन्द्रश्च व्याचक्षते । 'तन्निष्ठाः' इत्यस्य ब्रह्मनिष्ठायुक्ताः इति भगवत्पादीयाः; आत्मस्वरूपे सतताभ्यासशालिन इति श्रीमद्रामानुजीयाः, अचञ्चलब्रह्मनिष्ठावन्त इति श्रीराघवेन्द्रश्च विवृण्वन्ति । तत्परायणाः इति पदं तदाश्रयिण इति भगवत्पादः, निजात्मस्वरूपावगतिरेव परमं प्रयोजनमिति मन्वाना इति श्रीमद्रामानुजश्च भाषेते । ज्ञाननिर्धूतकल्मषत्वं भगवत्प्रसादोपलब्धज्ञानपरमिति श्रीधरस्वामी व्याचष्टे । अपुनरावृत्तिस्तु मोक्षप्रापणादेव । स च मोक्षः अखण्डाकारब्रह्मस्वरूपता इति अद्वैतिनोऽभिप्रयन्ति । किन्तु प्रकृतिविमुक्तात्मस्वरूपप्राप्तिरेव जननमरणनिवर्तक इति श्रीमद्रामानुजीयाः ।

ज्ञाननिष्ठः ब्रह्माकारेण सर्वं पश्यतीति वदन् उत्तरश्लोकेन,[1] जातियोन्यवस्थाभेदं विना सर्वप्राणिषु ब्रह्मदर्शनेन पण्डितपदवाच्यो भवतीत्युक्तम् । तत्र पण्डितपदेन प्रकृतिविमुक्तात्मस्वरूपज्ञानिनो विवक्षिता इति; समदर्शिन इत्यनेन जातियोन्यवस्थाभेदं विना सर्वप्राणिषु ज्ञानाकारतया समानमात्मतत्वं पश्यन्त इति श्रीमद्रामानुजीया व्याख्या । श्रीराघवेन्द्रस्तु उत्तममध्यमाधमप्राणिषु अन्तर्यामित्वेन वर्तमानं परमात्मतत्वं तादृशोच्चनीचभेदं विनैव समत्वेन वर्तत इति ये जानन्ति ते पण्डिता इति व्याचष्टे ।

येषां मनः, सर्वत्र ब्रह्मतत्वं सममिति ज्ञाने निष्ठितं वर्तते तैर्जननमरणरूपोऽयं संसारः अत्रैव जितः इति वदति—

> इहैव तैर्जितः सर्गः येषां साम्ये स्थितं मनः ।
> निर्दोषं हि समं ब्रह्म तस्मात् ब्रह्मणि ते स्थिताः ।।[2]

इति श्लोकेन । श्लोकेनानेन अद्वैताभिमता जीवन्मुक्तिर्निरूप्यत इति भगवत्पादः मन्यते । निर्दोषं खलु ब्रह्मसमरूपेण सर्वत्र व्याप्तं, तज्ज्ञानवन्तः तस्मिन्

---

१. विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।
   शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ।।
   सैव, ५.१८

२. सैव, ५.१९

ब्रह्मणि प्रतिष्ठां गताः ब्रह्माकारतां प्राप्ता इत्यर्थः । ब्रह्मतत्वं सर्वत्र व्याप्तमिति हेतोः, तद्भावमापन्नैः संसारबन्धः अत्रैव अस्यामेव देहावस्थायां जितः इति भावः । अत्र श्रीमद्रामानुजः 'इहैव साधनानुष्ठानदशायामेव तैस्सर्गो जितः—, ब्रह्मणि स्थितिरेव हि संसारजयः; आत्मसु ज्ञानैकाकारतया साम्यमेवानुसन्दधाना मुक्ता एवेत्यर्थः'[1] इति व्याचष्टे । किन्तु तात्पर्यचन्द्रिकायां स्वमतानुरूपं भाष्यं विशदयन् वेदान्तदेशिकः 'संसारो जित इति मुक्तप्रायास्त इत्यर्थः'[2] इति तत्र जीवन्मुक्तत्वशङ्कां निवारयति । किन्तु जीवन्मुक्तिः औपनिषत्सिद्धा यथा बृहदारण्यके 'अथाकामयमानः योऽकामः निष्कामः आप्तकामः न तस्य प्राणा उत्क्रामन्ति, ब्रह्मैव सन् ब्रह्माप्येति'[3] इत्युक्तम् । अस्या श्रुत्याः वार्तिके सुरेश्वराचार्याः 'अत्र ब्रह्म समश्नुते'[4] इति जीवन्मुक्तत्वमेव विवक्षितमिति दृढीकुर्वन्ति ।

तस्मिन्नेव पञ्चमाध्याये ब्रह्मज्ञानी बाह्यस्पर्शेषु सुखसाधनत्वं न पश्यति; सर्वं सुखमात्मनिष्ठमेव पश्यति; अत एव सः अक्षय्यं सुखं प्राप्नोतीति वदति–

बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम् ।
स ब्रह्मयोगयुक्तात्मा अक्षय्यं सुखमश्नुते ।।[5] इति श्लोकेन ।

अस्य उत्तरश्लोकेन 'ये तु संस्पर्शजा भोगाः दुःखयोनय एव ते'[6] इति इन्द्रियद्वारा बाह्यवस्तुभ्यः अनुभूयमानं सुखं वस्तुतो दुःखमेवेति निरूपयिष्यति । वैषयिकाणां सुखानामचिरस्थाय्यपि सुखाभासः आत्मानन्दस्य मात्रा एवेत्यवगतिः तदा भवति यदा ब्रह्मयोगयुक्तात्मा आत्मसुखस्य सर्वोत्तमत्वं निरुपाधिकत्वं चानुभवति । ब्रह्मणि योगः समाधिः, तस्मिन्व्यापृतमन्तःकरणं यस्य सः इति

---

१. रा० भा०, ५.१९. पृ० १७३, वेदान्तदेशिकग्रन्थमाला सम्पादनम् ।
२. ता० च०, पृ० १७३
३. बृ० उ० ६.४.६
४. यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ।।
सु० वार्तिक--३५५ on बृ० उ० ६.४.६
५. गी०, ५.२१
६. सैव, ५.२२

व्युत्पत्तिः। अन्तःकरणं विषयसुखेभ्यः विनिवर्त्य आत्मनि यदा समाधीयते तदानीमक्षय्यमखण्डं दुःखलेशसंस्पर्शरहितं सुखं प्राप्नोति, येन सुखान्तरेषु सुखत्वबुद्धिरेव उपरमति। आत्मब्रह्मणोरभेदेन ब्रह्मानन्द एव पूर्णतया अनुभूयते अद्वैतमतरीत्या।

श्रीमद्रामानुजस्तु भगवदाराधनाबुद्ध्यैव सर्वं वैदिकं लौकिकं च कर्म कुर्वतः कर्मफलेष्वनासक्तस्य सन्यासाख्यो योगः सिद्धो भवतीति व्याचष्टे। येन सन्यासयोगेन सः प्रकृत्यभ्यासं विहाय अक्षय्यमात्मानन्दमनुभवति। 'यत्सुखम्' इति स्थाने 'यः सुखम्' इति पाठान्तरं स्वीकृत्य यः जीवः आत्मनि सुखं विन्दति सः, प्रकृतिविमुक्तात्मनः ब्रह्मसाम्यत्वात्, ब्रह्मानन्दमेवानुभवति इति तात्पर्यम्। यच्छब्दतच्छब्दयोस्तुलनमपि पाठेनाऽनेन सिद्ध्यति।

योऽन्तःसुखोऽन्तरारामः तथान्तर्ज्योतिरेव सः।
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥[1] इति श्लोकेन।

यः आत्मन्येव सुखक्रीडाप्रकाशादीन्यनुभवति स योगी ब्रह्मभूतः सन् ब्रह्मनिर्वाणं प्राप्नोतीति वदति। निर्वाणपदेन ब्रह्मण्येव लीयत इति भगवत्पादीयानां व्याख्या। स्वात्मानुभवसुखमेव आत्मैकविषयकज्ञानी प्रप्नोतीति श्रीमद्रामानुजः। अत्र 'ब्रह्मभूतः' इत्यस्य जीवन्मुक्तपरत्वं भगवत्पादेन स्वीकृतम्। वेदान्तदेशिकस्तु एतावत्पर्यन्तं बाह्यस्पर्शैराकृष्टः 'अहं पश्यामि' इति देहात्मबुद्ध्या शरीराभिमानी आसीत्; किन्त्विदानीं तदभिमाननिवृत्या 'यथावत् स्थितः सङ्कुचितज्ञानादिस्वरूपेणावस्थितिः' इति[2] व्याचष्टे। प्रकृतिविमुक्तात्मस्वरूपत्वात् तस्य अभिमाननाशेऽपि ब्रह्मभावो न सिद्ध इति तन्मतम्। 'ब्रह्मभूतः' इति पदेन जीवन्नेव ब्रह्मभावम् अर्थात् जीवन्मुक्तिं, 'ब्रह्मनिर्वाणम्' इति पदेन तदनन्तरं देहापाये विदेहकैवल्यं प्राप्य ब्रह्मणि लीयत इति अद्वैताभिमतौ द्विप्रकारावपि मोक्षौ विवक्षिताविति भाति।

ब्रह्मभूतः प्रकृतिविमुक्तात्मभावं प्राप्तः स्वात्मानुभवसुखं ब्रह्मनिर्वाणम् अनुभवतीति श्रीमद्रामानुजीया व्याख्या। श्रीराघवेन्द्रः, 'ब्रह्मभूतं' इत्यनेन ब्रह्मणि निष्ठां प्राप्तः इति, 'अन्तराराम' इत्यनेन भगवद्दर्शनसुखं प्राप्त इति च व्याचष्टे।

---

१. सैव, ५.२४
२. ता० च०, पृ० १७६

उत्तरश्लोकेनाऽपि[1] सर्वपापनिर्मुक्ताः ध्वस्ताखिलसंशयाः अज्ञाननाशात् इन्द्रियाणि मनश्च स्वाधीने स्थापयित्वा सर्वभूतानां हितमेव काङ्क्षन्तः ज्ञानिनः ब्रह्मनिर्वाणं लभन्त इति वदति। अत्रापि ब्रह्मनिर्वाणपदस्य जीवन्मुक्तपरा व्याख्या अद्वैतिभिः क्रियते। स्वात्मानुभवपरमिति श्रीमद्रामानुजः व्याचष्टे। ब्रह्मणा भगवता दत्तं सुखं लभन्त इति श्रीमदानन्दतीर्थः, प्राकृतशरीररहितं ब्रह्म लभन्त इति श्रीराघवेन्द्रश्च वदतः। 'छिन्नद्वैधा' इत्यस्य संशयविपरीतज्ञानाभ्यां मुक्ताः, 'अयतात्मान' इति पदच्छेदेन महामनस्विन इति च श्रीराघवेन्द्रो व्याचष्टे।

उत्तरश्लोके 'अभितो ब्रह्मनिर्वाण'[2]मिति इहैव ब्रह्मानन्दावाप्तिरुक्तेति अद्वैतिनामभिप्रायः। 'अभितः' इत्यस्य 'सर्वत्र' इति श्रीमद्रामानुजाभिमतोऽर्थः। यत्र कुत्रापि यदा कदाऽपि ब्रह्मानन्दानुभवः इति श्रीराघवेन्द्रः। ब्रह्मानन्दः करस्थस्तेषामिति जीवन्मुक्तत्वाभिप्रायेण भगवत्पादः भाषते। 'इहैव तैर्जितः सर्गः' इत्यत्र वत् जीवन्मुक्तिपरत्वमत्रापि 'अभितः' इति शब्देन स्पष्टतरमुक्तमिति भाति।

स्पर्शान् कृत्वा बहिर्बाह्यान् चक्षुश्चैवान्तरा भ्रुवोः।
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ॥
यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः।
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः॥[3] इति।

श्लोकद्वयेन सदा मोक्षपरायणत्वेनावस्थितिरेव मुक्तिः इति वदति। शब्दादिविषयाणामन्तःप्रवेशं रुन्धन्, भ्रुवोर्मध्ये दृष्टिं स्थिरीकृत्य, प्राणापानौ नासाभ्यन्तरे समौ कृत्वा, इन्द्रियमनोबुद्धीनां नियमनं सम्पाद्य, इच्छाभयक्रोधरहितः

---

१. लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः।
छिन्नद्वैधा यतात्मानस्सर्वभूतहिते रताः॥
गी०, ५.२५

२. कामक्रोधवियुक्तानां यतीनां यतचेतसाम्।
अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम्॥
सैव, ५.२६

३. सैव, ५.२७, २८

मोक्षमेवाभिकांक्षन् यः मौनमवलम्बते सः सर्वदा मुक्त एव, सिद्ध एव तस्य मोक्षः । बाह्यस्पर्शजन्येषु सुखाभासेषु विमुखः सन् इन्द्रियमनोबुद्धीनामात्माभिमुखीकरणेन निरतिशयमानन्दमनुभवतीति तादृशी मौनावस्थैव मोक्ष इति निर्दिश्यते । 'सदा मुक्त एव' इत्यनेन साधनानुष्ठानसमय एव प्रकृतिविमुक्तात्मभावमापन्न इति श्रीमद्रामानुजः; मुक्तप्रायः, कामक्रोधादिभ्यो निवृत्तत्वात् मुक्तसम इति श्रीराघवेन्द्रश्च व्याचक्षाते ।

षष्ठाध्याये 'शुचौ देशे' इत्यारभ्य आसनादीनां योगसाधनानां निरूपणं कृत्वा इन्द्रियनिग्रहेण योगाभ्यासविधिं वर्णयन् तत्फलभूतां मनस्संयमजनितां मुक्तावस्थां वर्णयति श्लोकद्वयेन ।

युञ्जन्नेवं सदात्मानं योगी नियतमानसः ।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ।।
युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ।।'[1]

मनोनिग्रहसम्पन्नः योगी उक्तक्रमेण मनसः निश्चलतां प्राप्य मोक्षनिष्ठां भगवदधीनां जननमरणयोः शान्तिं प्राप्नोति । सदा नियतमनस्कः दूरीकृतपाप्मा योगी, विना प्रयासं ब्रह्मदर्शनरूपं श्रेष्ठं सुखमश्नुते । उभयत्र 'आत्मानं युञ्जन्' इत्यस्य परमात्मानं ध्यायन्निति श्रीराघवेन्द्रस्य व्याख्या । निर्वाणपरमामित्यस्य शरीरपातात्परमिति श्रीमन्मध्वमतरीत्या व्याख्यातम् । मत्संस्थामित्यस्य मत्स्वरूपेणावस्थितिमिति श्रीधरस्वामी, मयि संस्थां स्थितिमिति श्रीमद्रामानुजः श्रीमदानन्दतीर्थश्च व्याचक्षाते । ब्रह्मसंस्पर्शमिति पदं ब्रह्मणा ऐक्यावस्थामिति भगवत्पादः, ब्रह्मानुभवरूपामिति श्रीमद्रामानुजः, भगवत्प्राप्त्यनन्तरमुत्पद्यमानामिति श्रीराघवेन्द्रश्च व्याख्यातवन्तः । आत्मनि मनः संलग्नं कृत्वा, शनैः शनैः निश्चयान्वितया बुद्ध्या तस्य तत्राचलप्रतिष्ठां सम्पाद्य अभ्यासवैराग्याभ्यां तस्य व्यतिचलनं सर्वथा निरुद्ध्य मनसः प्रसादं योऽनुभवति तस्य अन्वेषणीयं नास्त्यात्मसुखं, स मुक्त एवेति अद्वैतिनामाशयः । तस्य आनन्दस्वरूपत्वात् प्रापणीयं नास्तीति जीवन्मुक्तपरत्वेनैव भगवत्पादः व्याचष्टे । इदमेव द्वितीयश्लोके 'सुखेन ब्रह्मसंस्पर्श' मिति वदन्, अयत्नसिद्धत्वं ब्रह्मानन्दस्य निरूपयति ।

---

१. सैव, ६.१५,२८.

अष्टमाध्याये

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ।।[१] इति ।

श्लोकेन परमात्मानं प्राप्य संसारदुःखान्निवृत्तो भवतीत्युक्तम् । पुनरावृत्तिरहितः मोक्षः भगवत्प्रापणादन्य इति न बोद्धव्यमिति कृत्वा ये संसिद्धिं परमां गताः तेषां मामुपेत्य पुनर्जन्मप्रसंगो नैव भवतीति, परमां संसिद्धिः भगवत्प्रापणं च अनर्थान्तराविति सूचितम् ।[२] 'आब्रह्मभुवनालोकाः पुनरावर्तिनोऽर्जुन' इत्यत्र ब्रह्मलोकस्थानां पुण्यक्षये पुनर्जन्म अस्तीति अथवा तस्मादधः ये लोकास्सन्ति तत्रस्थानामेव पुण्यक्षये पुनर्जन्मेति वा विवक्षितमिति व्याख्यातृभिर्विवेचितम् । यदि ब्रह्मलोकस्था अपि पुनर्जन्मरहिताः तर्हि 'मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते' इत्यत्र एव इत्यर्थे यः 'तु' शब्दप्रयोगः स व्यर्थ एव स्यात् । अतः मोक्षादेव पुनर्जन्मप्रसङ्गनिवृत्तिः अन्यत्र सर्वत्र पुण्यक्षये पुनरावृत्तिरस्तीति तात्पर्यम् ।

नवमाध्याये सर्वेषां वैदिकानां लौकिकानां च कर्मणां भगवदर्पणं प्रतिपाद्य तस्मादेव कर्मबन्धमोक्ष इति वदति—

शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।
सन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ।।[३]

इति श्लोकेन । यथैव पापक्षयः मोक्षाय अत्यन्तावश्यकः तथैव पुण्यक्षयोऽप्यावश्यक इति तात्पर्येण 'शुभाशुभफलैरेवं मोक्ष्यसे' इत्युक्तम् । कर्मणां भगवदर्पणमेवात्र सन्यासपदेन विवक्ष्यते । षष्ठाध्यायस्य द्वितीयश्लोके 'यं सन्यासमिति प्राहुः योगं तं विद्धि पाण्डव' इत्युक्त्वा असन्यस्तसङ्कल्पः कश्चन योगी न भवतीति वदता सङ्कल्पत्याग एव सन्यासपदेन विवक्षित इति ज्ञायते । अत्र तु सन्यासपदेन कर्मफलत्यागः उच्यते । कथं तयोरभेद इति विवेचने फलानासक्तिरुभयोः समानेति भगवत्पादमतम् । श्रीमद्रामानुजोऽपि सन्यासशब्देन ज्ञानयोग एव विवक्ष्यत इति प्रायशः शाङ्करं मतमेवानुसरति । कामक्रोधादिरहितस्य

---

१. सैव, ८.१५

२. आब्रह्मभुवनालोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ।।
सैव, ८.१६

३. सैव, ९.२८

ध्यानयोगकारणस्य कर्मयोगस्य सन्यासस्य चाभेद एव तत्र विवक्षित इति श्रीराघवेन्द्रो वदति ।

अष्टादशाध्याये द्वितीयश्लोके सन्यासस्य निरूपणं कुर्वन्—

काम्यानां कर्मणां न्यासं सन्यासं कवयो विदुः ।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ।।[1] इति

वदति । काम्यानां कर्मणां परित्यागः सन्यास इति, सर्वकर्म फलत्याग एव त्याग इति पण्डिता मन्यन्त इति तात्पर्यम् । 'ज्योतिष्टोमेन स्वर्गकामो यजेत', 'पुत्रकामः पुत्रेष्ट्या यजेत' इत्यादिविधिवाक्यैः वेदेषु विहितानि यानि कर्माणि तत्तत्फलेच्छुभिः क्रियन्ते तान्येव काम्यकर्माणि । तेषां परित्याग एव सन्यास इति केचित् । नित्यनैमित्तिककाम्यरूपाणां सर्वकर्मणामनुष्ठानं किन्तु तेषां फलानामीश्वरार्पणमेव त्याग इति अन्ये वदन्ति । सर्वकर्मफलत्याग एवानयोर्मध्ये भगवता 'मे निश्चितं मतमुत्तमम्'[2] इत्युपरिष्टात् वक्ष्यमाणत्वात् अत्रैव श्लोके उत्तरार्धप्रतिपादितः सर्वकर्मफलत्यागः कीदृश इति विस्तरेण विवेचितं व्याख्यातृभिः । अत्र श्रीधरस्वामी शङ्कामेकामुत्थाप्य समाधानं करोति यथा—वेदेषु काम्यानामेव कर्मणां फलनिरूपणं कृतं; नित्यनैमित्तिकानां तत्तद्विधिवाक्येषु फलं न निर्दिष्टम् । सति चैवं फलरहितानां तेषां फलत्यागप्रसङ्गः कथमुपपद्यत इति चेत् 'सर्व एते पुण्यलोका भवन्ति', 'कर्मणा पितृलोकः' इत्यादिभिः श्रौतवाक्यैस्तेषामपि कर्मणां विशेषपुण्यफलान्युक्तानि दृश्यन्ते । अतस्तेषामपि फलत्याग उपपद्यत इत्यभिप्रेति । भगवत्पादः इमामेव शङ्कामुत्थापयति श्लोकस्यास्य भाष्यप्रसङ्गे यथा—'ननु नित्यनैमित्तिकानां कर्मणां फलमेव नास्तीत्याहुः, कथमुच्यते तेषां फलत्याग इति, यथा वन्ध्यायाः पुत्रत्याग'[3] इति पूर्वपक्षमुन्नीयते । 'अहरहः सन्ध्यामुपासीत' इत्यादिवाक्यैः वेदे विहितानां कर्मणां विहितत्वादेव कर्तव्यत्वम्, अकरणे, प्रत्यवायश्च मीमांसकैरभ्युपगतम् । बृहदा-

---

१. सैव, १८.२

२. एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ।।
सैव, १८.६

३. शां० भा० गी० १८.२

रण्यकभाष्ये ब्रह्मैव सन् ब्रह्माप्येति[1] इति उपनिषदर्थविचारप्रसङ्गे भगवत्पादः वदति—'ये तु प्रत्यवायपरिहारार्थं कर्म कल्पयन्ति ब्रह्मविदोऽपि, तेषां नामैव सर्वं भवति। प्रत्यवायस्य निहासितव्यस्य आत्मनोऽन्यस्य अभिप्रेतत्वात्। 'यस्त्व-ब्रह्मवित् तस्य भवत्येव प्रत्यवायपरिहारार्थं कर्मेति न विरोधः'[2] इति। अनेन प्रत्यवायपरिहार एव प्रयोजनमित्यूहितुं शक्यते। वेदानां भगवदाज्ञारूप-त्वात् तेषामनुष्ठानं भगवत्प्रीत्यै भवतीत्यपि नाभ्युपगम्यते मीमांसकैः। चित्त-शुद्धिरेव फलमिति चेत्, आस्तामार्थिकत्वेन चित्तशुद्धेः फलत्वं, किन्तु तस्य त्याग-प्रसङ्गो नैव सम्भवति। प्रायश्चित्तीयत्वनिवृत्तिरेव फलमिति चेत्, अभाव-रूपं तदपि त्यागविषयं न भवितुमर्हति। प्रकृतश्लोकस्य भाष्ये उक्तपूर्वपक्षस्य समाधानमेवं करोति भगवत्पादः—[3] न एष दोषः, नित्यानामपि कर्मणां भगवता फलवत्त्वस्य इष्टत्वात्। वक्ष्यति हि भगवान् 'अनिष्टमिष्टम्'[4] इति 'न तु सन्न्या-सिनाम्' इति च। सन्न्यासिनामेव हि केवलं कर्मफलासम्बन्धं दर्शयन् असन्न्या-सिनां नित्यकर्मफलप्राप्तिं 'भवत्यत्यागिनां प्रेत्य' इति दर्शयति" इति। अनयैव दिशा षष्ठाध्यायारम्भे भगवत्पादः 'नित्यस्य च कर्मणो वेदप्रमाणाववुद्धत्वात् फलेन भवितव्यमित्यवोचाम,[5] अन्यथा वेदस्यानर्थक्यप्रसङ्गादिति। न च कर्मणि

---

१. बृ० उ०, ४. ४–६

२. शां० भा०–बृ० उ०, ४.४.६.

३. शां० भा०—गी०, १८.२

४. अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य न तु सन्न्यासिनां क्वचित् ॥
गी०, १८. १२

५. 'अवोचाम' इति द्वितीयाध्यायभाष्यं स्मारयति यत्रोक्तम्—
शां० भा०—गी० २.१८—नित्यानामनुष्ठानात् अशुभात्स्यान्नाम मोक्षणं न तु तेषां फलाभावज्ञानात्। न हि नित्यानां फलाभावज्ञानम् अशुभमुक्ति-फलत्वेन चोदितं नित्यकर्मज्ञानं वा। न च भगवता एव इहोक्तम्। ...सर्वत्र च प्रशस्तं बोद्धव्यं च कर्तव्यमेव न निष्प्रयोजनं बोद्धव्य-मित्युच्यते । ... न च निष्फलं विदध्यात् कर्मशास्त्रं दुःखस्वरूपत्वाद् दुःखस्य च बुद्धिपूर्वकतया कार्यत्वानुपपत्तेः। तदकरणे च नरकपाताभ्युपगमे अनर्थाय एव, उभयथापि करणे अकरणे च शास्त्रं निष्फलं कल्पितं स्यात्' इति।

सति उभयविभ्रष्टवचनमर्थवत्, कर्मणो विभ्रंशकारणानुपपत्तेः'[1] इति नित्यानामपि फलत्वं स्वीकरोति । अत एव सर्वमिदं मनसि निधाय नित्यनैमित्तिकानां कर्मणां फलं वाच्यं चेत् दुरितक्षय एव वक्तव्यः, तत्रापि आगामिदुरितानां नास्ति समाधानमिति सुरेश्वराचार्याः वदन्ति—

> नित्यस्याकरणे दोषः तत्क्रियायां न यद्यपि ।
> अन्यतोऽसौ स्वभावाद्वा न तु मानेन वार्यते ॥
> नित्यादेः फलमिष्टं चेदुपात्तदुरितक्षयः ।
> तथाप्यागामिदोषेष्वाशङ्का पूर्ववद् भवेत् ॥[2]

इति । नित्यनैमित्तिकानि कर्माण्यवश्यमनुष्ठेयानि । परमेश्वरप्रीतिः, चित्तशुद्धिः, दुरितक्षयः, प्रत्यवायनिवृत्तिः, इत्यादयः फलत्वेन सन्तु वा मा वा भूवन् । तादृशफलनिरपेक्षत्वमेवात्र फलत्यागशब्देन विवक्ष्यते । फलप्राप्तिरूपसङ्कल्पत्याग एव सर्वकर्मफलत्याग इत्यनेनोच्यत इति निष्कर्षः । अनेन—

> यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
> आत्मन्येव च सन्तुष्टः तस्य कार्यं न विद्यते ॥[3]

इति श्लोके आत्मन्येव तृप्तस्य कार्यं न विद्यत इति यदुक्तं तेन विरोधः दृश्यते । अत्र वस्तुतः विरोधो नास्ति । आत्मन्येव तृप्तः आत्मध्यानसमाधिस्थः कर्मणा स्वयं त्यक्ष्यते, तस्य कर्तव्यत्वं नास्तीति भावः । अयमेवाभिप्रायः 'लोकसङ्ग्रहमेवापि सम्पश्यन् कर्तुमर्हसि'[4] इत्यत्र पूर्वोक्ते च बृहदारण्यकभाष्येऽपि विस्तरेण प्रपञ्चितः ।

अश्वमेधादिकाम्यकर्मणामनुष्ठातव्यप्रसङ्गेऽपि तेषामकरणं सन्यास इति केचित्, नित्यनैमित्तिककाम्यानां सर्वेषां करणेऽपि तेषां फलत्यागमात्रं सन्यास इत्यपरे वदन्तीति भगवत्पादः विवृण्वन्, काम्यकर्मणां त्यागः कर्मफलत्यागश्चेत्युभावपि त्यागशब्दार्थाविति व्याचष्टे । नित्यनैमित्तिकानामपि कर्मणां फलसद्भावोऽभ्युपगम्यते भगवता इत्येव भगवत्पादाशयः ।

---

१. शां० भा०—गी०, ६.१
२. बृ० उ० वार्तिकम्, १. ८२, ८३
३. गी०, ३.१७
४. सैव, ३. २०

अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य न तु सन्यासिनां क्वचित् ॥[1]

इति श्लोकेन परमार्थसन्यासी कर्मफललिप्तो न भवति, असन्यासिनस्तु कर्मफलप्राप्तिरस्तीति वदता भगवता नित्यनैमित्तिकानामपि कर्मणां फलास्तित्वं सूचितमिति भावते। 'सर्वकर्मफलत्यागम्' इत्यनेन त्रिविधकर्मणां फलत्याग एव विवक्षित इति श्रीमद्रामानुजोऽपि भगवत्पादीयां सरणिमेव अनुसरति। 'काम्यानां कर्मणां न्यासः' इत्यस्यैव कर्माकरणं फलत्यागो वा इत्युभावप्यर्थौ श्रीमन्मध्वमते स्वीकृतौ। तन्मते त्यागो नाम फलत्याग एव तत्रापि 'सर्वकाम्यकर्मणां भगवत्प्रीत्यन्यफलत्याग'[2] इति श्रीराघवेन्द्रः वदित।

द्वादशाध्याये अक्षरब्रह्मयोगेन भगवत्प्राप्तिं निरूपयन् श्लोकद्वयेन निर्गुणब्रह्मोपासनं निरूपयति। तत्र क्लेशोऽधिकतर इत्युत्तरश्लोकेन वदति।

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥
सन्नियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥[3]

इन्द्रियसमूहं सम्यक् नियम्य इष्टानिष्टवस्तुषु समत्वबुद्ध्या सर्वभूतहितैषिणो ये सन्ति, ये च मनोवाक्कायानामतीतं, मायाप्रपञ्चस्योपादानभूतं वृद्धिक्षयरहितं शाश्वतं सर्वत्र व्याप्तं निर्गुणं ब्रह्मतत्वमुपासते; ते मामेव प्रपद्यन्ते इति वदति। अत्र श्रीमद्रामानुजः त्रीनपि श्लोकान् एकान्वयेन व्याचष्टे।[4] 'सन्नियम्येन्द्रिय-

---

१. गी०, १८.१२
२. गीताभाष्यविवृत्तिः
३. गी०, १२. ३, ४, ५
४. "अक्षरम्—प्रत्यगात्मस्वरूपम्—देहादन्यतया— देवादिशब्दानिर्देश्यम्; अव्यक्तं—अत एव चक्षुरादिकरणानभिव्यक्तम्; सर्वत्रगमचिन्त्यं च—सर्वत्र देवादिदेहेषु वर्तमानमपि तद्विसजातीयतया तेन तेन रूपेण चिन्तयितुमनर्हम्; तत एव कूटस्थं—सर्वसाधारणम्······य एवमक्षरमुपासते तेऽपि

ग्रामं सर्वत्र समबुद्धयः', 'अव्यक्तासक्तचेतसाम्' इति पदैः देहात्माभिमानरहिता एव अक्षरब्रह्मोपासने प्रयतन्त इति स्पष्टम् । अस्य श्लोकस्य श्रीरामानुजीय-भाष्ये तेषां पुनर्देहात्माभिमानप्रसङ्गः 'अव्यक्ता हि गतिः' इति सामान्यदेहवता-मिव तेषां गतिर्दुःखमिति च प्रसङ्गो न घटत इवेति भाति ।

अत्र 'अनिर्देश्यमित्यारभ्य' 'अक्षरमिति' पर्यन्तं सर्वे शब्दा लक्ष्मीपरा व्याख्याताः श्रीमदानन्दतीर्थेन । विष्णुं पुरस्कृत्य श्रियमुपासाना अपि विष्णुमेव प्राप्नुवन्तीति तस्याशयः । उत्तरश्लोकेन विष्णुसम्बन्धं विना केवलं श्रियमाराध्य मुक्तिप्राप्तिस्तु कष्टतरा इति च विवृणोति ।

चतुर्दशाध्याये गुणत्रयविभजनं कृत्वा भगवतः गुणातीतत्वं यो वेत्ति सः भगवद्भावाख्यं मोक्षं प्राप्नोतीति वदति—

नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति ।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥[1] इति ।

गुणपरिणामानां कर्मणामात्मा न कारणं नापि कर्त्ता, गुणानामेव कर्तृत्वं तद्भिन्नं किमपि कारणं नास्तीति आत्मनो निष्क्रियत्वं योऽवगच्छति सः भगवत्स्वरूपं प्राप्नोतीति श्रीधरस्वामिनो व्याख्या । अर्थात् गुणानामेव कर्त्तृत्वमिति यो जानाति सः वासुदेवमयो भवतीति भगवत्पादः । अत्र 'द्रष्टा' इति पदेन सात्विकाहारं भुञ्जानः, फलापेक्षां विना भगवदाराधनत्वेन कर्माणि कुर्वाणः ततः सत्वगुणाभिवृद्धिं प्राप्तः साधकः विवक्षितः इति श्रीमद्रामानुजः । तादृशस्साधकः गुणसम्बन्ध एव बन्ध इति ज्ञात्वा, तद्बन्धाद्विमुक्तः ऽपरिशुद्धः आत्मा इति, तस्य कर्तृत्वं नास्तीति च जानाति । तेन च भगवद्धर्मं दुःखरहितं प्राप्नोतीति तस्याशयः । अत्र 'मद्भावम्' इत्यस्य मद्धर्ममिति व्युत्पाद्य भगवत्समानतामेव प्राप्नोति न तु भगवन्मयत्वमिति तात्पर्यम् ।

---

मां प्राप्नुवन्त्येव—मत्समानाकारमसंसारिणमात्मानं प्राप्नुवन्त्येवेत्यर्थः । तेषामव्यक्तासक्तचेतसां क्लेशस्त्वधिकतरः । अव्यक्ता हि गतिः— अव्यक्त-विषया मनोवृत्तिः देहवद्भिः—देहात्माभिमानयुक्तैः दुःखेनावाप्यते । देहवन्तो हि देहमेवात्मानं मन्यन्ते ।

रा० भा०, पृ० ३३४.



१. सैव, १४. १९.

सर्वस्वतन्त्रस्य भगवत एव सर्वकर्तृत्वमभ्युपगच्छन्तो द्वैतिनः अत्र 'गुणेभ्यः नान्यं कर्तार'मित्यनेन गुणानां परिणामिकर्तृत्वमेव विवक्षितमिति मन्यन्ते। तेषां मते कर्तृत्वं द्विविधम् । कटककङ्कणाद्याकारेण परिणम्यमाने स्वर्णे परिणामिकर्तृत्वं, स्वर्णकारे स्वतन्त्रं कर्तृत्वम् । अत्र गुणानां परिणामिकर्तृत्वमेवेत्यानन्दतीर्थः । स्वतन्त्रकर्तृत्वमीश्वरे एवेति तस्याभिप्रायः । 'नान्यं कर्तारमि'ति इतरव्यावृत्तिपरस्य अस्य वाक्यस्य अवान्तरकर्तृत्वव्यावृत्तिरेव विवक्षा इति क्लिष्टकल्पनमेव भाति ।

गुणानां कर्तृत्वज्ञानात् गुणातीतो भवति, अर्थात् गुणकार्यैरसंस्पृष्टो भवति । गुणप्रवृत्त्या उत्पद्यमानेषु उदासीनः स्वात्मनिष्ठायाः न प्रचलतीति तात्पर्यम् । द्वन्द्वेषु निन्दास्तुत्यादिषु ताटस्थ्यं भजते, सर्वप्रयत्नेभ्यो विरतो भवति ।

इत्थं गुणातीतः अनन्यभावेन भगवति संलग्नः ब्रह्मभूयाय कल्पत इति वदति उत्तरश्लोकेन—

मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान् समतीत्य त्रीन् ब्रह्मभूयाय कल्पते ।।[1] इति ।

यो यतिः कर्मयोगी वा सकलभूतहृदयावस्थितं नारायणं, कदाऽपि विषयान्तर-चिन्तनं विना, ऐकाग्र्येण भक्तियोगेन भजते, सः भगवदनुग्रहस्य पात्रं भवति ब्रह्मभूयं मोक्षं प्राप्नोतीति भगवत्पादः व्याचष्टे । 'अव्यभिचारेण भक्तियोगेन' इत्यस्य विवेकविज्ञानरूपेण योगेन ब्रह्मात्मैक्यानुसन्धानेनेति तात्पर्यम् ।

श्रीमद्रामानुजस्तु, प्रकृत्यात्मनोः विवेकानुसन्धानमात्रेण गुणातीतो न भवति चिरकालादनुवर्तमाना प्रकृतिवासना न सुलभतया व्यपोह्या; भक्त-वात्सल्यनिर्व्याजकारुण्यादिगुणविशिष्टं भगवन्तं शरणं प्रपन्नेनैव गुणानति-क्रमितुं मत्तुल्यं भावं प्राप्तुं च शक्यत इति वदति ।

श्रीमन्मध्वमते 'ब्रह्मभूयाय कल्पते' इत्यस्य चित्प्रकृतिवत् भगवत्प्रियो भवतीत्यर्थः । चित्प्रकृतिः लक्ष्मी यथा गुणातिवर्तनात् विष्णोः प्रिया तथैवा-ऽयमपि गुणातीतः विष्णुप्रियो भवतीति तात्पर्यम् ।

---

१. सैव, १४.२६

एकोनविंशश्लोके 'मद्भावं सोऽधिगच्छति' इति गुणातीतस्य भगवद्भावावाप्तिरेव मोक्ष इत्युक्तम्, अस्मिन् श्लोके ब्रह्मभावावाप्तिर्गुणातीतस्य उक्ता।

अनयोरनर्थान्तरत्वं वदति—

ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥[1] इति।

विकारहीनस्य, अविनाशिनः नित्यस्य, ज्ञानयोगाख्यधर्मेणप्राप्यस्य, आनन्दस्वरूपस्य, परिणामरहितस्य, ब्रह्मणः स्वरूपं वासुदेव इति भगवत्पादः व्याचष्टे। यया शक्त्या भक्तानुग्रहाय ब्रह्मणः प्रवृत्तिः सैव शक्तिर्ब्रह्मपदवाच्या। तच्च ब्रह्म अहमेवेति भगवान् वदति। शक्तिशक्तिमतोर्भेदाभावादेवमुच्यत इति तात्पर्यम्।

कथं भगवदुपासकः ब्रह्मभूयाय कल्पत इत्यत्र वर्ण्यत इति श्रीराघवेन्द्राभिप्रायः। प्रकाशानां समूहः यथा सूर्यमण्डलत्वेन दृश्यते तद्वदहं (वासुदेवः) ब्रह्मणः प्रतिमा, अर्थात् ब्रह्मं वाऽहमिति व्याचष्टे। सच्चिदानन्दाख्याः प्रकाशसमूहाः एकीभूयावतीर्णोऽस्मीति तात्पर्यम्।

श्रीमद्रामानुजस्तु, विकारहीनस्य अविनाशिनः परब्रह्मणः स्वरूपमहमस्मि; शाश्वतस्य धर्मस्य, अर्थात् पूर्णैश्वर्यस्य, ऐकान्तिकस्य सुखस्य 'वासुदेवः सर्वमिति' ज्ञानेन प्राप्यस्य सुखस्य प्रतिष्ठा—आश्रयः अहमस्मीति भगवता उक्तमिति व्याचष्टे। 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते'[2] इत्युक्तरीत्या गुणानतिवर्तितुं तद्द्वारा अक्षरैश्वर्यं भगवत्प्राप्तिं च साधयितुं प्रपत्तिरथवा भगवति शरणागतिरेव मुख्यं साधनमिति तात्पर्यम्।

श्रीमन्मध्वतरीत्या अत्र 'अहं चित्प्रकृत्याः लक्ष्म्याः मुक्तसमूहस्य, अक्षय्यबलहेतुभूतस्य धर्मस्य, मोक्षसुखस्य च आधारभूतोऽस्मि' इति भगवता उक्तम्।

---

१. सैव, १४.२७



२. सैव, ७.१४

अष्टादशाध्याये गुणत्रयानुरूपेण श्रद्धाया विभागं, कर्मादीनां च विभाग-मुक्त्वा, वर्णाश्रमानुरोधेन कर्मणां त्रैविध्यं च प्रतिपाद्य, सदोषमपि स्वकर्म न त्याज्यमिति 'क्लैब्यं मास्म गमः पार्थ'[१] इत्युपक्रमानुरोधेन उपसंहरन् नैष्कर्म्य-सिद्धिं निरूपयति—

असक्तबुद्धिः सततं जितात्मा विगतस्पृहः ।
नैष्कर्म्यसिद्धिं परमां सन्यासेनाधिगच्छति ।।[२]

इति । कर्मफलादिषु सर्वपदार्थेषु अभिमानवर्जितः जितमनोव्यापारः अथवा अहङ्काररहितः फलानपेक्षः पुरुषः फलसङ्गत्यागाख्येन सन्यासेन सर्वकर्म-निवृत्तिरूपां चित्तशुद्धिं प्राप्नोति, अथवा तत्क्षणमेव सर्वकर्मविनाशात् ब्रह्म-ज्ञानं प्राप्य ब्रह्मस्वरूपो भवतीति भगवत्पादः व्याचष्टे । सन्यासपदमत्र अभि-मानफलत्यागवाचकमिति श्रीमद्रामानुजः । 'नैष्कर्म्यसिद्धिमधिगच्छति' इत्यनेन सर्वकर्मरहितां ज्ञानयोगजन्यां ध्याननिष्ठां प्राप्नोतीति विवक्षितं तन्मते । भगवदाराधनात्मककर्मणामनुष्ठानसहकृतः सन्यास एव नैष्कर्म्यसिद्धिं प्रापयतीति तात्पर्यम् ।

नैष्कर्म्यसिद्धिमित्यस्य मोक्षोपकारिणीं सिद्धिं प्रारब्धेतरकर्मनाशरूपामिति, 'सन्यासेन' इत्यस्य काम्यकर्मत्यागेन अथवा भगवदर्पणबुद्ध्या कर्मानुष्ठानेनेति श्रीराघवेन्द्रो व्याचष्टे ।

ज्ञानस्य परां निष्ठां निरूपयन्नुत्तरश्लोकेन सैव निष्ठा ब्रह्मप्राप्तिरिति वदति—

सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे ।
समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ।।[३] इति ।

निष्कामकर्मणा ईश्वरमाराध्य देहेन्द्रियादीनामीश्वरप्रसादजनिता ज्ञान-निष्ठायोग्यता सिद्धिपदेनात्र विवक्षितेति भगवत्पादः विवृणोति । श्रीमद्रामा-नुजस्तु शरीरपातपर्यन्तम् अनुष्ठितस्य कर्मयोगस्य फलभूता ध्यानशक्तिः विवक्षितेत्यभिप्रैति । ब्रह्मज्ञानस्य या परा निष्ठा, यया ब्रह्मज्ञानसिद्धिं प्राप्तः

---

१. सैव, २.३
२. सैव, १८.४९
३. सैव, १८.५०

ब्रह्मभावं गच्छति, तां निष्ठां मत्तः समासतः शृणु इति श्लोकस्य तात्पर्यम् । ब्रह्मज्ञानस्य परमं विषयमिति ध्यानसिद्धिरत्र ज्ञानजन्यं, तस्याः ध्यानसिद्धेः या परा निष्ठा परमप्राप्यं ब्रह्म तन्निबोध इति विवृण्वन् श्रीमद्रामानुजः ज्ञानावाप्तेः ब्रह्मप्राप्तेश्च अन्तरा ध्यानसिद्धिमङ्गीकरोति साधनत्वेन ।

भगवत्पादमते—इदमित्थमिति कस्यचिद्वस्तुनः अवगतिर्ज्ञानमित्युच्यते ; तद्वस्तुव्यतिरिक्तं किमप्यचिन्तयन् केवलं ज्ञानविषयभूतस्य वस्तुनः शश्वद् ध्यानमेव 'निष्ठा' इत्युच्यते । इयमेव विषयज्ञानमित्युच्यते । अद्वैतिनां मते सगुणनिर्गुणभेदेन ब्रह्मज्ञानस्य द्वे प्रकारे स्तः । सगुणब्रह्मज्ञानं यद्यप्युपर्युक्तविषयज्ञानगोष्ठ्यामन्तर्गतं, तथापि इतरप्रापञ्चिकविषयज्ञानेभ्यः अत्यन्तं श्रेष्ठमेव । व्यवहारदशयाम् उपासकानामनुग्रहार्थं मायायां प्रतिबिम्बितं ब्रह्मचैतन्यं खलु सगुणब्रह्मेत्युच्यते ? तदेव विष्णुरुद्रविरिञ्च्यात्मकतया व्यवह्रियते । ईश्वरा इमे यद्यपि मायोपाधिभिर्युक्ताः, तथाऽपि मायां स्ववशे स्थापयित्वा तद्द्वारा सृष्टिस्थितिलयरूपाणि कर्माणि निर्वर्तयन्ति । अनन्तकल्याणगुणैः विलक्षणशक्त्या च दुष्टनिग्रहशिष्टपरिपालनादि च रामकृष्णाद्यवतारदशासु कुर्वन्ति । मलिनसत्त्वविशिष्टायां मायायां प्रतिबिम्बतं ब्रह्मचैतन्यमेव जीवः । तस्य जीवस्य ब्रह्मचैतन्यत्वेऽपि ईश्वरादिवद्विलक्षणशक्तिरहितत्वात् किञ्चिज्ज्ञत्वात् अविद्यावशंगतो जीवः, न तु स्वतन्त्रः । तादृशः जीवः ईश्वरमाराध्य तदनुग्रहादेव चित्तशुद्धिं सम्पाद्य, ततो निर्गुणब्रह्मज्ञानं प्राप्नोति । सगुणब्रह्मज्ञानं नाम, तेषु ब्रह्मरुद्रादीश्वरेषु, अवतारेषु वा, यस्य रूपस्याराधने गुरुचोदनात् कस्यचित्प्रवृत्तिः तस्य रूपस्य श्रुतिस्मृतिपुराणादिषु निर्दिष्टानां रूपशक्त्यैश्वर्याणां ज्ञानमेव । तादृशसगुणब्रह्मज्ञानानुरूपं भक्तिविश्वासादिभिः सततं तस्य ध्यानमेव निष्ठा इत्युच्यते सगुणोपासकानाम् । समस्तप्रपञ्चातीतं, प्रापञ्चिकानां समस्तानां प्रतिभासानां नेति नेति निराकरणेन अवशेषितम्, अद्वितीयमेकं, त्रैकालिकविकारवर्जितं, सकलप्रपञ्चाधारभूतं, सर्वत्र व्याप्तं, मनोवाचामगोचरं, मनोवागादीनां प्रकाशकं, स्वयं प्रकाशमानं सच्चिदानन्दघनं ज्ञानस्वरूपमित्येवं, ब्रह्मावगमनमेव, निर्गुणब्रह्मज्ञानमित्युच्यते । निर्गुणब्रह्मज्ञाने यस्य निष्ठा स एव जीवन्मुक्त इत्युच्यते ।[1] अस्य वर्तमानशरीरनाशस्य उत्तरक्षणमेव मोक्षः, यत्प्राप्त्या सः

---

१. प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम् । तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मण इति नु कामयमानोऽथाकामयमानो यो कामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति ।
बृ० उ०, ४.४-६

विदेहमुक्त इत्युच्यते । स्थूलसूक्ष्मकारणदेहानां नाशात् ब्रह्मणि लीनो भवतीति तात्पर्यम् । घटरूपोपाधिनाशे यथा घटाकाशः महाकाशेन एकीभवति तद्वत् । अज्ञानदशायां प्रपञ्चं जीवेश्वरादिभेदाश्च सत्यत्वेन प्रतीयन्ते, ज्ञानोत्पत्तौ सर्वे भेदाः असत्या[1] भवन्ति, ब्रह्मतत्वमेकमेव सत्यं परिशिष्यते । यथा भ्रमात्मकज्ञानं यावत् तावत् सत्यत्वेन रज्जौ प्रतीयमानः सर्पः प्रमाज्ञानानन्तरं नष्टो भवति तद्वदित्यर्थः ।

जीवेश्वरौ प्रपञ्चं च अज्ञानकल्पितं, ब्रह्मैकमेव सत्यं, तस्य नामरूपादिकं नास्ति इति बहुभिः श्रुतिवाक्यैर्ज्ञायते ।[2] किन्तु 'आदित्यवर्णम्'

———————————

१. निश्चितायां यथा रज्ज्वां विकल्पो विनिवर्तते ।
रज्जुरेवेति चाद्वैतं तद्वदात्मविनिश्चयः ॥
मा० उ०, गौ० का०, २.१८

२. तदेतत्सत्यं,
यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः
सहस्रशः प्रभवन्ते सरूपाः ।
तथाऽक्षराद्विविधाः सौम्यभावाः
प्रजायन्ते तत्र चैवापि यन्ति ॥
मु० उ०, २. १.१

यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति ।
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥
यस्मिन् सर्वाणि भूतानि आत्मैवाभूद्विजानतः ।
तत्र को मोहः कः शोकः एकत्वमनुपश्यतः ॥
ई० उ०, ६, ७

अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बभूव ॥
क० उ०, ५.९

यदेवेह तदमुत्र यदमुत्र तदन्विह ।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥
सैव, ४ १०.

सर्वं ह्येतद्ब्रह्मायमात्मा ब्रह्म सोऽयमात्मा चतुष्पात् ।
मा०उ०, १.२

'सुवर्णाज्योति:' इत्यादिश्रुतिवचनैः रूपादिकं कथमुच्यत इति चेत्, ब्रह्मणो

---

प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ।
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥

गौ० का०, १.१७

स्वप्नमाये यथा दृष्टे गन्धर्वनगरं यथा ।
तथा विश्वमिदं दृष्टं वेदान्तेषु विचक्षणैः ॥
न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥

तत्रैव, २. ३१,३२

जीवात्मनोरभेदत्वमभेदेन प्रशस्यते ।
नानात्वं निन्द्यते यच्च तदेव हि समञ्जसम् ॥

तत्रैव, ३.१३

मनोदृश्यमिदं द्वैतं यत्किञ्चित्सचराचरम् ।
मनसो ह्यमनीभावे द्वैतं नैवोपलभ्यते ॥

तत्रैव ३. ३१

सर्वं खल्विदं ब्रह्म छा० उ०, ३.१४.१

यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं
स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ॥

छा० उ०, ६. १-४

सदेव सौम्य इदमग्र आसीदेकमेवाद्वितीयम् ।

सैव, ६. २. ३

तदैक्षत बहु स्यां प्रजायेयेति । तत्रैव, ६. २. ३

ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो ।

तत्रैव, ६. ८ ७

यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमाथ
यत्रान्यत्पश्यन्नन्यच्छृणोति अन्यद्विजानाति तदल्पम्··· ।

तत्रैव, ७. २४.१

······अहमेवेदं सर्वमिति । तत्रैव, ७. २४.२

एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता
विज्ञानात्मा पुरुषः । स परोऽक्षर आत्मनि सम्प्रतिष्ठिते ।

प्र० उ०, ४.९

नीरूपत्वं नाम नान्धकार इति प्रतिपादयितुं प्रवृत्तस्ताः श्रुतयः न तु तस्य विवक्षा इति बोद्धव्यम्। 'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्', 'नमो निषङ्गिणे चेषुधिमते च', 'कपर्दिने च व्युप्तकेशाय च' इत्यादिश्रुतयः रुद्रादिदेवतानां रूपवर्णनपरास्तु व्यवहारदशानुगुणं निर्गुणब्रह्मोपासनायामनर्हाणाम् उद्दिधीर्षया सगुणोपासनोपयोगि ईश्वरादिरूपवर्णने प्रवृत्ता इत्यवगन्तव्यम्। 'एवं सततयुक्ता ये'; 'ये त्वक्षरमनिर्देश्यम्'; 'सन्नियम्येन्द्रियग्रामम्' इत्यादिश्लोकेषु प्रतिपादिता निर्गुणब्रह्मोपासना सामान्यजनानामसाद्ध्या इति हेतोः तेषां भक्तिविश्वासादीनुत्पाद्य प्रपञ्चे क्रमेण विरक्तिं च जनयन् चित्तशुद्धिमुत्पादयितुं सगुणोपासनाक्रमः तत्र सहायार्थमीश्वरस्य रूपादिनिरूपणं च आभिः श्रुतिभिः प्रतिपाद्यते। सगुणोपासनायां लब्धप्रतिष्ठः निर्गुणोपासनार्हो भवति। उदाहरणतया कृषीवलः स्वप्रयत्नेन धान्यमुत्पाद्य

---

स यथोर्णनाभिस्तन्तुनोच्चरेद्यथाग्नेः क्षुद्राः विस्फुलिङ्गाः व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे लोका सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति···

बृ० उ०, २. १. २०

यत्र हि द्वैतमिव भवति तदितर इतरं जिघ्रति······

······यत्र वा अस्य सर्वमात्मैवभूत्तत्केन कं जिघ्रेत्······

तत्रैव, २.४.१४

स वा अयमात्मा सर्वेषां भूतानां राजा तद्यथा रथनाभौ च रथनेमौ चाराः सर्वे समर्पिता एवमेवास्मिन्नात्मनि सर्वाणि भूतानि सर्वे देवाः सर्वे लोकाः सर्वे प्राणाः सर्वे एत आत्मानः समर्पिताः।

बृ० उ०, २.५.१५

कोयमात्मेति वयमुपास्महे कतरस्स आत्मा येन वा रूपं पश्यति··· सर्वाण्येवेतानि प्रज्ञानस्य नामधेयानि भवन्ति।

ऐ० उ०, ३.२

···प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म।

तत्रैव, ३.३

अहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्। ··· अथ योऽन्यां देवता–मुपास्तेऽन्योसावन्योऽहमस्मीति न स वेद यथा पशुः।

बृ० उ०, ३.४

सत्यं ज्ञानमनन्तमानन्दं सर्वज्ञत्वाद्युपेतं मायोपाधिकं तत्पदार्थः परमात्मा।

सर्वसारोपनिषद्।

तद्द्वारा धनं सम्पादयति । अन्यः कश्चिद्विद्वान् स्ववैदुष्यप्रकटनोत्तरक्षणमेव धनं प्राप्नोति । कृषीवलेन उत्पन्नानां धान्यानां विक्रयणं यावत्, धनप्राप्त्यै प्रतीक्षा कर्तव्या भवति । विदुषस्तु झटित्येव साक्षाद्धनलाभः । तथैव निर्गुणोपासनानर्हः प्रथमं सगुणोपासनया संस्कारं प्राप्य तद्द्वारा निर्गुणोपासनं कर्तुं प्रभवति । अधिकारिभेदेनैव उपासनाक्रमाणां व्यवस्था कृता ।

नीरूपस्य ब्रह्मणः ज्ञानं तदनुसारेण तदुपासनं च कथं शक्यमिति चेदुच्यते—ब्रह्मज्ञानमित्यस्य ब्रह्माकाररूपादिज्ञानमिति नार्थः । ब्रह्मस्वरूपज्ञानमेव ब्रह्मज्ञानम् । परिमाणादिबोधकमाकारज्ञानम् । नीलपीतादिगुणबोधकं रूपज्ञानम् । द्वाभ्यामपि विलक्षणं स्वरूपज्ञानं परिणामरहितस्य रूपाकाराद्याधारभूतस्य केवलस्य स्वरूपस्य ज्ञानम् । रूपाकारादीनां परिणामैरबाधितं यत्स्वरूपभूतं तत्वं तस्य ज्ञानमेव ब्रह्मज्ञानमित्युच्यते । स्थानविशेषेण द्रव्यान्तरसंयोगेन वा जलस्य आकारे रूपे वा भेदाः स्युः । किन्तु जलस्वरूपे कदाऽपि भेदो नास्ति । उपाधिजन्यैः आकाररूपादिभिः पीतं जलं त्रिकोणाकृति जलं इत्यादिव्यवहाराः उपाधिनाशेन अपगच्छन्ति, केवलं जलस्वरूपज्ञानमेव अवशिष्यते । तथैव परिणामहीनं ब्रह्मस्वरूपज्ञानमेवावशिष्यते अविद्यारूपोपाधिनाशे । तच्च स्वरूपज्ञानं गुरूपदेशात् शास्त्राभ्यासेन देहाद्यविद्याकल्पितेषु उपाधिषु अहं ममेत्यभिमानत्यागेन च सुलभं भवति ।

स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ध्याननिर्मथनाभ्यासात् देवं पश्येन्निगूढवत् ॥[1]

इत्युक्तप्रकारेण ब्रह्मनिष्ठा यदा प्राप्यते तदा ब्रह्मस्वरूपं निकटतममानन्दमयं प्रतिभाति । इदमेवोक्तं गीताचार्येण—'प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम्' इति । वैराग्याभ्यासाभ्यां विषयवासनानाशेन सुस्फुटं भाति । अतः यत्नस्तु विषयवासनानाशायैव कर्तव्यः, तद्व्यतिरिक्तं किमपि यत्नान्तरं ब्रह्मस्वरूप-

---

स यथा सैन्धवघनः अनन्तरोऽबाह्यः कृत्स्नो रसघन एव,
एवं वा अयमात्मा अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव ।
बृ० उ०, ६.५-१३

तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनम् ।
सैव, ४.५ १९

१. श्वे० उ०, १४

प्राप्त्यै कर्तव्यं न विद्यते । आत्मा हि नाम प्रसिद्धं वस्तु, न कुतोऽप्यवाप्यं नाप्यपलपनीयम् । सर्वदा सिद्धमेव तत् 'नित्योपलब्धिस्वरूपोऽहमात्मा'[१] इत्युक्तरीत्या । शास्त्राणामुपयोगः उपाधिनिरसनमात्रे ।

पुनरपि श्लोकत्रयेण ब्रह्मभावप्राप्त्यै यानि साधनान्यावश्यकानि तत्र तत्र पृथङ् निर्दिष्टानि तानि सर्वाणि सङ्कलय्य वदति—

बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च ।
शब्दादीन् विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥
विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥
अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥[२] इति ।

परिशुद्ध्या निश्चयात्मिकया बुद्ध्या युक्तः, धैर्येण विषयेभ्यः विकारहेतुभ्यः प्रतिनिवृत्तचित्तः[३], शब्दादिबाह्यस्पर्शानुपेक्षमाणो, रागद्वेषादिद्वन्द्वभावरहितः, एकान्तसेवी, मितभोक्ता, इन्द्रियमनांसि वशीकृत्य, सदा ब्रह्मानुसन्धाननिरतः, वैराग्यसम्पद्युक्तः, अहङ्कार–शाठ्य–दुर्मार्गप्रवृत्ति-तृष्णा–कोपाभिमानेत्यादि–वर्जितः, ममतां त्यक्त्वा प्रशान्तान्तःकरणः यो योगी स एव 'अहं ब्रह्मास्मी'ति निश्चयज्ञानेनावस्थातुं योग्यो भवतीति भगवत्पादीया व्याख्यासरणिः । विशुद्धया बुद्ध्या इत्यस्य सात्विकी बुद्धिरिति श्रीधरस्वामी, निष्कपटबुद्धिरिति भगवत्पादः, आत्मस्वरूपग्रहणयोग्या बुद्धिरिति श्रीमद्रामानुजः विषयनिःस्पृहा बुद्धिरिति श्रीराघवेन्द्रश्च व्याचख्रिरे । 'आत्मानं नियम्य' इत्यनेन कार्यकारणरूपस्यान्तःकरणस्य नियमनमिति भगवत्पादः, मनोनियन्त्रणमिति श्रीमद्रामानुजराघवेन्द्रौ च । शरीरस्थित्यर्थं यावदाहारादिकमावश्यकं तद्व्यतिरिक्तानां त्यागः 'शब्दादीन् विषयांस्त्यक्त्वा' इत्यनेन विवक्षितमिति भगवत्पादः, शब्दादिषु भोग्येच्छात्याग इति श्रीराघवेन्द्रश्च वदतः । तत्रापि शरीरस्थित्यै विना

---

१. हस्तामलकवाक्यम् शङ्करदिग्विजये ।

२. गी०, १८. ५१, ५२, ५३.

३. विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः ।
कुमारसम्भव, १.२८

प्रयत्नं यदुपलभ्यते तस्मिन्नपि रुचिविशेषाद्रागो रुचिप्रयुक्तो द्वेषश्च मा भूदिति 'रागद्वेषौ व्युदस्य च' इत्यनेनोक्तमिति भगवत्पादः । आत्मस्वरूपानुसन्धानं ध्यानमित्युच्यते, तत्र निरन्तरा प्रवृत्तिर्योगः । तयोर्निरत इत्यर्थे 'ध्यानयोगपरः' इत्युक्तमिति भगवत्पादाभिप्रायः । ज्ञानयोग एवाऽत्र ध्यानयोगत्वेन व्यपदिश्यत इति श्रीमद्रामानुजराघवेन्द्रौ वदतः । योगशब्द उपायार्थे इति श्रीराघवेन्द्रः । 'अहङ्कार'पदेन 'अहं विरक्तोऽस्मी'त्यहङ्कारोऽपि विवक्षित इति श्रीधरस्वामी व्याचष्टे । देहाद्यभिमानं कर्तृत्वाद्यभिमानमित्यन्ये । 'बलं' नाम कामरागयुक्ता शक्तिरुच्यत इति भगवत्पादः । स्वकीयं वस्तु नान्यत्र गच्छेदिति तद्रक्षणे यो व्यवसायः तत्र कामान्विता शक्तिः, स्वस्मिन्नविद्यमानं वस्तु कथं लभ्येत इति तदर्जने यो व्यवसायः तत्र रागान्विता शक्तिः । उभे अपि 'बलम्' इति पदेनोक्ते । श्रीमद्रामानुजस्तु अनात्मनि आत्मबुद्धिवर्द्धकं यद्वासनाबलं तदेव बलशब्देनोच्यत इति वदति । स्वस्मिन् सामर्थ्यातिशयमस्तीत्यभिमान एव श्रीराघवेन्द्राभिमतो बलशब्दार्थः । 'दर्प' इत्यनेन योगसिद्धीनां दुर्मार्गे प्रयोग इति श्रीधरस्वामी विवृणोति । अतिहर्षात् धर्मविरुद्धो यो मद उत्पद्यते स एव दर्प इति भगवत्पादः । क्रोधो नाम स्वार्जितस्य, अपहरणे नाशे वा प्रवृत्तं प्रति यो मनोभावः उत्पद्यते स एवेति श्रीधरस्वामी । निर्ममत्वं तु अयत्नसिद्धेष्वपि वस्तुषु अभिमानराहित्यमिति श्रीधरीया व्याख्या । स्वदेहेऽप्यभिमानराहित्यमिति भगवत्पादः । अस्वकीयेषु देहादिकृतकर्मसु स्वकीयत्वाभिमानराहित्यमिति श्रीमद्रामानुजः, प्रायशः एवमेव श्रीराघवेन्द्रश्च वदति । 'ब्रह्मभूयाय कल्पते' इत्यस्य ब्रह्मभावं प्राप्यत इति भगवत्पादः, ब्रह्मसमानभावं प्राप्यत इति श्रीमद्रामानुजः, ब्रह्मज्ञानं प्राप्यत इति श्रीराघवेन्द्रश्च वदन्ति ।

मोक्षो नाम ब्रह्मणि प्रवेश इत्यापाततः प्रतीतिमुत्पादयति एकेन श्लोकेन यथा—

भक्त्या मामभिजानन्ति यावान् यश्चास्मि तत्वतः ।
ततो मां तत्वतो ज्ञात्वा विशते तदनन्तरम् ।[१]

अत्र भगवत्पादः अनया रीत्या व्याचष्टे—यावानस्मि मायाद्युपाधिपरिच्छिन्नं, यश्चास्मि वस्तुत उपाधिरहितमखण्डाकारं सर्वव्यापिनं च मां योऽभिजानाति, सः ब्रह्मणि मयि प्रविशति इत्युक्तमिव भाति, किन्तु न तथा । अविद्यानिवृत्तिरेव

---

१. गी०, १८.५५

ज्ञानकार्यं, ब्रह्मणि प्रवेशस्य प्रसक्तिरेव नास्ति । कथमिति चेत्, अविद्यानिवृत्यनन्तरं प्राप्तव्यमवाप्तव्यं वा स्थानान्तरं वस्त्वन्तरं वा न विद्यते। 'ब्रह्मविद् ब्रह्मैव भवती'[1]ति खलु श्रुतिः। 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत'[2] इत्यनेन क्षेत्रज्ञ एवाखण्डब्रह्मतत्वमित्युक्तम् । वस्त्वन्तरासत्वात् तस्य प्रवेशप्रसङ्ग एव न घटते । 'विशते' इति प्रस्तुतश्लोकगतेन पदेन अविद्यानिवृत्तिप्राप्तिरेव विवक्षिता । वर्षानन्तरं जले यन्मालिन्यं दृश्यते तस्य वस्त्रायनादिविधिभिः निरसनेन शुद्धं जलमेवावशिष्यते । अत्र शुद्धीकरणक्रियया 'मलिनं जलमिति' व्यवहार एव अवसायितः; जलस्य स्वभावे नूतनं किञ्चिन्न सृष्टम् । अविद्यावस्थायां ब्रह्मणः 'जीव' इति यो व्यवहारः आसीत्, स एव अविद्यानिवृत्या निरस्तः ।[3] तदनन्तरं प्रकाशमानमात्मतत्वं, घटपिहितो दीपः यद्वत् घटापसरणेन स्वप्रकाशकः यथापूर्वं भाति, तद्वत् स्वप्रकाशकमवतिष्ठते । 'ब्रह्मनिष्ठां प्राप्तः सिद्धिम् अर्थात् ब्रह्म यथा आप्नोति' इति पूर्वं या ब्रह्मप्राप्तिरुक्ता तत्राप्ययमेवार्थः । गुरूपदिष्टशास्त्रज्ञानजन्यम्, अमानित्वादिगुणोपबृंहितम्, आत्मव्यतिरिक्तस्य कस्याप्यवगतिशून्यम्, 'अहं ब्रह्मास्मी'ति निश्चययुक्तं दृढमविच्छिन्नं ध्यानमेव ज्ञाननिष्ठा इत्युच्यते । 'चतुर्विधा भजन्ते माम्' इत्यत्र निरूपितेषु चतुर्विधभक्तिषु ज्ञानभक्तिरेव श्रेष्ठा । सैव ज्ञाननिष्ठा जीवेश्वरभेदनिर्वर्त्तिनी । तदेव परमं ब्रह्मज्ञानम् । एतादृशज्ञानोपपन्नस्यैव सर्वकर्मसन्यासोऽपि विहितः । तस्यैव आत्मस्वरूपप्राप्तिर्मोक्षः । अतः ब्रह्मणि प्रविशतीति वाक्येन अखण्डाकारब्रह्मस्वरूपेण प्रकाशत इति तात्पर्यम् ।

श्रीमद्रामानुजस्तु, स्वरूपेण स्वभावेन च कीदृशः कियद्विभूतिगुणसम्पन्नः अस्मीति मां, पूर्वोक्तभक्तियोगेन तत्वतः सम्यगभिजानाति स एवं ज्ञात्वा, ततः—भक्त्या मां प्राप्नोतीति व्याचष्टे । अत्र 'ततः' इत्यत्र ज्ञानादनन्तरं भक्तिः, तया भक्त्यैव मोक्षप्राप्तिरिति, भक्त्याः मुख्यं मोक्षकारणत्वमभिप्रेति ।[4]

---

१. मु० उ०, ३. २. ९

२. गी०, १८. २

३. प्रध्वस्तायामविद्यायां पूर्णमेवावशिष्यते ।

बृ० उ०, सु० वा०, २६९.

४. तत्वतः स्वरूपस्वभावगुणविभूतिदर्शनोत्तरकालभाविन्या अनवधिकातिशयभक्त्या मां प्राप्नोतीत्यर्थः ।…भक्त्या त्वनन्यया शक्य इति तस्या एव तत्वतः प्रवेशहेतुत्वाभिधानात् ।

रा० भा०, पृ० ४८४

'भक्त्या त्वनन्यया' इत्यादिश्लोकव्याख्यावसरे अस्य निर्देशः कृतः। ज्ञानमोक्षयोरन्तरा परभक्त्याः साधनत्वं अस्य पूर्वश्लोकादेव निष्पन्नम्। तत्रोक्तम्—

ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति।
समस्सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥[1]

इति। तत्र प्रकृतिविमुक्तात्मभावं प्रपन्नः जीवात्मा विवक्ष्यते। तस्य ज्ञानयोगः सिद्ध एव वर्तते। ज्ञानादेव मोक्षश्चेत् 'मद्भक्तिं लभते पराम्' इत्यस्य वैयर्थ्यं स्यात्। अतो ज्ञायते यदात्मयाथात्म्यज्ञानानन्तरं भगवद्याथात्म्यस्वरूपज्ञानाय मोक्षप्राप्तये च भगवत्प्रपत्तिरूपा परा भक्तिरावश्यकीति। तयैव भक्त्या तत्वतः भगवन्तं ज्ञातुं प्रवेष्टुं च शक्यत इति एकादशाध्याये भगवद्दर्शनाय एवं अर्जुनस्य सहकार्यभूदिति च निर्दिष्टम्। तत्र खलु स्वयं भगवता उक्तम्—

नाहं वेदैर्न तपसा न दानेन न चेज्यया।
शक्य एवं विधो द्रष्टुं दृष्टवानसि मां यथा ॥
भक्त्या त्वनन्यया शक्यः अहमेवं विधोऽर्जुन।
ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं च परन्तप ॥[2]

'यश्चास्मि यावानस्मी'ति स्वविश्वरूपप्रदर्शनेन अर्जुनस्य बोधमुत्पाद्य भगवता एवमुक्तम्। 'एवं विधो' द्रष्टुं वेदाध्ययनतपोदानयागादिभिर्न शक्यः किन्त्वनन्यया भक्त्यैवेत्यभिप्रायः। सा च भक्तिः शास्त्रजन्यज्ञानादनन्तरं तत्फलरूपेणोत्पद्यते। जन्मान्तरसुकृतविशेषेण सज्जनसम्पर्केण तैस्सह संलापेन च शास्त्रजन्यज्ञानावाप्तये या भक्तिः उपकरोति, यया सम्यक् शास्त्रश्रवणग्रहणादिकं सम्पद्यते सा अपरा भक्तिः ज्ञानमार्गप्रापिका। ज्ञानमार्गप्रवेशानन्तरं भगवन्तं तत्वतो द्रष्टुं तस्यानन्तकल्याणगुणैश्वर्यादीनवगन्तुं च या त्वरा वेदान्तवाक्यश्रवणजनितौत्सुक्यरूपा उत्पद्यते सैव परा भक्तिः। सा न केवलं तद्गुणाववोधनाय तद्दर्शनाय चोपकरोति किन्तु तस्मिन् प्रवेष्टुमप्युपकरोति। सैव अनन्या भक्तिरित्युच्यते यतः ज्ञानोत्पादनाद्यन्यप्रयोजनाय न, किन्तु भगवद्दर्शनादिसम्पाद्य परमपदप्रापणायेव। अमुमेवार्थं मनसि निधाय गीतार्थसङ्ग्रहे एकादशाध्यायस्यैवमुद्देशः निरूप्यते—

---

१. गी०, १८.५४

२. सैव, ११. ५३, ५४,

'एकादशे स्वयाथात्म्यसाक्षात्कारावलोकनम् ।
दत्तमुक्तं विदिप्राप्त्योः भवत्येकोपायता तथा ।।'[1]

इति । भगवद्दर्शनेन तत्स्वरूपज्ञानं तत्प्राप्तिश्चेत्युभयमपि अनन्यया भक्त्यैवेति निश्चप्रचमुक्तमत्र । 'विशते तदनन्तरम्' इति प्रकृतश्लोकोक्त्या 'यत्र पूर्वे साध्यास्सन्ति देवाः' इत्युक्तरीत्या 'अनवच्छेदान्नित्यं सन्तीति' परमं स्थानं विष्णोः पदं प्राप्नुवन्तीत्यर्थः ।

श्रीराघवेन्द्रोऽपि प्रायशः श्रीरामानुजरीत्यैव प्रकृतं श्लोकं व्याचष्टे । यादृशपरिमाणवान् यादृशनामरूपाद्युपेतः अस्मीति, अर्थात् सकलदेशकालव्याप्तं, सकलगुणसम्पन्नं दिव्यनामरूपादियुक्तं मां 'मद्भक्तिं लभते पराम्' इति पूर्वश्लोके वर्णितया परमभक्त्या स्वयोग्यतानुसारं यो जानाति, सः तया भक्त्या एव मां तत्वतो ज्ञात्वा मां विशति, मुक्तिं प्राप्नोतीति तस्य व्याख्यासरणिः ।

प्रायेण श्रीमद्रामानुजरीत्यैव श्लोकममुं विवृण्वन् श्रीवल्लभाचार्यः 'विशते' इत्यस्य 'पुरुषोत्तमं मां विशते, प्रवेश एव फलम्' इत्युक्त्वा 'आविशते' इत्यपि पदच्छेदं कुर्वन् 'पुरुषोत्तमाविष्टो भवति' इति प्रकारान्तरेण व्याचष्टे । भगवदाविष्टो भूत्वा शुकादिवत् तल्लीलासु विशत इति तात्पर्यम् ।।

---

१. गीतार्थसङ्ग्रहः, १५

# अष्टमः परिच्छेदः

## उपसंहारः

सर्वैराचार्यैस्तदनुयायिभिर्नैकैर्व्याख्यातृभिश्च गीतायाः स्वस्वमतानुसारेण कथं विमर्शनं कृतमित्येतावता प्रदर्शितम् । प्रस्थानत्रयेष्वप्येषैव स्थितिः । आपाततोऽभेदपराणां श्रुतिवाक्यानामालम्बनेन स्वकीयमद्वैतमतं यथा प्रामाणिकं दर्शयन्ति भगवत्पादास्तथैवापाततो भेदपराः श्रुतीरालम्ब्य स्वाभिमतानामाशयानां प्रामाणिकतां सिसाधयिषन्ति श्रीमदानन्दतीर्था अन्ये द्वैतवादिनश्च । सर्वे ते वेदैकशरणा इति हेतोः तेषां परस्परवैरुध्येऽपि कस्यचित्सर्वथा प्रामाणिकतां निर्णेतुं नास्माभिरुद्यमः कर्तव्यः । उपलभ्यमानानां सामग्रीणां निष्पक्षपातं परिशीलनमध्ययनं च खलु तटस्थस्य मुख्यं कर्त्तव्यं, न तु कस्यापि मतस्य खण्डनं मण्डनं वा । इयमेव सरणिः पाश्चात्यगवेषणसम्प्रदायप्रवर्त्तकैरादृता च ।

महाभारतस्य वेदोपबृंहणत्वं गीताया उपनिषदर्थप्रतिपादकत्वं च सर्वैरङ्गीक्रियते । आभ्यामेव कारणाभ्यां उपासनायाः शरणागतिपराया भक्तेश्च यत्प्राधान्यं गीतायां विवक्षितमिति वदन्ति शङ्करेतरे व्याख्यातारः तैस्तदाधारभूतानां श्रुतिवाक्यानां वैरल्यं नूनमनुभूयते । अत एव श्रीमदानन्दतीर्थाः श्रीवल्लभाचार्यश्च प्रायशः पौराणिकानामाधाराणामुल्लेखं कुर्वन्ति । तत्र तत्र पैङ्गिश्रुतिरित्यादिनिर्देशेन दीयमानानां श्रुतिवाक्यानामपि उपनिषद्वाक्यानामिव प्रसिद्धिर्न विद्यते । तद्व्यतिरेकेण अद्वैतपरासु व्याख्यासु गीतावाक्यसमानान्येव प्रसिद्धान्युपनिषद्वाक्यानि प्रमाणत्वेन दर्शितानीति स्वतः सिद्धमनितरसुलभं किञ्चिद्वैशिष्ट्यमस्त्येव तासाम् । तैर्यदि भक्तिपराः शरणागतिपराश्च श्लोकाः स्वमतानुसारेण निर्गुणब्रह्मज्ञानपरतया व्याख्याताः, तर्हि तत्रोपक्रमो-

पसंहारप्रतिपादनानां सामञ्जस्यं मनसि निधायैव क्रियते न तु क्लिष्टकल्पनया स्वाभिमतसिसाधयिषाशाठ्येन ।

बहुषु स्थलेषु भक्तिशब्दस्य ज्ञानपरा व्याख्या या कृता भगवत्पादेन, तत्र सर्वत्र क्लिष्टकल्पनयैव कृतेति आक्षेपः श्रूयते ।[1] उदाहरणतया एकं सन्दर्भं विचारयामः

पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।
यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ।।

अस्य श्लोकस्य व्याख्यावसरे 'ज्ञानलक्षणया अनन्यया आत्मविषयया' इति भक्तिपदस्य विवरणं भगवत्पादेन क्रियते । शङ्करानन्देन तत्वबोधिन्याख्यायां व्याख्यायां पुनरयमेवाशयः दृढीक्रियते यथा—'भजति वेत्ति विद्वाननयेति भक्तिर्ज्ञानम्' इति । अत्र विशिष्टाद्वैताभिमता शरणागतिरूपभक्तिरेव सुलभतया ध्वन्यते न तु ज्ञानापरपर्यायत्वेनेति केचन अभिप्रयन्ति ।[2] किन्तु पूर्वापरश्लोकसन्दर्भाभ्याम् अयमाक्षेपः न समीचीन इति भाति । पूर्वश्लोकाभ्याम् अव्यक्तात् प्रकृतेः परः सनातनो यः पुरुषः भूतग्रामेषु नश्यत्स्वपि न विनश्यति तस्य प्राप्तिरेव परमा गतिः यतः सोऽक्षरपदवाच्यः इत्युक्तम् । तदनन्तरं स पुरुषः अक्षरसंज्ञकः भक्त्या अनन्यया लभ्य इत्युच्यते । स्वात्मनः समानाकारतया सर्वेषु जीवेषु भगवच्छरीरभूतानाम् आत्मनां दर्शनमेव अपरोक्षज्ञानस्य लक्ष्यमिति रामानुजीयैः 'अशोच्यानन्वशोचस्त्वम्' इति श्लोकसन्दर्भ एव वर्णितम् । तदनुसारेण शरीरभूतेभ्यः शेषसंज्ञेभ्यः आत्मभ्यः व्यतिरिक्तः शेषी परमत्मा

---

1. ' it appears that this neglect and silence (about Bhakti) is intentional and the identity of Devotion and knowledge wilful'.
   Prof. Mainkar '*A Comparative Study of the Commentaries on Bhagavadgītā*', p. 12.
2. Śaṅkara at VIII. 22 understands *Ananyā Bhakti* as by the knowledge of the Ātman, a meaning which is obviously forced.
   *Ibid.*

कश्चिदस्ति चेत्, तत्प्राप्तिर्यावत् 'परमां गतिं प्राप्तः' इति न कस्याऽपि विषये वर्णयितुं शक्यते। किन्तु 'अव्यक्तोऽक्षर इत्युक्तः तमाहुः परमां गतिम्' इति पूर्वश्लोकेन अक्षरब्रह्मणो ज्ञानेनैव परमा गतिः प्राप्यते चेत्, ज्ञानमोक्षयोरन्तरा या भक्तिः रामानुजीयैराद्रियते सा अस्मिन् श्लोकसन्दर्भे न सङ्गच्छति। भक्तिपदप्रयोगस्तु भगवता अत्र कृतः। अतः तस्य ज्ञानपरत्वेनैव व्याख्यातुं निर्बद्धा भगवत्पादादयः। आत्माऽनात्मविवेकमात्रं नात्र विवक्षितं किन्तु पुरुषोत्तमशब्दवाच्यस्य प्राप्तिः, अर्थात् परमा गतिः प्रकृतेः परस्य तत्वस्य ज्ञानेन लभ्यत इति व्याख्येयं भवति। भक्तिपदेन परा भक्तिरेव यदि विवक्षिता तर्हि सा ज्ञानादन्या न भवति। जीवेश्वरतादात्म्यानुसन्धानपरा ज्ञाननिष्ठा भक्तिपदेन सङ्केतिता चेत्, नात्र हानिरद्वैतिनाम्। तादात्म्यावगमात् परं सा भक्तिः अनन्यत्वविशिष्टा भवति। वासुदेवात् परं नान्यदिति ज्ञानेन सहैव वासुदेवादन्यत् नास्तीति ज्ञानमपि सञ्जायते येन सेव्यसेवकभावोऽपि भक्त-भजनीय-भावोऽपि न परिशिष्यते। तादृशमनन्यत्वं न रामानुजाऽभिमतं नाऽपि मध्वाऽभिमतम्। अनन्यत्वशब्दोऽत्र नारायणस्य अनन्यत्वविवक्षया तस्य सर्वोत्तमत्वज्ञापनायेति व्याख्याने नूनं क्लिष्टता वर्तते। भक्तेर्विशेषणत्वेन तस्य व्याख्याने तदतिरिक्तविषयान्तरासद्भावविशिष्टा भक्तिरिति सिद्ध्यति। तादृशी भक्तिः अद्वैतज्ञानेनैव, न जीवेश्वरभेदज्ञानेन। 'भक्त्या लभ्यः' इति यदुक्तं न तु 'भक्त्या प्राप्यः' इत्यत एव ज्ञायते यज्जीवोऽत्र निर्दिष्टया भावनया स्वातिरिक्तमीश्वराख्यं तत्वं न प्राप्नोति किन्तु स्वस्यैव स्वतो लब्धमीश्वरत्वं लब्धत्वेनावगच्छति इति। अतः अनन्यत्वविशिष्टां भावनाभक्तिपदेन निर्दिशता भगवता सगुणोपासनारूपा लोके व्यवह्रियमाणा द्वन्द्वमूला भक्तिर्निर्दिष्टा। निर्गुणपरत्वात् पूर्वश्लोकयोः, ज्ञानवाच्यत्वेनैव भक्तिपदमत्र प्रयुक्तमिति हेतोः, भक्तिरेव ज्ञानं यदा सा भक्तिः अनन्यत्वविशिष्टा इति सिद्ध्यति। भक्तिरेव कर्मयोगसब्रह्मचारिणी चित्तशुद्धिद्वारा ज्ञानोपकारिणी यदा सा सेव्यसेवकभावनारूपा सगुणोपासना। यस्मात् अभ्यासवशात् श्रवणमात्रेण भक्तिशब्दस्य उपासनापरोऽर्थो मनसि स्फुरति स एव अभ्यासः, ज्ञानपरत्वेन तस्य व्याख्याने श्रुते क्लिष्टता प्रतीतिमुत्पादयति। किन्तु नास्ति तादृशो निर्बन्धः येन भक्तिशब्दः सर्वदा उपासनापरे अर्थ एव प्रयोक्तव्य इति। भाषायाः इतिहासे कस्यचन शब्दस्य अर्थबोधविषये सङ्कोचविकासौ साधारणतया अनुभूयेते। वल्लभचैतन्यादीनां

---

१. गी०, ८. २०, २१.

कालादनन्तरं भक्तिशब्दस्य अर्थबोधे उपासनामात्रपरः सङ्कोचः समभूदित्यूह्यम्। 'ज्ञेयं यत् तत् प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते' इति त्रयोदशाध्याये अन्यत्र बहुत्रापि भक्तिशब्दनिर्देशं विनैव ज्ञानात् मोक्षप्राप्तिरिति निश्चप्रचं भगवता प्रतिपादितत्वात् पौर्वापर्यानुगुणं प्रकृतश्लोकस्य व्याख्यानावसरे अनन्यत्वविशेषणस्य सार्थक्यलब्ध्यै ज्ञानपरत्वेनैव भक्तिशब्दः प्रयुक्त इति व्याख्याने क्लिष्टत्वगन्धोऽपि नास्ति।

अष्टादशाध्याये 'सिद्धिं प्राप्तो यथा ब्रह्म' इत्यारभ्य ज्ञानस्य परा निष्ठा वर्णिता। श्लोकचतुष्टयेन ब्रह्मीभूतस्य अवस्थां निरूप्य 'समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्' इति समुपसंहरन् भक्तिशब्दं प्रयुङ्क्ते। शब्दादिविषयत्यागेन रागद्वेषसुखदुःखादिद्वन्द्वसमूहनाशात् वैराग्यं समुपलभ्य, ध्यानयोगमाश्रित्य, प्रकृतिकृतविकारेषु भूतसङ्घातेषु अहं ममेत्यभिमानं परित्यज्य आत्मानात्मनोः अन्योन्याध्यासं परस्परमन्योन्यधर्माध्यासं च त्यक्त्वा शान्तो यः भवति स ब्रह्मभूयाय कल्पते इति वर्णितम्। अत्र व्याख्याने शङ्करानन्देनेत्थमुक्तम्–'पूर्ववासनाबलात् अन्तःकरणं परिपूर्णमपि ब्रह्मस्वरूपमधिक्रम्य यथा प्रपञ्चं गृह्णाति तथा समाधिना वासनासङ्क्षयात् विशिष्य नामरूपाणां ग्रहणं न करोति किन्तु आभासप्रतीतिं त्यक्त्वा सर्वत्र ब्रह्मैव पश्यति इति। एवं ब्रह्मभावमापन्नः 'मद्भक्तिं लभते पराम्' इति वदता भगवता भगवदाराधनारूपा भक्तिः नैव विवक्षिता इति प्रतिभाति। 'भक्तिः ज्ञानं, ज्ञाननिष्ठापरिभावितम्' इति भगवत्पादीयव्याख्यया, यथा पूर्वमुक्तं तथा, अखण्डमपरिच्छिन्नं सर्वत्र व्याप्तम् अहमाकारज्ञानादभिन्नं तत्वं यः पश्यति तस्य तत् तादात्म्यानुभव एव भक्तिशब्देन उच्यत इति सिद्धम्। इयं व्याख्यासरणिः उत्तरश्लोके स्पष्टीकृता भगवता एव। यतः तथैव भक्त्या 'यावान् यश्चास्मि' इति भगवन्तं जानातीति वदति। अव्यक्तमहदहङ्कारादितत्कार्योपाधियोगात् निर्गुणं निष्कलं शान्तं स्वगतपरगतभेदरहितं यद् ब्रह्मतत्वं तत् यावत् परिणतिं प्राप्नोति सर्वप्रपञ्चाकारतया इति स पश्यति। तस्मिन्नेवावसरे वस्तुतः सत्यशुद्धमुक्तबुद्धस्वभावमखण्डमेकमेव नानात्वेन प्रतिभासत इति, 'यश्चास्मीति' दर्शनं च ज्ञानेनैव भवितुमर्हति न तु सामान्यया शरणागतिलक्षणया भक्त्या। जीवः परमेश्वरस्यांशोऽहं, दासोऽहं, सेवकोऽहं, रक्षणीयोऽहमिति शरणागतिरूपे भक्तियोगे दृढां श्रद्धां विधाय तं प्रपद्यते। तादृश्या श्रद्धया सृष्ट्यादिकर्तृत्वं निग्रहानुग्रहशक्तिमत्वं, शरणागतवात्सल्यं चेत्यादिसगुणस्यैव ब्रह्मणः यावान् ममाराध्य ईश्वर इति ज्ञानं प्राप्नोत्येव। यथा कश्चिन्नागरिकः स्वराज्ञः

स्वस्योपरि सर्वशक्तिमत्वमवगच्छति तथैव । किन्तु राज्ञः सर्वतोमुखं प्रभावं नृपान्तरेभ्यः तस्य तारतम्यादिकं नागरिकस्य ज्ञानगोचरं न भवति । स्वाराध्यस्य ईश्वरस्य सर्वतोमुखं ज्ञानं यदि जीवस्य स्यात् तर्हि ईश्वरविषयिण्या श्रद्धायाः एव हानिः स्यात् । अतः स्वनियन्तृत्वेन नियामकत्वेन च ईश्वरमाराधमानस्य जीवस्य कदाऽपि तद्विषयकं सम्पूर्णं ज्ञानं नोत्पद्यते नाप्यभिमतम् । यद्युत्पद्यते तादृशी अवगतिः तदेव प्रमाणं यत् सः न केवलम् ईश्वरस्य आराधकः किन्तु स्वयमेव ईश्वर इति । तस्य विषये चित्तशुद्धेः सम्पादनात् प्राक् आराधकत्वदशायां यो भक्तिशब्दः प्रयुक्तः स एव शब्दः यदि अपरोक्षानुभवानन्तरमपि प्रयुज्यते येन यावान् यश्चास्ति परमात्मा इति स पश्यति, सा भक्तिः नैव पूर्वावस्थायां निर्दिष्टा भक्तिः भवितुमर्हति । सा ज्ञानस्यैव अपरपर्यायित्वेन प्रयुज्यत इति बोद्धव्यम् । प्रकृते श्लोके भक्तिशब्देन निर्विकल्पज्ञानमेव विवक्षितम् अन्यथा पूर्वापरवैरुद्ध्यप्रसङ्गः स्यात् ।

उपर्युक्ताभ्यामुदाहरणाभ्यां स्थालीपुलाकन्यायेन प्रो० मैनकरप्रभृतिभिः शाङ्करभाष्ये य आक्षेपः कृतः स न युक्तियुक्त इति निरूपितम् । एवमेव अन्यत्राऽपि गीतावाक्यानां व्युत्पादनविषये पूर्वापरसामञ्जस्यम् इतरभाष्येभ्यः शाङ्करे भाष्ये एव स्पष्टतया दृश्यते । अद्वैतसिद्धान्त एव गीतायाः परमं तात्पर्यमिति अनुमित्यै सन्त्यन्येऽपि हेतवः । अन्ते अद्वैतसिद्धान्त एव गीतायाः परमं तात्पर्यमिति निरूपयितुं कुम्भकोणस्थ-अद्वैतसभायाः सुवर्णमहोत्सवावसरे प्रकाशितायाम् अद्वैताक्षरमालिकायां श्रीवेङ्कटरामशास्त्रिभिः विस्तरेण निरूपितानामाशयानां सारांशः दीयते —

(१) अद्वैतसिद्धान्तस्य मूलभूतमध्यासतत्वं भगवत्पादैः व्याससूत्राणां भाष्यारम्भ एव प्रपञ्चितम् । अध्यासवादेनैव न केवलं देहात्मनोर्विवेकः किन्तु ब्रह्मणि जगतः अध्यस्तत्वं, जगतः मिथ्यात्वेऽपि प्रातिभासिकसत्तात्वं, ब्रह्मणः सर्वोपादानत्वेन आत्मनः नानात्वे दृश्यमानेऽपि तयोरभिन्नत्वं च साधितम् । 'अशोच्यानन्वशोचस्त्वम्'; 'नत्वेवाहं जातु नासम्' इति श्लोकाभ्याम् अध्यासतत्वं निरूप्यते । सदसतोरात्मानात्मनोः अन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्य शोकमोहोपहतः पार्थः स्वदेहे अहंबुद्ध्या गुरुपितृभ्रातृषु ममकारेण च शोचतीति अध्यासतत्वमेव प्रतिपादितम् ।

(२) अनात्मनः आगमापायित्वमसत्वं च निरूपयता भगवता अद्वैताभिमतं जगन्मिथ्यात्वमङ्गीकृतं भाति । प्रपञ्चस्य असतः सदिव प्रतीयमानत्वं

निषेधितं न तु जगतः निस्वरूपत्वं विवक्षितम् न वा तस्योपादानभूत-ब्रह्माधारत्वं निषिध्यते । निस्वरूपत्वे निषेधस्यैव प्रसक्तिर्न स्यात् । असद्विलक्षणत्वेन प्रतीयमानस्य परन्तु असतः प्रपञ्चस्य सदसद्विल-क्षणत्वमेव गीतायाम् अभिप्रेतमिति प्रतिभाति । इदमपि अद्वैतिनाम् अभिमतमेव ।

(३) 'अव्यक्तादीनि भूतानि' इति श्लोकेन भूतजातं देहादिसङ्घातरूपं त्रिकालाबाध्यं न भवतीति निरूप्य, तस्मात् विलक्षणं त्रिकालाबाध्यम् आत्मतत्वमिति वर्णितम् । भिन्नभिन्नयोनिषु नानात्वेन परिदृश्य-मानस्य आत्मनः एकत्वं यद् अद्वैतिभिराद्रियते तदेव 'अन्तवन्त इमे देहाः नित्यस्योक्ताः शरीरिणः' इति षष्ठ्यन्तशरीरिशब्दघटितैकवचनेन द्योत्यते स एवाभिप्रायः 'क्षेत्रज्ञं चाऽपि मां विद्धि सर्वक्षेत्रेषु' इत्यत्राऽपि सूचितः ।

(४) वेदान्तेषु प्रायशः एकविज्ञानेन सर्वविज्ञानं भवतीति प्रतिज्ञा दृश्यते । अद्वैतमते प्रकृतिविकारन्यायेन ब्रह्मणि विदिते सर्वं विदितं भवतीति ब्रह्मात्मकत्वं सर्वस्यापि निरूप्यते । गीतायाः सप्तमाध्यायेऽपि 'यत् ज्ञात्वा नेह भूयोऽन्यत् ज्ञातव्यमवशिष्यते' इति वाक्येन सैव प्रतिज्ञा कृता; सर्वस्य प्रपञ्चस्य ब्रह्मकार्यत्वेन जीवस्य च ब्रह्मस्वरूपत्वेन 'वासुदेवः सर्वमिति' इति तस्य विज्ञानस्य प्रशंसा च कृता । 'ब्रह्मैवेदं सर्वम्'; 'आत्मैवेदं सर्वम्' इत्यादिश्रुत्युक्तसाक्षात्काररूपे ज्ञाने उदिते एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा पालिता च भवति ।

(५) क्षेत्रक्षेत्रज्ञप्रकरणे तयोः स्वरूपादिकं वक्ष्यामीति प्रतिज्ञाय 'अनादिमत् परं ब्रह्म न सत् तन्नासदुच्यते' इति क्षेत्रज्ञो निरूप्यते । 'सर्वतः पाणि-पादम्' इत्यादिश्लोकेन तस्य औपाधिकलक्षणमपि चोच्यते । सोपाधिक-निरुपाधिकत्वाभ्यां पृथक्तया दृश्यमानं तत्वद्वयं वस्तुत एकमेवेति निदर्शयितुं पर्यायेण सगुणनिर्गुणपरैः पदविन्यासैः साकूतं सूचयति भगवान् । यथा—'सर्वेन्द्रियगुणाभासम् सर्वेन्द्रियविवर्जितम् असक्तं गुणभृत् चैव निर्गुणं गुणभोक्तृ च' इति । एवमेव 'अविभक्तं च भूतेषु' इति प्रथमपादेन क्षेत्रज्ञस्य वस्तुतः एकत्वं प्रतिपाद्य, उपाधिभेदेन नैक-मिव प्रतीयत इति 'विभक्तमिव च स्थितम्' इति द्वितीयपादेन वर्ण-यति । 'मद्भक्त एतत् विज्ञाय मद्भावायोपपद्यते' इति एतत् विज्ञा-

नात् ब्रह्मभावप्राप्तिः मोक्ष इति उपसंहृतम् । क्षेत्रज्ञस्य एकत्वं, तस्य औपाधिकत्वेन भेदः स्वभावतोऽभेदः ब्रह्मत्वं तद्विज्ञानात् मोक्ष इति अद्वैताभिमतमखिलमत्र प्रकरणे अन्तर्भूतं दृश्यते ।

(६) 'यथा भूतपृथग्भावमेकस्थमनुपश्यति' इति श्लोके 'एकस्थं' इति पदस्य एकस्मिन् ब्रह्मणि अज्ञानवशेन कल्पितत्वेन स्थितमित्यर्थकल्पनमेव समीचीनतरं भाति ।

(७) 'अनादिमत् परं ब्रह्म न सत् तन्नासदुच्यते' इति श्लोकेन निर्गुणं कार्यं कारणातीतं वर्ण्यते । 'देवी ह्येषा गुणमयी मम माया दुरत्यया' इति सत्वरजस्तमोगुणात्मिका अनिर्वाच्या मायाशक्तिर्निरूप्यते । देवसम्बन्धित्वात् दैवी दीव्यत इति हेतोः स्वयं प्रकाशभूतचित्सम्बन्धः तस्याः मायायाः सा च 'मम माया' इति सम्बन्धषष्ठीविशेषणेन व्यपदिष्टा । सम्बन्धोऽपि आश्रयाश्रयिभावः, विषय-विषयि-भाव इति द्विप्रकारकः । 'एषा' इति निर्देशेन सा माया प्रत्यक्षप्रमाणसिद्धेति द्योत्यते । 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि' इति मायायाः अनादित्वमप्युक्तम् । स्वप्रकाशकं चिद्रूपं ब्रह्म अज्ञानरूपमायायाः आश्रयत्वात् तस्याः विक्षेपशक्त्या प्रपञ्चाकारप्रतीतिं जनयति । मायया आवृते ब्रह्मणि आवरणशक्तिबलेन अपहृतनित्यशुद्धबुद्धमुक्तस्वभावः आत्मानं दुःखिनं जानाति । 'मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम्' इति अज्ञानेनावृतं ज्ञानम् इत्यादिभिः मायायाः आवरणकार्यं च स्पष्टीक्रियते ।

(८) अज्ञानं ब्रह्मनिष्ठं न भवितुमर्हति जीवनिष्ठमेवेति हेतोः द्वैतिनः जीवब्रह्मणोरेकत्वं नाङ्गीकुर्वन्ति । 'ज्ञानेन च तदज्ञानं येषां नाशितमात्मनः' इति श्लोकेन ज्ञानं ब्रह्मनिष्ठमेव भवितुमर्हति, आवृतत्वं च ब्रह्मण एव, ज्ञानेन अज्ञानस्य नाशोऽवश्यमभ्युपगन्तव्य इति च सिद्ध्यति । ज्ञानं यदि ब्रह्मनिष्ठं तर्हि तन्नाश्यमज्ञानमपि तत्रैव स्यात् । अत एव ज्ञानावरणत्वेन अज्ञानं व्यपदिश्यते ।

(९) व्यवहारदशायां अज्ञानेन सर्वविधा भेदाः, पारमार्थिकदशायां भेद-वर्जितमात्मतत्वं च अद्वैतिनामभिमतम् । 'न च मत्स्थानि भूतानि', 'मत्स्थानि सर्वभूतानि' इति वाक्ययोः विरोधाभासः व्यावहारिक-पारमार्थिकयोरभ्युपगमेन परिहृतो भवति । कल्पितत्वेन यो भूतपृथ-

ग्भाव एकैकस्मिन्नेव आत्मनि स्थित इति अद्वैताभिमतमेवोच्यते, 'यदा भूतपृथक्भावमेकस्थमनुपश्यति' इति वाक्येन ।

(१०) शास्त्राचार्योपदेशाभ्याम् उपादानभूते ब्रह्मणि कल्पितस्य पार्थक्यस्य ब्रह्मव्यतिरिक्तम् अस्तित्वं न विद्यत इति साक्षात्कारेण उपाधयः तत् हेतुभूतेन अज्ञानेन सह नश्यन्ति, ब्रह्मैव अवशिष्यते । तदेव जीवन्मुक्तिरिति अद्वैतिभिः कथ्यते । 'अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनां', 'इहैव तैर्जितः सर्गः' इत्यादिभिरनेकैः वाक्यैः जीवन्मुक्तिः गीताचार्येण अङ्गीकृता इति भाति । ब्रह्मत्वसाक्षात्कारात् मुक्तिः, भूतपृथग्भावस्य एकस्थत्वदर्शनेन अद्वितीयात्मतत्वस्य औपाधिकभेदेन नानात्वाधिष्ठानत्वम् इति सर्वेषाम् अद्वैतमतस्य भौतिकानां तत्वानां प्रामाण्यं गीतावाक्येषु उपलभ्यते ।

(११) भक्तिकर्मयोगयोः ज्ञानसाधनत्वं ज्ञानस्यैव साक्षात् मोक्षसाधनत्वं च गीतावाक्ये सिद्ध्यति । 'नहि ज्ञानेन सदृशं पवित्रमिह विद्यते', 'ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा' इत्यादिभिः नैकैर्वाक्यैः भक्तिकर्मणोः परम्परासाधनत्वं ज्ञानस्य साक्षात् साधनत्वं च प्रतिपादितम् ।

(१२) अन्ततः ब्रह्मभावेनावस्थितिरेव मोक्षः; न तत्र नूतनं किञ्चित्प्राप्यते न वा लोकान्तरादि गम्यते; स्वरूपेण अवस्थीयते इति अद्वैताभिमतं मोक्षस्वरूपं 'मद्भावायोपकल्पते', 'ब्रह्मभूयाय कल्पते' 'ब्रह्म सम्पद्यते' इत्यादिवचनैर्निरूपितम् । वैकुण्ठप्राप्त्यादिमतान्तरोपवर्णितो मोक्षः गीतावाक्यबलेन न सिद्ध्यति ।

## द्वितीयाध्याय:

| श्लो० पाद: | प्रयुक्त: शब्द: | शाङ्करभाष्यम् (शा० भा०) | रामानुजभाष्यम् (रा० भा०) | माध्वभाष्यम् गीतातात्पर्यविवृति: (मा० भा० । गी० वि०) | अन्येषां विशेषवक्तव्यम् |
|---|---|---|---|---|---|
| ११ द्वि० | प्रज्ञावादान् | बुद्धिमतां वचनानि | देहात्मस्वभाव-प्रज्ञानिमित्तान् वादान् | स्वमनीषोत्थ-वचनानि | सदसत्पदार्थस्वरूपं विविच्य ये प्रकर्षेण जानन्ति ते प्राज्ञा:, तेषां शास्त्रमभि-व्याप्ता: वादा: आवादास्तान् (ता० बो०) |
| ११ तृ० | गतासूनगता-सूंश्च | गतप्राणान् मृतान् अगतप्रणान् जीवतश्च | देहान् आत्मनश्च | आसन्नविनाशान-गतासूंश्च | मूढा: गतासूननुशोचन्ति शास्त्रज्ञा: पुत्रा मे मूढा: इति अगतासूननुशोचन्ति (ता० बो०) |
| १६ च० | असत: | यद्विपया बुद्धिर्व्यभिचरति तदसत् तस्य | विनाशि-स्वभावस्य देहस्य | कारणस्य (अभाव: न विद्यत इति व्याख्या) | कालत्रयेऽप्य-विद्यमानस्य (त० दी०) विचारेण बाध्य- |

| | | | | | | |
|---|---|---|---|---|---|---|
| | | | | | | त्वात्पूर्वमप्यविद्यमानस्य शीतादेः सकारणस्य (भा० दी०) |
| १८ | द्वि० तृ० | नित्यस्य··· अनाशिनः | ध्वंसनाशपरिणामनाशाभ्यामसम्बद्धस्य (पृथिव्यादिवन्नित्यत्वशंकावारणाय) | एकरूपस्य अनुपचयात्मकस्य | नैमित्तिकनाशवारणाय (शरीरिण इति ईश्वरव्यावृत्तये) | देहिनः अधिष्ठानत्वज्ञानानिवर्त्यस्य अपरिच्छिन्नस्य इति (ब्र० गि०) |
| २० | तृ० | पुराणः | पुरापि नवः, वृद्ध्याख्या विक्रिया प्रतिषिद्ध्यते | सर्वदा अपूर्ववदनुभाव्यः | पुरं देहमणतीति पुराणः | निरवयवत्वेनाऽयं पुराप्यधुना च सर्वदा नवत्वात् पुराण इति वृद्धिलक्षणस्तृतीयो विकारो निरस्तः (ता०बो०) |
| २४ | तृ० | नित्यः | यस्यमादन्योन्यनाशहेतूनि भूतानि एनमात्मानं नाशयितुं नोत्सहन्ते तस्मान्नित्यः | शस्त्राग्न्यादयः आत्मानं | सर्वगतत्वविशेषणम् | कार्यत्वव्यावृत्यर्थं नित्य इति (त० दी०) सर्वैर्विशेषणैरखण्डैकरसस्यैव वस्तुनो लक्ष्यत्वात् नित्यत्वादिभिरुत्पाद्यत्वादिकं निराक्रियते ((भा० भा० दी०) |

| २८ प्र० | अव्यक्तादीनि | अदर्शनमनुपलब्धिः आदिर्येषाम् | अनुपलब्धपूर्वावस्थानि | ———— | अक्षरमादिरुत्पत्तिर्येषां तानि (अ० त०)। नामरूपगुणादिभिर्न व्यज्यत इत्यव्यक्तं माया तस्याः सकाशादादिर्जन्म येषाम् (ता० बो०) |
|---|---|---|---|---|---|
| ३९ प्र० | सांख्ये | परमार्थवस्तुविवेकविषये | संख्याबुद्धिः, बुद्ध्याऽवधारणीयमात्मतत्वं सांख्यं, तस्मिन् | ज्ञानम् | सम्यक् ख्यायते सर्वोपाधिशून्यतया प्रतिपाद्यते परमात्मतत्वमनयेति सांख्योपनिषत्तयैव तात्पर्यपरिसमाप्त्या प्रतिपाद्यते यः स सांख्यः औपनिषदः पुरुषः, तस्मिन् बुद्धिः, तन्मात्रविषयं ज्ञानम् (गू० दी०) |
| ३९ द्वि० | योगे | तत्प्राप्त्युपाये कर्मयोगे कर्मानुष्ठाने समाधियोगे च। | मोक्षसाधनभूतकर्मानुष्ठाने यो बुद्धिगस्तस्मिन् | उपाये। आत्मतत्वज्ञानकारणभूते कर्मयोगे | मनोनिरोधरूपे साम्यस्थितिप्रयोजनके ईश्वरालम्बे (त० दी०) |
| ४४ च० | समाधौ | अन्तःकरणे | समाधीयतेऽस्मिन् आत्मज्ञानमिति समाधिर्मनः तस्मिन् | समाध्यर्थं, ईश्वरध्यानविषये। भगवति | योगसमाधौ (सु० बो०) समाधीयतेऽस्मिन् सर्वमिति व्युत्पत्या समाधिरन्तःकरणं |

| | | | | | |
|---|---|---|---|---|---|
| | | | | | वा परमात्मा वेति नाप्रसिद्धार्थकल्पनम् (गू० दी०) |
| ४५ प्र० | त्रैगुण्यविषयाः | त्रैगुण्यं संसारः विनयः प्रकाशयितव्यो येषां ते | सत्वरजस्तमः प्रचुराः पुरुषास्त्रैगुण्यशब्देनोच्यन्ते, तद्विषयाः | त्रिगुणजन्यानां स्वर्गादीनां प्रकाशकाः | राजसास्तामसा ,सात्विकाश्चेति त्रिविधा गुणाः त्रिगुणा रागद्वेषलोभमोहादयस्तेषां तत्कार्याणां तत्फलानां च समाहारस्त्रैगुण्यं संसारः स एव विषयः कर्म तत्साधनादिप्रकाशनद्वारा (ता० बो०) |
| ४५ द्वि० | निस्त्रैगुण्यो भव | निष्कामो भव | सत्वप्रचुरस्त्वं तदेव वर्धय, नान्योन्यसङ्कीर्णगुणत्रयप्रचुरो भव | स्वर्गादिप्रतीतिकेऽर्थे भ्रान्तिं मा कुरु | निस्त्रिगुणं मामाश्रितो भव इति (त० दी०) ऊर्ध्वगतावपि विरक्तो भव, दिव्येभ्योऽपि विषयेभ्यो विरक्तः समाधावधिक्रियत इति भावः (भा० भा० दी०) |
| ४७ तृ० | मा कर्मफलहेतुर्भूः | यदा कर्मफले तृष्णा तदा कर्मफलप्राप्तेर्हेतुः । | कर्मफलस्यापि क्षुन्निवृत्यादेः न त्वं हेतुरित्यनुसन्धेयम् | कर्मफलं तत्कृतो हेतुः यस्य सः कर्मफलहेतुः, स मा भूः । | कर्मफलं प्रवृत्तिहेतुर्यस्य स मा भूः । नित्यानामपि फलश्रवणात् तत्फलेषु मा ते अधिकारः (ता० बो०) |

| | | | | | |
|---|---|---|---|---|---|
| ४८ प्र० | योगस्थः | केवलमीश्वरार्थम् भगवत्तुष्टये | सिद्ध्यसिद्ध्योः समत्वबुद्ध्या | उपायस्थः । कर्मयोगाख्ये ज्ञानोपायेस्थः | फलस्वरूपो योगो मद्योगस्थ इति (त० दी०) । योगे ब्रह्मणि तिष्ठतीति योगस्थः समस्य भावः समत्वं तदेव ज्ञानेन युज्यत इति ,योगः (ब्रह्म)) । (ता० बो०) |
| ४८ द्वि० | सङ्गम् | ईश्वरो मे तुष्यत्विति सङ्गम् | राज्यबन्धुप्रभृतिषु सङ्गम् | फलस्नेहम् | फलतृष्णां कर्तृत्वाभिमानं चेति (भा० भा० दी०) |
| ५५ तृ० | आत्मन्येव | प्रत्यगात्मस्वरूप एव | प्रत्यगात्मस्वरूप एव | परमात्मन्येव | स्वस्वरूपानन्दे एव इति (सु० बो०) परमानन्दरूपे न त्वनात्मनि तुच्छे (गू० दी०) |
| ६१ द्वि० | युक्त आसीत | समाहितस्सन् नान्योहं वासुदेवात् इति आसीत् | समाहित आसीत् | मयि मनोयोगयुक्तः ज्ञानसमाधौ आसीत् | ब्रह्मविद्याभियुक्तः योगेन युक्तः समाहितचित्तः (ता० बो०) समाहितो निगृहीतमन्तः सन्नासीत् ,निर्व्यापारस्तिष्ठेत् (गू० दी०) |
| ६१ द्वि० | मत्परः | अहं वासुदेवः सर्वप्रत्यगात्मा परो यस्य सः, मत्परः | शुभाश्रयभूते मयि मनोऽवस्थाप्य | अहमेव परः सर्वस्मादुत्कृष्टो यस्य सः | प्रत्यगात्मा प्रधानं यस्य स (पै० भा०) अहमेव परः परमात्मेति परस्मिन्नेव ब्रह्मण्यहं धीर्यस्य (ता०बो०) |

| | | | | | |
|---|---|---|---|---|---|
| ६५ च० | पर्यवतिष्ठति (ते) | आकाशमिव परि समन्तात् अवतिष्ठते आत्मस्वरूपेणैव निश्चयात्मा भवति | मयि (भगवति) पर्यवतिष्ठते | ब्रह्मापरोक्ष्येण सम्यक् स्थितिं करोति | सुदृढ़ो भवति प्राप्याभावान्न कामोदय इति भावः (भा० भा० दी०) |
| ७० तृ० | प्रविशन्ति | अविकुर्वन्तः प्रविशन्ति, सर्वे आत्मन्येव प्रलीयन्ते | इन्द्रियगोचरतां यान्ति शब्दादिष्विन्द्रियगोचरतामापन्नेष्वनापन्नेष्वपि ... न विकारमाप्नोति । | — — — | — — — |
| ७२ प्र० | ब्राह्मी स्थितिः | ब्रह्मणि भवेयं स्थितिः सर्वं कर्म सन्यस्य ब्रह्मस्वरूपेणैव अवस्थानम् | ब्रह्मप्रापिका स्थितिः | ब्रह्मविषया स्थितिः | ब्रह्मशब्देनात्र ब्रह्मविदुच्यते तस्येयं ब्राह्मी स्थितिर्निष्ठा इति (भा० भा० दी०) ब्रह्मप्राप्तेर्नियतकारणत्वाद् ब्राह्मी ब्रह्मप्रापिका स्थितिनिष्ठा (ता० बो०) |
| ७२ च० | ब्रह्मनिर्वाणमृच्छति | ब्रह्मनिर्वृतिम्, मोक्षम् | निर्वाणमयं ब्रह्म, सुखैकतानमात्मानम् | नारायणाख्यं परं ब्रह्म | ब्रह्म ऋच्छति प्राप्नोति किं लोकान्तरवत् गतिप्राप्यं ब्रह्म ? नेत्याह निर्वाणमिति, निर्गतं वानं गमनं |

| | | | | | |
|---|---|---|---|---|---|
| | | | | | यस्मिन् प्राप्ये ब्रह्मणि इति (भा० भा० दी०)। निष्क्रियं नित्यानन्दैकरसं ब्रह्म कच्छति–मोक्षं गच्छति (ता० बो०) |

## तृतीयाध्यायः

| | | | | | |
|---|---|---|---|---|---|
| ३ तृ० | सांख्यानाम् | आत्मानात्मविषय-विवेकविज्ञानवतां ब्रह्मचर्यादेव कृत-सन्यासानां…… ब्रह्मण्येवावस्थितानाम् | सांख्या बुद्धिः तद्युक्ताः, आत्मैकविषयया बुद्ध्या युक्ताः | ज्ञानिनां सनकादीनाम् । गृहस्थादि-कर्मत्यागेन ज्ञान-निष्ठानाम् | चित्तशुद्ध्या ज्ञानभूमिकामारूढाः, सांख्याः इति (ब्र०गि०) वेदान्तैः सर्वैः सम्यक् ख्यायते तात्पर्येणा प्रतिपाद्यत इति सांख्यं निर्विशेषं परं ब्रह्म तदेव स्वात्मत्वेन ये विदुः तेषां यतीनाम् (ता० बो०) |
| ३ च० | योगिनाम् | कर्मिणां | विषयव्याकुल-बुद्धियुक्तानाम् | उपायिनां जनकादीनाम् | योगाधिकारिणाम् (त०दी०) कर्मयोगिनां गृहिणाम् (ता० बो०) |

| | | | | | |
|---|---|---|---|---|---|
| ४ प्र० | कर्मणाम् | यज्ञादीनामिह जन्मनि जन्मान्तरे वा अनुष्ठितानामुपात्तदुरितक्षयहेतुत्वेन सत्वशुद्धिद्वारा ज्ञाननिष्ठाहेतूनाम् । | निष्कामगया गोविन्दाराधनारूपाणां अनादिकालार्जितपापनाशकानां कर्मणाम् | युद्धादीनां कर्मणाम् | यज्ञादीनामिति (भा० भा० दी०) निष्कामकर्मणाम् (सु० बो०) |
| १५ प्र० | ब्रह्मोद्भवम् | ब्रह्मवेदः, स उद्भवं कारणं यस्य | प्रकृतिपरिणामरूपं शरीरं तदुद्भवम् | ब्रह्मणो जायते | ब्रह्मवेदः प्रजापतिः तस्यापि ब्रह्मतया निरूपणं ब्रह्मवादानुरोधादिति (त० दी०) |
| १५ द्वि० | अक्षरसमुद्भवम् | अक्षरं ब्रह्म परमात्मा समुद्भवो यस्य तत् | अक्षरशब्दनिर्दिष्टो जीवात्मा | अक्षराणि प्रसिद्धानि, तेभ्यो अभिव्यज्यते परं ब्रह्म (वेदप्रमाणकत्वमेवात्र विवक्षितम्) | अक्षरात्परमात्मनो निर्दोषानिर्दोषात्पुरुषनिःश्वासन्यायेन अबुद्धिपूर्वसमुद्भव आविर्भावो यस्य (गू० दी०) |
| २७ प्र० द्वि० | प्रकृतेः… गुणैः | प्रकृतिः प्रधानं सत्वरजस्तमसां साम्यावस्था, तस्याः प्रकृतेः गुणैः विकारैः कार्यकारणरूपैः | सत्वादिभिः | इन्द्रियादिभिः | प्रकृतिः कर्त्री, तद्गुणैः परिणतगुणैरिन्द्रियैः तन्निष्ठैर्वा गुणैरिति (त० दी०) |

| | | | | | |
|---|---|---|---|---|---|
| ३७ च० | इह वैरिणम् | संसारे वैरिणम् | ज्ञानयोगे विरोधिनम् | पुरुषार्थविषये वैरी | शरीरे अन्तःस्थितम् वैरिणम् । (भा०,भा० दी०) |
| ४३ प्र० | बुद्धेः परम् | परमात्मानम् | कार्मज्ञानयोगविरोधिनम् | बुद्धेः श्रेष्ठं परमात्मानम् | अवशभूतं तं कामं (त० दी०) साक्षिभूतम् (भा० दी०) |

## चतुर्थाध्यायः

| | | | | | |
|---|---|---|---|---|---|
| ६ तृ० | प्रकृतिं स्वामधिष्ठाय | वैष्णवीं मायां त्रिगुणात्मिकां वशीकृत्य | प्रकृतिः स्वभावः, स्वमेव स्वभावमधिष्ठाय | प्रकृत्या जातेषु वासुदेवादिपु तथैव तेषां जात इव प्रतीयेत्यर्थः न तु स्वतन्त्रामधिष्ठायेत्याह स्वमिति। | असाधारणस्वरूपं स्वभावं वा सच्चिदानन्दभावं...... अधिष्ठाय अपरित्यज्य (त० दी०)। मायाख्यां स्वां स्वोपाधिभूतामधिष्ठाय चिदाभासेन वशीकृत्य (गू० दी०) |
| ६ च० | आत्ममायया | आत्मनो मायया त्रिगुणात्मिकया | ज्ञानपर्यायोऽत्र मायाशब्दः आत्मीयज्ञानेन, आत्मसङ्कल्पेन | आत्मज्ञानेन प्रकृतेः पृथगभिधानात् | सर्वभवनसामर्थ्यरूपया मायया। विजातीयनिवारणाय आत्मपदम् (त० दी०)। आत्माधीना माया तया। यद्वा भानोः प्रभाववद्वह्नेर्दग्धृत्वशक्तिवत् आत्मनो ममाभिन्ना माया |

| | | | | | |
|---|---|---|---|---|---|
| | | | | | आत्ममाया न तु मद्व्यतिरिक्ता (ता० बो०)। मन्मायर्यैव मयि मनुष्यत्वादिप्रतीतिर्लोकानुग्रहाय न वस्तुवृत्येति भावः (गू०दी०) |
| १७ द्वि० | विकर्मणः | शास्त्रप्रतिषिद्धस्य कर्मणा | नित्यनैमित्तककाम्यतत्साधनद्रव्यार्जनाद्याकारेण च विविधतामपन्नं कर्म विकर्म । | निषिद्धं कर्म, बन्धकत्वात् | ——— |
| १७ तृ० | अकर्मणः | तूष्णीं भावस्य | कर्मान्तर्भूतस्य अकतृत्वविशिष्टस्य आत्मस्वरूपज्ञानस्य | कर्माकरणस्य | न कर्म-अकर्म, कर्माभावः यस्मात्कर्म न सम्भवतीति कर्मसन्यासस्तस्यापि (ता० बो०) । |
| २० द्वि० | निराश्रयः | आश्रयरहितः, यदाश्रित्य पुरुषार्थं सिसाधयिषति, दृष्टेष्टफलसाधनाश्रयरहितः । | अस्थिरप्रकृतावाश्रयबुद्धिरहितः | ——— | प्राकृताशयरहितः (त० दी०) आश्रयो देहेन्द्रियादिरद्वैतदर्शनेन निर्गतो यस्मात्सः (गू० दी०) |

| | | | | | |
|---|---|---|---|---|---|
| २४ च० | ब्रह्मकर्मसमाधिना | ब्रह्मैव कर्म ब्रह्मकर्म, तस्मिन् समाधिर्यस्य सः तेन । | सर्वं कर्म ह्यात्मकतया ब्रह्ममयमिति यः समाधत्ते, तेन । | समाधिना सह सर्वं ब्रह्मैव कर्म | समाधिना सर्वस्य ब्रह्मणि कल्पितत्वं पश्यता (भा० भा० दी०) । सर्वस्य ब्रह्ममात्रत्वदर्शनं यत्तद् ब्रह्मकर्म । तस्मिन् चित्तस्य स्थापनं समाधिः यस्य तेन (ता० बो०)। ब्रह्मकर्मसमाधिनेत्येकं वा पदम् । पूर्वं ब्रह्मपदं हुतमित्यनेन सम्बध्यते, चरमं गन्तव्यपदेनेति भिन्नं वा पदम् (गू० दी०) |
| ३७ तृ० | सर्वकर्माणि | यान्यप्रवृत्तफलानि ज्ञानोत्पत्तेः प्राक् तानि ज्ञानसहभावीनि च अतीतानेकजन्मकृतानि कर्माणि (प्रारब्धेतराणि) | अनादिकालप्रवृत्तमनन्तकर्मसञ्चयम् | प्रारब्धेतरकर्माणि | यथा भुक्तेः पूर्वभाविनः पश्चाद्भाविनोप्यन्नस्य त्याग उपपद्यते न तथा भुक्तान्नस्य प्रवृत्तफलत्वात्तथैवारब्धकर्मणोऽपि (ता० बो०) |
| ४१ प्र० | योगसन्यस्तकर्मणाम् | परमार्थदर्शनलक्षणेन योगेन सन्यस्तानि कर्माणि धर्माधर्मा- | ज्ञानकारतापन्नकर्मणाम् | फलत्यागेन सन्यस्तानि त्यक्तानि कर्मणि येन | वाह्यतः क्रियानिष्ठमपि अन्तः सन्यस्तकर्माणमन्तः कर्मसम्बन्धशून्यम् |

| | | | | | |
|---|---|---|---|---|---|
| | | ख्यानि येन तम् । | | तम् । | (त० दी०) । सर्वस्य जगतः स्वस्य च ब्रह्ममात्रत्वदर्शनं योगः तेन संन्यस्तानि विश्लेषितानि सम्यङ्नितरामस्तानि ब्रह्मणि ब्रह्मात्मना लयं गतानि वा कर्माणि संचितान्यागामीनि च सर्वाणि यस्य तम् । (ता० बो०) |

पञ्चमोऽध्यायः

| | | | | | |
|---|---|---|---|---|---|
| ५ द्वि० | योगरपि गम्यते | परमार्थज्ञानं सन्पासप्राप्तिद्वारेण गम्यते । | कर्मयोगनिष्ठैरपि प्राप्यते | योगभिरपि ज्ञानद्वारा ज्ञानफलं प्राप्यते | कर्म कुर्वद्भिरपि तत्प्राप्यते स्वातन्त्र्येण फलदत्वात् (त० दी०) |
| ७ तृ० | सर्वभूतात्मभूतात्मा | सर्वेषां ब्रह्मादीनां स्तम्बपर्यन्तानां भूतानामात्मभूत आत्मा प्रत्यक्चेतनो यस्य सः । | सर्वेषां देवादिभूतानामात्मभूत आत्मा यस्यासौ । ज्ञानाकारतया आत्मनां समानत्वं यः पश्यति । | ब्रह्मादिसमस्तप्रपञ्चस्य य ईश्वर आत्मा स एव निजात्मा इति यो जानाति । | अत्र मधुसूदनसरस्वत्याः नीलकण्ठस्य च व्याख्याने यथावदुद्धृते ।[1] |

१. मधुसूदनसरस्वती–सर्वभूत आत्मभूतश्चात्मा स्वरूपं यस्य स तथा । जडाजडात्मकं सर्वमात्ममात्रं पश्यन्नित्यर्थः (गू०दी०) ।

| | | | | | |
|---|---|---|---|---|---|
| १० प्र० | ब्रह्मण्याधाय | ईश्वरे निक्षिप्य | ब्रह्मशब्देन प्रकृतिरिहोच्यते । इन्द्रियाणां प्रकृतिपरिणामविशेषरूपत्वेन इन्द्रियाकारेणावस्थितायां प्रकृतौ आधाय | ——— | ब्रह्मपदं ब्रह्म यज्ञविषयबोधम् । तत्रैव चानुसन्धाय । क्रियाद्वैतभावः उक्तः (त०दी०) । ब्रह्मणि सगुणे मयि परमेश्वरे (सर्वाणि कर्माणि) आधाय (ता० बो०) |
| १४ च० | स्वभावः | स्वो भावः स्वभावोऽविद्यालक्षणा प्रकृतिर्माया | प्रकृतिवासना । विविधदेवद्याकारप्रकृतिसंसर्गकृततत्तदात्माभिमानजनितवासना । | स्वतन्त्रः सन् सर्वस्य कर्ता ईश्वरः | अज्ञानात्मिका देवी माया प्रकृतिः (गू० दी०) |
| १८ च० | समदर्शिनः | सत्वादिगुणैः तज्जैश्च संस्कारै- | विषमाकारास्तु प्रकृतेर्नात्मनः, | परमेश्वरस्वरूपाणां सर्वत्र साम्य- | विषमेषु गवादिष्वपि समं ब्रह्म द्रष्टुं शीलं येषां ते (त० दी०) |

---

नीलकण्ठः—स्वयं च सर्वभूत आत्मभूतश्चात्मा यस्येति विग्रहो दर्शितः (मधुसूदनसरस्वतीभिः) तत्र सङ्कोचे कारणाभावात् सर्वपदेनैव चिज्जडयोर्ग्रहे परस्याप्यात्मभूतेत्यधिकमेव सर्वभूतश्चेतनाचेतनप्रपञ्चभूत आत्मा यस्येति तत्रापीष्टार्थलाभात् । सर्वं च आत्मनश्च तद्भूत आत्मा यस्येति विगृह्य सर्वात्मभूतात्मा इत्येतावतैव सिद्धे प्रथमभूतपदस्य वैयर्थ्यं च । भाष्यमते ब्रह्मादीनां प्रत्यग्भूत आत्मा यस्येति श्रुत्यैव जीवेशाभेद उच्यते, परस्य तु उपादानत्वलिङ्गेन जडसाधारण्येन जीवस्य ब्रह्माभेदोऽवगम्य इति विदद्भिरविनयः क्षन्तव्यः । (भा० भा० दी०)

| | | | | | |
|---|---|---|---|---|---|
| | | रत्यन्तमेवास्पृष्टं सममेकमविक्रियं ब्रह्म द्रष्टुं शीलं येषां ते | आत्मा सर्वत्र ज्ञानैकाकारतया सम इति पश्यन्तः | | |
| १९ प्र० | इहैव | जीवद्भिरेव | साधनानुष्ठान-दशायामेव | ——— | इह शब्दस्य लोकपरत्वादपि स्वावस्थाविशेषपरत्वमेवो-चितमिति भावः (ता० च०)। |
| १९ तृ० | समं | नापि स्वगुणभेदभि-न्नं निर्गुणत्वा-च्चैतन्यस्य | प्रकृतिसंसर्गदोष-वियुक्तया सममात्म-वस्तु। | कल्याणगुणाः, दोष-राहित्यमित्यनयोः समः | सच्चिदानन्दमात्रमेकरसं सदै-कस्वभावमेव भवति समर-सत्वाल्लवणपिण्डवदित्यादि-युक्तिभिश्च (ता०बो०) |
| २१ तृ० | ब्रह्मयोग-युक्तात्मा | ब्रह्मणि योगः समाधिर्ब्रह्मयोगः तेन युक्तः समाहितः तस्मिन् व्यापृत आत्मा-न्तःकरणं यस्य | प्रकृत्यभ्यासं विहाय ब्रह्माभ्यासयुक्तमनाः | ब्रह्मविषयो योगो ब्रह्मयोगः ध्यानादि-युक्तः | युक्तस्तदैक्यं प्राप्त आत्मा ब्रह्माणि योगेन यस्य तथा-भूतः (त० दी०) |
| २३ प्र० | इहैव प्राक् शरीरविमो-क्षणात् | जीवन्नेव आमरणात् पूर्वम् | साधनानुष्ठान-दशायामेव | यथा मनुष्यशरीरे सोढुं सुशकः तथा नान्यत्रेति भावः। | |

| | | | | | |
|---|---|---|---|---|---|
| २४ च० | ब्रह्मभूतः | इह जीवन्नेव ब्रह्मभूतः | योगी | ब्रह्मनिष्ठां गतः ब्रह्मणि भूतः | जीवन्नेव ब्रह्मदर्शने ब्रह्मभावं गतः (भा० भा० दी०) निःशेषतया देहात्मभावं परित्यज्य ब्रह्मण्येवात्मभावं गतः सन् (ता० बो०) |
| २६ तृ० | अभितो ब्रह्मनिर्वाणम् | उभयतो जीवतां मृतानां च मोक्षः | हस्तस्थं ब्रह्म-निर्वाणम् | सर्वतः सर्वकालेषु सर्वत्र ब्रह्मतयैव प्रतीयते | उभयतः मृतानां जीवतां च ब्रह्मानन्दः। |
| | | | **षष्ठोध्यायः** | | |
| २ द्वि० | योगम् | कर्मानुष्ठानलक्षणं परमार्थसन्यासम् | कर्मयोगम् | कामसङ्कल्पादिपरि-त्यागम्। ध्यानयोग-कारणं कामक्रोधादि-त्यागेनानुष्ठितं कर्म-योगान्तर्गतम्। | ध्यानयोगं (भा०भा० दी०)। फलतृष्णाकर्तृत्वाभिमानयोः परित्यागेन विहितकर्मानु-ष्ठानम् (गू० दी०) |
| ३ प्र० | योगमारुरुक्षोः | योगमारोढुमि-च्छतोऽनारूढस्य ध्यानयोगेऽव-स्थातुमशक्त-स्यैवेत्यर्थः | आत्मावलोकनं प्राप्तुमिच्छोः | उपायसम्पूर्ति-मिच्छोः | आत्मसंयमनं पदमारुरुक्षोः (त० दी०)। योगं सम्यग्द-र्शननिष्ठामारुरुक्षोः मुक्त्यै ज्ञानयोगं प्राप्तुमिच्छां कुर्वतो (त० बो०) |

| | | | | | |
|---|---|---|---|---|---|
| ७ द्वि० | परमात्मा समाहितः | साक्षादात्मभावेन वर्तते इत्यर्थः | मनसि सम्यगाहितः स्वरूपेणावस्थितः प्रत्यगात्माऽत्र परमात्मेत्युच्यते, तस्यैव प्रकृतत्वात् । तस्यापि पूर्वपूर्वापेक्षया परमात्मत्वात् । | परमात्मा सम्यगाहितो हृदि सन्निहितो भवति अपरोक्षज्ञानी भवति | तस्य परं केवलमात्मा समाहितो भवति । परमात्मा अन्तर्यामीव समाधिगतो भवति (त० दी०)। परं ब्रह्म सम्यगाहितः विपरीतप्रत्ययनिर्मुक्तो भूत्वा वहिरन्तः सर्वत्र चक्षुषो रूपमिव बुद्धिवृत्तेः स्वयमेव विषयो भवतीत्यर्थ (ता० बो०) । आत्मा परमुत्कर्षेण समाहितो भवति (भा० भा० दी०) |
| ८ प्र० | ज्ञानविज्ञानतृप्तात्मा | शास्त्रज्ञानस्वानुभवाभ्यां संजातालं प्रत्यय आत्मा अन्तःकरणं यस्य सः | आत्मस्वरूपविषयेण ज्ञानेन तस्य च प्रकृतिविसजातीयाकारविषयेण विज्ञानेन च तृप्तमनाः | विज्ञानं विशेषज्ञानमपरोक्षज्ञानं वा । ज्ञानं च भगवत्स्वरूपज्ञानमथवा भगवद्विषयकश्रवणमननादिजन्यज्ञानम् । भगवन्महिमावगतिर्ज्ञानम् । अथवा | ज्ञानमौपदेशिकं विज्ञानमपरोक्षानुभवः ताभ्यां तृप्त तृप्त आत्मा यस्य सः (त० दी०) |

| | | | | | |
|---|---|---|---|---|---|
| | | | | भगवद्विषयश्रवणमननादिलब्धं भगवद्दर्शनम् । वेदेभ्यः भगवतः सर्वोत्तमत्वावगतिः ज्ञानं, वेदेभ्यस्तन्महिमावगतिर्विज्ञानम् । | |
| ८ द्वि० | कूटस्थः | अप्रकम्प्यः | देवाद्यवस्थास्वनुवर्तमानः सर्वसाधारणज्ञानैकाकारात्मनि स्थितः । | निर्विकारः कूटवत्स्थित इति व्युत्पत्तेः । कूटमाकाशः । | विषयसन्निधावपि निर्विकारः (ब्र० गि०) । विषयसन्निधावपि विकारशून्यः (गू० दी०) |
| १२ च० | आत्मविशुद्धये | अन्तःकरणस्य विशुद्ध्यर्थम् | बन्धनिवृत्तये | ——— | एकाग्रताविवृद्ध्यर्थम् (गू०दी०) |
| २३ प्र० द्वि० | दुःखसंयोगवियोगं योगसंज्ञितम् | दुःखैः संयोगः दुःखसंयोगः, तेन वियोगो दुःखसंयोगवियोगः तं योग इत्येव संज्ञितं विपरीतलक्षणेन | दुःखसंयोगप्रत्यनीकाकारं योगशब्दाभिधेयं ज्ञानम् | दुःखसंयोगो येन वियुज्यते स दुःखसंयोगवियोगः । न केवलमुत्पन्नं दुखं नाशयति उत्पत्तिमेव निवारयतीति संयोगशब्देन दर्शयति । | अत्र दुःखशब्देन तदनुबन्धिवैषयिकं सुखं च गृह्यते । दुःखानामाध्यात्मिकादीनां सुखानां च संयोगः संसर्गस्तेन वियोगो यस्य सः अप्रकाशितबाह्यसुखदुःखप्रत्ययो योऽन्तःकरणस्थितिविशेषस्तम् (ता० बो०) |

| | | | | | |
|---|---|---|---|---|---|
| २५ तृ० | आत्मसंस्थम् | आत्मैव सर्वं, न ततोऽन्यत्किञ्चिदस्ति इत्येवमात्मसंस्थम् | सर्वस्मादात्मव्यतिरिक्तादुपरम्य आत्मसंस्थम् | परमात्मसंस्थम् | निरुपाधिके त्वंपदलक्ष्ये प्रत्यक्‌चैतन्ये संस्था समाप्तिर्यस्य तदात्मसंस्थं सर्वाकारवृत्तिरहितम् (ब्र० गि०)। आत्मनि निरुपाधिके प्रतीचि संस्था समाप्तिर्यस्य, सर्वप्रकारवृत्तिशून्यम् (गू० दी०) |
| २७ च० | ब्रह्मभूतम् | जीवन्मुक्तम्। 'ब्रह्मैव सर्वम्' इत्येवं निश्चयवन्तम् | स्वरूपेणावस्थितम् | ब्रह्मध्याने निष्ठम् | सद्वस्तुरूपम् (भा० भा० दी०) ब्रह्मैवाहमित्युपाधिकृतपरिच्छित्ति परित्यज्य पूर्णात्मनैव स्थितम् (ता० बो०) |
| २९ द्वि० | सर्वभूतानि चात्मनि | ब्रह्मादीनि स्तम्बपर्यन्तानि च सर्वभूतान्यात्मन्येकतां गतानि | स्वात्मसमानाकाराणि सर्वभूतानि | सर्वभूतानि परमेश्वरे | सर्वभूतानि च स्वात्मनि अवस्थानेन कार्यकारणवस्त्वैक्यदर्शनेन वा (त० दी०) |
| २९ च० | समदर्शनः | समं निर्विषयं ब्रह्मात्मैकत्वविशेषं दर्शनं ज्ञानं यस्य सः | एकस्मिन्नात्मनि दृष्टे सर्वस्यात्मवस्तुनः तत्सा- | परमेश्वरं चतुर्मुखब्रह्मतृणादावैश्वर्यादिना साम्येन | आनन्दांशाविर्भावे भगवदात्मकत्वेन तस्य व्यापकत्वं प्रकटीभवति (त० दी०)। |

| | | | | | |
|---|---|---|---|---|---|
| | | | म्यात् सर्वभूतात्म-वस्तु दृष्टं भवति । | पश्यति । | |
| ३१ ढि० | एकत्वमास्थितः | सर्वात्मैकत्वदर्शी | असंकुचितज्ञानैकाकर-तया एकत्वमास्थितः | सर्वत्र एक एवेश्वर इति स्थितः । | ईश्वरं त्वंपदलक्ष्यैणैकत्वमास्थितः । (ब्र० गि०) |
| ४४ ढि० | ह्रियते ह्यवशोऽपि सः | तेन न कृतं चेद्योगाभ्याससंस्कारात् बलवत्तरमधर्मादिलक्षणं कर्म तदा योगाभ्यासजनितसंस्कारेण ह्रियते । अधर्मश्चेद्बलवत्तरः कृतः तेन योगजोऽपि संस्कारोऽभिभूयत एव । तत्क्षये तु योगजः संस्कारः स्वयमेव कार्यमारभते । | अवशोऽपि योग एव ह्रियते | —— | कुतश्चिदन्तरायादनिच्छन्नपि ह्रियते विषयेभ्यः परावृत्य योगनिष्ठः क्रियते (त० दी०)। परतन्त्र एव किल तेन पूर्वाभ्यासेन बलादेव योगाभ्यासं प्रति नीयते (गी० सं०) |
| ४४ च० | शब्दब्रह्मातिवर्तते | वेदोक्तकर्मानुष्ठानफलमतिवर्ततेऽपाकरिष्यति | देवमनुष्यपृथिव्यन्तरिक्षस्वर्गादिशब्दाभिलापयोग्यं ब्रह्म प्रकृतिः । | परं ब्रह्म प्राप्नोति | कर्माधिकारातिक्रमेण ज्ञानाधिकारी भवति (ब्र० गि०)। वेदोपदेशं तत्प्रतिपाद्यं कर्मं चातिवर्तते । वेदं वेदोक्तं |

| | | | | | |
|---|---|---|---|---|---|
| | | | प्रकृतिबन्धाद्विमुक्तो देवमनुष्यादिशब्दाभिलापानर्हज्ञानानन्दैकतानमात्मानं प्राप्नोति | | कर्म च सर्वं सन्यस्य श्रवणादावेव प्रवर्तते (ता० बो०) |

सप्तमोऽध्यायः

| | | | | | |
|---|---|---|---|---|---|
| १ द्वि० | योगं युञ्जन् | मनस्समाधानं कुर्वन् | मद्योगं युञ्जन् (योगोपकारकं भजनीयविषयतत्वज्ञानमिहोच्यते न तु योगस्य साक्षादनुष्ठानमित्यभिप्रायेण युञ्जन् इति शतृप्रत्ययान्तः) | योगे प्रविशमानः | युयुक्षन् कर्तुमिच्छन् (ता० बो०) । समाधिमनुतिष्ठन् (भा० भा० दी०) |
| ५ द्वि० | परां प्रकृतिम् | प्रकृष्टां क्षेत्रज्ञलक्षणां प्रकृतिम् | अपरायाः भोक्तृत्वेन प्रधानभूतां चेतनारूपाम् | मुख्या सर्वजीवदेहस्थिता श्रीः । | चेतनत्वेन मदनन्यत्वादुत्कृष्टाम् (भा० भा० दी०) |
| १४ प्र० | माया | सर्वभूतमोहिनी त्रिगुणात्मिका | मायाशब्दो न मिथ्यार्थवाची | गुणमयदेहादिकं दृष्ट्वा ईश्वर- | मामहं न जानामीति साक्षिप्रत्यक्षत्वेनापलापानर्हा, अनृ- |

| | | | | | |
|---|---|---|---|---|---|
| | | वैष्णवी माया | आसुरराक्षसास्त्रादीनामिव विचित्र-इति कार्यकरत्वेन माया-शब्दवाच्यत्वम् | देहोऽपि तादृश मोहिनी | तस्य प्रपञ्चस्येन्द्रजालैरिव प्रकाशिका (भा० भा० दी०) |
| १८ द्वि० | आत्मैव | नान्यो मतः | तेन विना ममाप्यात्मधारणं न सम्भवति, ततो ममाप्यात्मा हि सः। | ज्ञानिषु प्रियत्वात् अहमेव ते इति उच्यते, प्रियातिशयद्योतनार्थम्। | मामेवाभेदतयाऽवलम्बत इति ततोऽहमभिन्न एव। (गी० सं०) |
| १९ द्वि० | ज्ञानवान् | प्राप्तपरिपाकज्ञानः | असंख्येयैः कल्याणगुणगणैः परतर इति ज्ञानवान् | वासुदेवः सर्वमिति वासुदेवाधीनमिति ज्ञानवान् | दृढप्रतिपत्तिपवित्रीकृतहृदयः (गी० सं०) |
| १९ तृ० | वासुदेवः सर्वमिति | वासुदेवः सर्वमिति (मां प्रत्यगात्मानं प्रत्यक्षतः प्रपद्यते) | मत्प्राप्यं श्रेष्ठं वस्तु वासुदेवः इति मम प्रापकोऽपि स एवेति, मम सर्वा अभिलाषाः स एवेति (मां प्रपद्यते) | सर्व वासुदेवाधीनं। पूर्णं वस्तु वासुदेव इति (ज्ञानवान्) | कृष्ण ।एवाखण्डं सर्वमित्यभेदज्ञानवान् (ब्र० गि०) अप्रतिबद्धवृत्या सर्वस्व वासुदेवमात्रत्वज्ञानवान् (ता० बो०) |
| २४ प्र० | व्यक्तिमापन्नम् | प्रकाशं गतम् | इदानीं कर्मविशेषाज्जन्मविशेषं प्राप्य व्यक्तिमापन्नं प्राप्तम् | कार्यदेहाद्यापन्नम्। सद्यः प्रकाश्यमानपरिमितमहिमा- | कर्मवशाद्वसुदेवगृहे जन्मविशेपं प्राप्य व्यक्तिमापन्नम्। मामितरजीवसाधा- |

| | | | | | |
|---|---|---|---|---|---|
| | | | | युक्तमिति | रणम् (व्र० गि०)। कार्यरूपतां मत्स्यकूर्माद्यनेकावतार रूपेण प्राप्तम् (गू०दी०) |
| २५ द्वि० | योगमाया-समावृतः | योगो गुणानां युक्तिर्घटनं, सैव माया। अथवा भगवतश्चित्तसमाधानं योगः तत्कृता माया, तया समावृतः संछन्नः | क्षेत्रज्ञसाधारणमनुष्यत्वादिसंस्थानयोगाख्यमायया समावृतः। | योगेन सामर्थ्योपायेन मायया च समावृतः। | विचित्रा सृष्ट्यादिशक्तिः या मनसाऽप्यचिन्त्या (सु० बो०)। स्ववृत्या पुरुषं जननमरणदुःखप्रवाहेन योजयतीति योगः। सा चासौ माया च, तया (ता० बो०)। योगो मम सङ्कल्पः तद्वशवर्तिनी माया(गू०दी०) |

अष्टमोऽध्यायः

| | | | | | |
|---|---|---|---|---|---|
| ३ द्वि० | स्वभावः | स्वो भावः प्रत्यगात्मभावः देहे जीवस्य रूपेण प्रकाशमानः ब्रह्मभावः | प्रकृतिः अनात्मभूतमात्मनि सम्बध्यमानं भूतसूक्ष्मतद्वासनादिकं पञ्चाग्निविद्यायां ज्ञातव्यतयोदितम् | जैवः स्वभावः। स्वाख्यो भावः इति व्युत्पत्या जीवो वा, सर्वदा अस्त्येव एकप्रकारेणेति | स्वो नागन्तुको भावः स्वरूपं स्वभावः त्वंपदार्थः (भा० भा० दी०)। अध्यात्मं प्रत्यक्तत्वं स्वयमेव भवतीति स्वभावः परं ब्रह्म स्वयमेव प्रतिशरीरं प्रत्यग्रूपेणाहमर्थो- |

| | | | | | |
|---|---|---|---|---|---|
| | | | | भाव: । | प्यात्मा ज्ञाता भवतीत्यर्थः (ता० बो०) । |
| ४ द्वि० | पुरुषः | पूर्णमनेन सर्वमिति, पुरिशयनाद्वा | शब्दादेर्भोक्ता | पुरिशयनात्पुरुषो जीव: | हिरण्यगर्भ:, सर्वभूताधिपतिः भगवदंशः (ब्र० गि०) । सर्वासु पूर्षु वसतीति सर्व-करणानुग्राहक: (भा० भा० दी०) |
| ५ तृ० | मद्भावम् | वैष्णवं तत्वम् | मम यो भाव: स्वभाव: । यथा मामनुसन्धत्ते तथाविधाकार: । | मयि सत्तां निर्दुःख-निरतिशयानन्दात्मि-काम् | मोक्षाम् (भा० भा० दी०) । ब्रह्मैव भवतीत्यर्थ:(ता०बो०) |
| ८ प्र० | अभ्यासयोगः | तुल्यप्रत्ययावृत्ति-लक्षणो विलक्षणप्रत्ययानन्त-रितोऽभ्यास: । स चासौ योगश्च । | नित्यनैमित्तिकाविरुद्धेषु सर्वेषु कालेषु मन-सोपास्य संशीलनम-भ्यास: योगस्त्व-हरहर्योगकालेऽनुष्ठीय-मानं यथोक्तलक्षण-मुपासनम् । | अभ्यास एव योगोऽभ्यासयोगः | सजातीयप्रत्ययप्रवाह:, स एव योग: उपाय: (सु० बो०) |
| ११ प्र० | अक्षरम् | न क्षरतीत्यविनाशि | अस्थूलत्वादिगुणकम् | —— | प्रणवाख्यं वाचकम् (भा० भा० दी०) |

| | | | | | |
|---|---|---|---|---|---|
| १३ च० | परमां गतिम् | प्रकृष्टां गतिम् | प्रकृतिवियुक्तं मत्समानाकारमपुनरावृत्तिमात्मानम् | —— | परो मीयते यथा, यत्र वा, तां गतिमक्षरात्मिकाम् (अ० त०)। केवलतां, विदेहमुक्तिम् (ता० बो०) |
| १९ तृ० | अवशः | अकृताभ्यागमकृतविप्रणाशदोषपरिहारार्थं, बन्धमोक्षशास्त्रप्रवृत्तिसाफल्यप्रदर्शनार्थम् अविद्यादिक्लेशमूलकर्माशयवशाच्च अवशः। | कर्मवश्यः | भगवदधीनत्वात् | अविद्याकामकर्मादिपरतन्त्रः (गू० दी०) |
| २० प्र० | तस्मात्तु परः भावः अन्यः | पूर्वोक्ताद्व्यतिरिक्तः भावः अक्षराख्यं परं ब्रह्म। 'तु' शब्दो अक्षरस्य अव्यक्ताद्वैलक्षण्यविशेषणार्थः अन्यः विलक्षणः | अव्यक्तादचेतनप्रकृतिरूपात् पुरुषार्थतया परः उत्कृष्टो भावः अन्यः ज्ञानैकाकारतया तस्माद्विसजातीयः | तस्माद्भूतसङ्घातविलक्षणः स्वतन्त्रः उत्तमश्च | तुशब्दात् पराभिमतं सत्तासामान्यं वारयति तस्य सामान्यादिभ्यो व्यावृत्तत्वात् (भा० भा० दी०) |
| २२ द्वि० | भक्त्या लभ्यस्त्वनन्यया | ज्ञानलक्षणया अनन्यया आत्मविषयया भक्त्या | अनन्यचेताः सततम् इत्यनन्यया भक्त्या | परमसाधनभूतया भक्त्या | उपास्योपासकभेदमन्तरेण अहंग्रहरूपया ज्ञानलक्षण्या (भा० भा० दी०)। भक्त्या |

| | | | | | |
|---|---|---|---|---|---|
| | | | | | ज्ञानेनैवाचार्यप्रसादलब्धेन समाधिनिष्ठया शुद्धेन लभ्यः प्राप्तव्यः न तु कर्मणा योगेन साङ्ख्येन च । (ता० बो०) |

नवमोऽध्यायः

| | | | | | |
|---|---|---|---|---|---|
| ३ द्वि० | अस्य धर्मस्य | आत्मज्ञानस्य धर्मस्यास्य | अस्य उपासनाख्य-धर्मस्य | —— | —— |
| ४ प्र० | मया | मम यः परो भावस्तेन | अन्तर्यामिणा | —— | जगत्कारणभूतेन मया (सु० बो ) |
| ४ तृ० | मत्स्थानि | न हि किञ्चिद्भूतं निरात्मकं व्यवहाराय कल्पते । अतो मत्स्थानि मया आत्मना आत्मवत्वेन स्थितानि, अतो मयि स्थितानि । | मय्यन्तर्यामिणि स्थितानि । तदायत्ते स्थिति-नियमेन प्रतिपादिते इति शेषित्वम् । | —— | अस्ति भाति प्रियत्वेन रूपेण नाम्ना च प्रकाशमाने मय्येवाक्षरे सर्वान्तर्यामिस्वरूपे उपादाने स्थितानि । (त० दी०) मय्यव्यक्तमूर्तौ तिष्ठन्ति, यथा तोये तरङ्गबुद्बुदादय तोयसत्तया सत्तावन्तस्तिष्ठन्ति तद्वत् (ता० बो०) |

| | | | | | |
|---|---|---|---|---|---|
| ५ च० | ममात्मा | विभज्य देहादि- संघातं तस्मिन्नहङ्कार- मध्यारोप्य लोक बुद्धि- मनुसरन् व्यपदिशति ममात्मेति । न पुन- रात्मन आत्मा अन्य इति लोकवदजानन् । | मम मनोमय- स्सङ्कल्प एव । | मम देह एव | अक्षरस्वरूपो अध्यात्म- धर्माख्यः (त० दी०) । अर्जुनः स्वयमयमेव साक्षा- त्परमेश्वर इति मयीश्वरत्व- बुद्धिमत्वादहमात्मेत्युक्ते मद्देह एव परमात्मत्व- बुद्धि कुर्यादिति श्रीभगवा- नात्मशब्दार्थं स्वदेहाद्विभज्य भिन्नत्वेन निर्दिशते (ता० बो०) । मम कारणशरीरस्य आत्मा ममात्मेति राहोः शिर इति वत् कल्पनया षष्ठी (गू० दी०) |
| ७ द्वि० | मामिकां प्रकृतिम् | त्रिगुणात्मिकां कामपरां निकृष्टां प्रकृतिम् | मच्छरीरभूतां तम- श्शब्दवाच्यां नाम- रूपविभागानर्हाम् | मदधीनां त्रिगुणा- त्मिकां प्रकृतिम् | मत्क्रियाशक्त्यंशां त्रिगुणां मच्छायाभूतां मदधीनां प्रकृतिं पृथग्भूततत्वस्वरू- पाम् (त० दी०) । मच्छ- क्तित्वेन कल्पितां त्रिगुणा- त्मिकां स्वकारणभूतां मायाम् (गू० दी०) । |

| | | | | | |
|---|---|---|---|---|---|
| १० प्र० | मयाऽध्यक्षेण | मया सर्वतो दृशिमात्र-स्वरूपेण अविक्रिया-त्मनाऽध्यक्षेण | सत्यसङ्कल्पेन मया-ध्यक्षेण ईक्षिता (प्रकृतिः)··· क्षेत्र-कर्मानुगुणमदीक्षणेन हेतुना । | द्रष्टा कर्ता अहमेव । मुख्यकर्त्रा मया अथवा अधिपतिना पुरुषरूपेण मया । | अधिष्ठात्रा निमित्तभूतेन पुरुषरूपेण (त० दी०) । राजवद्यस्य सन्निधिमात्रेण प्रधानादिप्रवृत्तिः सोऽध्यक्ष-स्तेन (ता० बो०) । |
| ११ तृ० | परं भावम् | प्रकृष्टं भावं परमात्मतत्वमाकाश-कल्पमाकाशादप्यन्तर-तमम् | ममापारकारुण्यौदार्य-सौशील्यवात्सल्यादि-निबन्धनं मनुष्यत्व-समाश्रयलक्षणमिमं परं भावम् | न तु मनुष्यरूपात् मम श्रेष्ठं तत्वम् | मम निरतिशयं भावं भूत-भृन्न च भूतस्थो ममात्मा इत्याद्युपदिष्टम् (ब्र० गि०) |
| १२ च० | मोहिनीं प्रकृतिम् | मोहकरीं देहात्मवादिनीम् | मनुष्यत्वेनावतीर्णस्य मम पूर्णकारुण्यसर्वो-त्तमत्वादीनामाच्छा-दिनीम् | —— | बुद्धिनाशिनीम् (सु० बो०) |
| १५ तृ० | एकत्वेन | 'एकमेव परं ब्रह्म' इति परमार्थदर्शनेन | भगवान् वासुदेव एव नामरूपानर्हातिसूक्ष्म-चिदचिद्वस्तुशरीरः ······स्थूलचिद-चिद्वस्तुशरीरः स्या- | सर्वत्र एक एव नारायणः स्थितः इत्येकत्वेन | सोऽस्मीत्यात्माभेदभावनया तान्त्रिकाः (त० दी०) । अहमेव भगवान् वासुदेव इत्यभेदेनौपनिषदः (भा० भा० दी०) । |

| | | | | | |
|---|---|---|---|---|---|
| | | | मिति सङ्कल्पः …विचित्रजगच्छ-रीरोऽवतिष्ठते इत्यनुसन्धाय । | | |
| २२ प्र० | अनन्याः | अपृथग्भूताः परं देवं नारायणमात्मत्वेन गताः सन्तः । | अनन्यप्रयोजनाः मच्चिन्तनैक-प्रयोजनाः । | अन्यदचिन्तयित्वा | भावान्तररहिताः साधना-न्तररहिताः देवतान्तर-फलान्तरमार्गान्तररहिताः (त० दी०) । अद्वैतदर्शन-निष्ठास्सन्तः (ता० बो०) |
| २२ च० | योगक्षेमम् | योगमप्राप्तस्य प्रापणं, क्षेमस्त-द्रक्षणम् | मत्प्राप्तिलक्षणं योगमपुनरावृत्ति-रूपं क्षेमं च । | अप्राप्तप्रापणं योगः, तद्रक्षणं क्षेमः अथवा मोक्षावस्थायां शाश्वतस्थितिः योगक्षेमम् । | शरदीरस्थित्यर्थं योगक्षेम-मकामयमानानामपि वहामि (गू० दी०) । |
| २८ तृ० | सन्यासयोग-युक्तात्मा | सन्यासश्चासौ मत्समर्पणतया कर्म-त्वाद्योगश्चासाविति तेन युक्तमात्मा अन्तःकरणं यस्य सः । | सन्यासाख्ययोग-युक्तमनाः आत्मानं मच्छेषता मन्नियाम्य-तकरसं कर्म च सर्वं मदाराधनमनुसन्दधानो । | — | सन्यासस्त्यागौ भजनार्थः फलादिविषयको योगस्त-दभिन्नफलार्थकश्चेतसः समत्वं तेन युक्त आत्मा यस्य तथाविधः (त० दी०) । |

| | | | | | |
|---|---|---|---|---|---|
| २८ च० | मामुपैष्यसि | जीवन्नेव मुक्तः, पतिते चास्मिन् शरीरे मामुपैष्यसि आगमिष्यसि | मामेवोपेष्यसि | ——— | जगति स्थितोऽपि संसारधर्मालिप्त एव मां सेवोपयोगिस्वरूपेण व्यापिवैकुण्ठे उपेष्यसि (त० दी०)। विदेहकैवल्यं प्राप्स्यसीत्यर्थः (ता० बो०) |
| २९ च० | मयि ते | स्वभावत एव, न मम रागनिमित्तं मयि वर्तन्ते | जात्यादिभिरुत्कृष्टा अपकृष्टा वा मत्समानगुणवद्यथासुखं मय्येव वर्त्तन्ते । | मत ते वशाः | मदाधाराः (त० दी०)। मय्यानन्दात्मनि ब्रह्मणि स्वयं वर्तन्ते मद्रूपेण तिष्ठन्ति । (ता० बो०) |
| २९ च० | तेषु चाप्यहम् | स्वभावत एव वर्ते, नेतरेषु । | अहमपि तेषु मदुत्कृष्टेष्विव वर्ते । | तेषामहं वशः । अहं तेषामिष्टः । प्रियः अथवा अधीनः वर्ते । | अहमपि सत्सु भामिनत्वसत्सु (ता० बो०) । अहमपि अतिस्वच्छायां तदीयचित्तवृत्तौ प्रतिबिम्बितस्तेषु वर्ते । (गू० दी०) |
| ३४ तृ० | युक्त्वा | चित्तं समाधाय | लौकिकानि शरीरधारणार्थानि वैदिकानि च नित्यनैमित्तिकानि | ——— | योगं कृत्वा (ता० बो०) |

| | | | |
|---|---|---|---|
| | | | कर्माणि मत्प्रीतये मच्छेषतैकरसो मयैव कारित इति कुर्वन्। |

दशमोऽध्यायः

| | | | | | |
|---|---|---|---|---|---|
| ६ तृ० | मद्भावाः | मद्गतभावना, वैष्णवेन सामर्थ्येनोपेताः। | मम यो भावः स एव येषां भावः ते मद्भावः, मन्मते स्थिताः मत्सङ्कल्पानुवर्तिनः। | मत्तो भावो येषां ते। | मम भावः सामर्थ्यं तेजो भावो वा येषु ते तथा (त० दी०)। मत्तः परमेश्वरादेव भवन्ति (ग० दी०)। |
| ७ प्र० | योगम् | युक्तिम्, आत्मनो घटनमथवा योगैश्वर्यसामर्थ्यम् सर्वज्ञत्वं योगजं योग उच्यते। | हेयप्रत्यनीककल्याणगुणरूपम्। | बुद्ध्यादीनां सृष्टौ सामर्थ्यम। | विश्वतोमुखे भगवति मनस्समाधानम्। (भा० भा० दी०) |
| ८ च० | भावसमन्विताः | भावो भावना परमार्थतत्वाभिनिवेशस्तेन संयुक्ताः। | भावः मनोवृत्तिविशेषः, मयि स्पृहयालवः। | भक्तिभावयुक्ताः | मत्सेवनैकप्रयत्नवन्तः (अ० त०)। परमार्थतत्वग्रहणरूपेण प्रेम्णा समन्विताः (गू० दी०)। |

| | | | | | |
|---|---|---|---|---|---|
| १० तृ० | बुद्धियोगम् | सम्यग्दर्शनं मत्तत्व-विषयं, तेन योगः । | विपाकदशापन्नं बुद्धियोगम् | ज्ञानरूपं मुक्त्युपायम् । | ज्ञानयोगम् (सु० बो०)। सर्वमिदमहं च ब्रह्मैवेति सर्वस्य चिदेकरसब्रह्ममात्र-त्वावगाहकं ज्ञानयोगम् (ता० बो०)। ज्ञानरूपं योगं, समाधिनिष्ठाम् (गू० दी०) |
| ११ द्वि० | अज्ञानजम् | अविवेकतो जातं, मिथ्याप्रत्ययलक्षणम् । | ज्ञानविरोधिप्राचीन-कर्मरूपाज्ञानजं मद्व्यति-रिक्तपूर्वाभ्यस्तविषय-प्रावण्यरूपम् । | ——— | अज्ञानोपादानकं स्वविषया-वरणम् (गू० दी०) |
| ११ तृ० | आत्मभावस्थः | आत्मनो भावोऽन्तः-करणाशयस्त-स्मिन्नेव स्थितः सन् | (भजतां तेषां) मनोवृत्तौ विषय-तयावस्थितो मदीयान् कल्याणगुणांश्चावि-ष्कुर्वन् । | — | आत्मनो भावोऽन्तःकरण-गृहं तत्स्थः (भा० भा० दी०)। आत्मनः प्रतीचो मम भावो भावना ध्यानात्मिका वृत्तिस्तत्रस्थः । यद्वा आत्मा अन्तःकरणं तस्य भावो वृत्तिस्तत्र प्रत्यग्रूपेण तिष्ठतीति प्रत्यग्वृत्तावा-विर्भूतः (ता० बो०) । |

| | | | | | |
|---|---|---|---|---|---|
| ४२ च० | एकांशेन | एकावयवेनैकपादेन सर्वभूतस्वरूपेण | स्वरूपसद्भावे स्थितौ प्रवृत्तिभेदे च यथा मत्सङ्कल्पम् । | — | अक्षरमहिम्ना अध्यात्मरूपेण (त० दी०) । एकदेशमात्रेण (गू० दी०) । |

एकादशोऽध्यायः

| | | | | | |
|---|---|---|---|---|---|
| १ द्वि० | अध्यात्मसंज्ञितं | आत्मानात्मविवेकविषयम् | आत्मनि वक्तव्यं वचः 'न त्वेवाह'मित्यादि 'तस्माद्योगी भवार्जुन' इत्येतदन्तं यत्वयोक्तम् | भगवत्प्रतिपादनपरं वाक्यम् | त्वंपदार्थप्रधानमशोच्यानि–त्यादि (भा० दी०) । |
| ३७ च० | सदसत्तत्परं यत् | तत्परं यद्वेदान्तेषु श्रूयते । किं तत् ? सद्विद्यमानम् असच्च सदसतोः परं तत् यदक्षरं वेदविदो वदन्ति तत्वमेव नान्यत् । | सदसच्छब्दनिर्दिष्टं कार्यकारणभावेनावस्थितं प्रकृतितत्वं, नामरूपविभागवत्तया कार्यावस्थं तच्छब्दनिर्दिष्टं तदनर्हतया कारणावस्थामसच्छब्दनिर्दिष्टं च त्वमेव । तत्परं यत् तस्मात्प्रकृतेः | सदसतः परम् | सत् विधिमुखेन प्रतीयमानमस्तीति, असन्निषेधरूपेण प्रतीयमानं नास्तीति, अथवा सत् व्यक्तमसदव्यक्तं त्वमेव (गू० दी०) । |

| | | | | | |
|---|---|---|---|---|---|
| | | | प्रकृतिसंबन्धिनश्च जीवात्मनः परमन्यन्मुक्तात्मतत्वं यत् तदपि त्वमेव । | | |
| ५४ प्र० | अनन्यया भक्त्या | सर्वैरपि करणैर्वांसुदेवादन्यं नोपलभ्यते यया सानन्या भक्तिः, तया । | — | अन्यासाधारण्या भक्त्या । | अनन्या अव्यभिचरितया अखण्डया भक्त्या आराधनेन (भा० भा० दी०) । मदनुग्रहिसङ्गैकलभ्यया भक्त्या(त० दी०) । सर्वस्य स्वस्य च ब्रह्मामात्रत्वावगाहिन्या प्रत्ययान्तरशून्यया भक्त्या त्वनुसन्धानेनैव (ता० बो०) । |

द्वादशोऽध्यायः

| | | | | | |
|---|---|---|---|---|---|
| २ द्वि० | नित्ययुक्ताः | 'मत्कर्मकृन्मत्परमः' इत्यादिश्लोकोक्तन्यायेन सतत- | नित्ययोग काङ्क्षमाणाः | कर्मयोगध्यानयोगाभ्यां युक्ताः । | सदोद्युक्ताः (भा० भा० दी०) सर्वदा भिन्नतया युक्ताः (ता० बो०) |

| | | | | | |
|---|---|---|---|---|---|
| | | युक्ताः | | | नैरन्तर्येण भगवत्कर्मादौ सावधानतया प्रवृत्ताः (गू० दी०) |
| ९ तृ० | अभ्यासयोगेन | चित्तस्यैकस्मिन्नालम्बने सर्वतः समाहृत्य पुनः पुनः स्थापनमभ्यासः, तत्पूर्वको योगः समाधानलक्षणः । | असंख्ये कल्याणगुणसागरे हेयप्रत्यनीके मयि निरतिशयप्रेमगर्भस्मृत्यभ्यासयोगेन | ----- | चलस्य मनसः पुनः पुनर्भंगवति स्थिरीकरणाभ्यासः (सु० बो०) चित्तस्यैकस्मिन्नाभ्यन्तरे बाह्ये वा प्रतिमादावालम्बने सर्वतः समाहृत्य पुनः पुनः स्थापनमभ्यासः तत्पूर्वको योगः समाधानलक्षणः । |
| ११ द्वि० | मद्योगमाश्रितः | मयि क्रियमाणानि कर्माणि सन्यस्य यत्करणं तेषामनुष्ठानं स मद्योगस्माश्रितः | अक्षरयोगमात्मस्वभावानुसन्धानरूपं परभक्तिजननं पूर्वं षट्कोदितमाश्रित्य तदुपायतया । | मद्विषययोगमाश्रित्य, अर्थात् आस्तिकबुद्ध्या । | मदेकशरणत्वमाश्रितः मयि सर्वकर्मसमर्पणं मद्योगस्तं वाश्रितः । (गू० दी०) |
| १४ प्र० | योगी | समाहितचित्तः | सततं प्रकृतिविमुक्तात्मानुसन्धानपरः । | कर्मयोगध्यानयोगाख्योपायद्वयसंपन्नः । | अप्रमत्तः (सु० बो०) श्रवणादौ समाहितचित्तः (गू० दी०) |

| | | | | | |
|---|---|---|---|---|---|
| १४ तृ० | मय्यर्पितमनोबुद्धिः | सङ्कल्पात्मकं मनोऽध्यवसायलक्षणा बुद्धिस्ते मय्येवार्पिते स्थापिते यस्य सः। | भगवान् वासुदेव एवानभिसंहितफलेनानुष्ठितेन कर्मणा आराध्यते, आराधितश्च ममात्मापरोक्ष्यं साधयिष्यतीति मय्यर्पितमनोबुद्धिः। | — — — — | मयि निर्गुणे ब्रह्मण्यर्पिते निहिते प्रविलापिते वा मनः सङ्कल्पादिरूपं, बुद्धिरध्यवसायस्ते उभे येन(भा० भा० दी०)। शुद्धे ब्रह्मणि समर्पितान्तः करणः (गू० दी०)। |
| १६ तृ० | सर्वारम्भपरित्यागी | आरभ्यन्त इत्यारम्भाः इहामुत्रफलभोगार्थानि कामहेतूनि कर्माणि सर्वाणि परित्यक्तुं शीलमस्येति। | शास्त्रीयव्यतिरिक्तसर्वकर्मारम्भपरित्यागी। | विष्णुसंबन्धरहितानां कर्मणां परित्यागी, अथवा सर्वकर्मस्वाभिमानवर्जितो वा, भगवदर्पणत्वेन सर्वकर्मकुर्वाणो वा। | दृष्टादृष्टवस्तून्युद्दिश्य प्रयत्नमकुर्वाणः (सु० बो०)। सर्वकर्मसन्यासीत्यर्थः (त० बो०)। सन्यासित्वादेव (भा० भा० दी०)। |
| १९ तृ० | अनिकेतः | निकेत आश्रमो निवासो नियतो न विद्यते यस्य | आत्मनि स्थिरमतित्वेन निकेतनादिष्वसक्तः | अ-विष्णुः निकेतः, विष्णुमेव वासस्थानं मन्वानः। | गृहशून्यः, कुटीमपि वासार्थं नारभते (भा० भा० दी०)। |

त्रयोदशोऽध्यायः

| | | | | | |
|---|---|---|---|---|---|
| २ प्र० | चापि मां विद्धि | मां परमेश्वरमसंसारिणं विद्धि जानीह। | वेदितृत्वैकाकारं मदात्मकं विद्धि, अपिशब्दात् क्षेत्रज्ञं अव्यक्तमह- | मामीश्वरं न तु जीवं | यः जीवः क्षेत्रं स्वतो विविक्तं जानाति तं मदंशत्वा- |

| | | | | | |
|---|---|---|---|---|---|
| | | | क्षेत्रमपि मां विद्धि । | दादिषु क्षेत्रेषु वर्त-मानं विद्धि । | न्मद्रूपं पुरुषं जानीह । (त० दी०) मामीश्वरमसंसारिणमद्वितीय-ब्रह्मानन्दरूपं जानीहि । (गू०दी०) |
| ३ द्वि० | यतश्च यत् | यतो यस्माच्च यत्कार्य-मुत्पद्यते | यतो हेतोरुत्पन्नं, यस्मै प्रयोजनायोत्पन्न-मित्यर्थः । यत् यत्स्व-रूपं चेदम् । | यतो याति प्रवर्त्तते स च प्रवर्त्तकः । यतश्च यदिति अस्मात्प्रव-र्त्तते क्षेत्रमिति वचनं । येन पुरुषेण प्रवर्त्य-मानं वर्तते । | क्षेत्रज्ञस्योपाधिर्भूत्वा स्वयं यत्कार्यं जनयतीत्यर्थः (त० बो०) । यतश्च कारणात् यत्कार्यमुत्पद्यत इति शेषः । अथवा यतः प्रकृतिपुरुषसंयो-गात् भवति, यदिति यैः स्थावरजङ्गमादिभेदैर्भिन्न-मित्यर्थः (गू० दी०) । |
| १० प्र० | अनन्ययोगेन | अपृथक्समाधिना नान्यो वासुदेवात्परोऽस्त्यतः स एव नो गतिः इत्येवं निश्चिता अव्यभिचा-रिणी बुद्धिः अनन्ययोग-स्तेन | ऐकान्तिकयोगेन | लक्ष्मीब्रह्मादयो न स्वतन्त्राः विष्णुरेव स्वतन्त्र इति बुद्ध्या । | सर्वात्मदृष्ट्या (सु० बो०) । |

| | | | | | | |
|---|---|---|---|---|---|---|
| १२ च० | न सत्तन्नासदुच्यते । | अतीन्द्रियत्वेन अस्तिनास्तीत्युभयबुद्ध्यनुगतप्रत्ययाविषयत्वात् । | कार्यकारणावस्थाद्वयान्वयस्त्वात्मनः कर्मरूपाविद्यावेष्टनकृतः न स्वरूपकृत इति सदसच्छब्दाभ्यामात्मस्वरूपं नोच्यते । | कार्यरूपात्प्रपञ्चाद् भिन्नः कारणरूपात् अव्यक्तादेश्च भिन्नः सदसत्पदाभ्यां न निर्देश्यः । अथवा मूर्त्तामूर्त्ताभ्यामतीतत्वात् सदसत्पदावाच्यः । | प्रामाण्यैर्न विधीयते प्रमाणान्तरैर्न निषिद्ध्यते यतस्तत् नेन्द्रियगोचरम् (सु०बो०) । |
| १४ च० | गुणभोक्तृ च | गुणानां शब्दादिद्वारेण सुखदुःखमोहाकारपरिणतानां भोक्तृचोपलब्धृतज्ज्ञेयमित्यर्थः । | सत्वादीनां गुणानां भोगसमर्थ च । | सकलकल्याणगुणैर्युक्तः । | ग्राहकेषु बुद्ध्यादिषु ग्राह्यसम्बन्धात्सुखाद्याकारेण परिणतेषु सत्सु केवलं तत्प्रकाशकत्वमात्रेण गुणभोक्तृत्वमप्यस्य चिदाभासरूपस्योपपद्यते । (भा० भा० दी०) |
| १६ प्र० | अविभक्तम् | प्रतिदेहं व्योमवत्तदेकम् | देवमनुष्यादिभूतेषु सर्वत्र स्थितमात्मवस्तुवेदितृत्वैकाकारतया अविभक्तम् । | सर्वभूतेष्वन्तर्यामित्वेनानुस्यूततया वर्तमानम् | स्वरूपेणाविभक्तमेव, न तु भूतैर्विभक्तुं शक्यते निरवयवत्वादतिसूक्ष्मत्वादविषयत्वाच्च (ता० बो०) । |

| | | | | | |
|---|---|---|---|---|---|
| १६ द्वि० | विभक्तमिव | देहेष्वेव विभाव्यमानत्वात् | अविदुषां देवाद्याकारेण विभक्तमिव। | पृथक्तया गृह्यमाणम् । | देहतादात्म्येन प्रतीयमानत्वात् प्रतिदेहं विभक्तमिव स्थितम् (ता० बो०) । |
| १८ च० | मद्भावाय | परमात्मभावः,मोक्षम् | मम यो भावः स्वभावः असंसारित्वम् । | मयि स्थितिप्राप्तये | ब्रह्मभावाय । (भा० भा० दी०) |
| २१ तृ० | गुणसङ्गः | सुखदुःखमोहेषु गुणेषु भुज्यमानेषु यः सङ्गः आत्मभावः । | पूर्वपूर्वप्रकृतिपरिणामरूपदेवमनुष्यादियोनिविशेषेषु स्थितः तत्तद्योनिप्रयुक्तसत्वादिगुणमयेषु सुखदुःखादिषु सक्तः । | ——— | गुणेषु देहेन्द्रियविषयेषु सङ्गः अहमिदं ममेदमित्याभिनिवेशः (भा० भा० दी०) । न त्वसङ्गस्य तस्य स्वतः संसार इत्यर्थः (गू० दी०) । |
| २२ प्र० | उपद्रष्टा | समीपस्थः सन्द्रष्टा स्वयमव्यापृतः । अथवा देहचक्षुर्मनोवुद्ध्यात्मनो द्रष्टारः तेषां मध्ये अन्तरतमः द्रष्टा आत्मा अतिशयसामीप्येन द्रष्टृत्वादुपद्रष्टा । | देहप्रवृत्यनुगुणसङ्कल्पादिरूपेण देहस्य उपद्रष्टा। | सर्वेषामुपरि सर्वोत्तमावस्थायां द्रष्टा। | व्यापार्यन्यत्वे सति अव्यापृततया ताटस्थ्येन व्यापारितद्व्यापारदर्शनमात्रैकपरत्वम् (ता० बो०) । पृथग्भूत एव समीपे स्थित्वा द्रष्टा (सु० बो०) । |

| | | | | | |
|---|---|---|---|---|---|
| २२ द्वि० | भोक्ता | यद्यपि आत्मा सुखदुःखादिसम्बन्धरहितः तथापि देहेन्द्रियादिसम्बन्धेन सुखदुःखादीनां भोक्तेव दृश्यमानत्वात् भोक्तेत्युच्यते । | देहेन्द्रियादिषु प्रवृत्तिजनितानां सुखदुःखानां भोक्ता च भवति । | सर्वकर्मफलसारग्रहीता । | पालकः (सु०बो०) । स्वस्मिन्नध्यस्तमयव्यक्तादिस्थूलान्तं सर्वं स्वमहसा चैतन्यात्मकेन तिमिरं रविरिव भुङ्क्ते स्वस्मिन्नेव तिरोभावयतीति भोक्ता (ता० बो०) । |
| २२ तृ० | परमात्मेति चापि | देहादीनामव्यक्तान्तानां प्रत्यगात्मत्वेन परिकल्पितानामविद्यया परम उपद्रष्टृत्वादिलक्षण आत्मेति परमात्मा 'सोऽन्तः परमात्मा' इत्यनेन शब्देन चाप्युक्तः कथितः श्रुतौ । | अस्मिन् देहे देहेन्द्रियमनांसि प्रति परमात्मेति चाप्युक्तः देहे मनसि चात्मशब्दोऽन्तरमेव प्रयुज्यते 'ध्यानेनात्मनि पश्यन्ति' इत्यादौ । अपि शब्दान्महेश्वरः इत्युक्त इति गम्यते । | उत्तमश्चेतनः | अन्तर्यामीति (सु० बो०) । देहादिबुद्ध्यन्तानामचेतनानामविद्ययात्मत्वेन कल्पितानां परमः प्रकृष्ट उपद्रष्टृत्वादिपूर्वोक्तविशेषणविशिष्ट आत्मा परमात्मा । चकारादुपद्रष्टेत्यादिशब्दैरपि स एव पुरुषः परः । (गू० दी०) |
| २६ तृ० | क्षेत्रक्षेत्रज्ञसंयोगात् | क्षेत्रक्षेत्रज्ञयोर्विषयविषयिणोर्भिन्नस्वभावयोः इतरेतरतद्धर्माध्यासलक्षणः संयोगः तयोः | यावत्स्थावरजङ्गमात्मना सत्वं जायते तावत् क्षेत्रक्षेत्रज्ञयोरितरेतरसंयोगादेव | सकलं जगत् चित्प्रकृति(लक्ष्मी)परमात्मनोः संबन्धेनैव जायते, तत्र मुख्यकारणं परमात्मा । | अविवेककृतात्तादात्मयाध्यासाद्भवति (सु० बो०) । |

|  |  |  |  |  |  |
|---|---|---|---|---|---|
|  |  | स्वरूपविवेकाभावनिबन्धः । | जायते संयुक्तमेव जायते, न त्वितरेतरविमुक्तमित्यर्थः । |  |  |
| २७ प्र० द्वि० | समं तिष्ठन्तम् | निर्विशेषं स्थितिं कुर्वन्तम् सर्वभूतवैलक्षण्येन निर्विशेषत्वमेकत्वं च परमेश्वरस्य सिद्धम् । | देहादिविषमाकारात् वियुक्तं तत्र तत्र तत्तद्देहेन्द्रियमनांसि प्रतिज्ञातृत्वेन समानाकारतया स्थितम् । | सर्वत्र एकरूपेण स्थितम् । | समपरिणामिनं कूटस्थं नित्यं सर्वेषु भूतेषु देहाद्याकारेण परिणतेषु तिष्ठन्तम् । |
| २७ च० | यः पश्यति स पश्यति | यथोक्तं परमेश्वरं यः पश्यति स पश्यति । यथा तिमिरदृष्टिरनेकं चन्द्रं पश्यति, तमपेक्ष्य एकचन्द्रदर्शी विशिष्यते स एव पश्यतीति तथैवेहाप्येकमविभक्तं यथोक्तमात्मानं यः पश्यति स विभक्तात्मदर्शिभ्यो विशिष्यते । | यः स्वभावेनाविनश्यन्तं स आत्मानं यथावदवस्थितं पश्यति । यः विषमाकारं जन्मविनाशादियुक्तं पश्यति सः तत्वतो न पश्यति । | परमात्मनः अन्तर्यामित्वेन वर्तमानस्यापि प्राणिदोषसंबन्धो नास्तीति पश्यति स यथार्थतया पश्यति | —— |

| | | | | | |
|---|---|---|---|---|---|
| २८ प्र० | समं पश्यन् | तुल्यतयावस्थितमीश्वरं पश्यन् | ज्ञानैकाकारतया समं पश्यन् | ——— | समं सम्यगप्रच्युतस्वरूपेणावस्थितं परमात्मानं पश्यन् । (सु० बो०) |
| २९ च० | अकर्त्तारम् | सर्वोपाधिविवर्जितम् । | ज्ञानाकारमकर्तारं तस्य प्रकृतिसंयोगस्तदधिष्ठानं तज्जन्यसुखदुःखानुभवश्च कर्मरूपाज्ञानकृतानि इति । | परमेश्वरं | अकर्तारमभोक्तारं सर्वोपाधिविनिर्मुक्तम् (ता० बो०) । असङ्गमेकं सर्वत्र समं यः पश्यति (गू० दी०) । |
| ३० द्वि० | एकस्थम् अनुपश्यति | शास्त्राचार्योपदेशतो मत्वा आत्मप्रत्यक्षत्वेन पश्यति 'आत्मैवेदं सर्वम्' इति | एकत्वस्थं प्रकृतिस्थं यदा पश्यति, नात्मस्थम् | एकरूपं विष्णुमाश्रितम् जीवेश्वरभेदं जीवपरस्परभेदं च तारतम्येन पश्यति । | संहारेच्छात्मकरमणात्मकब्रह्मस्वरूपस्थं प्रलये (अ०त०)। पृथक्सत्ताभावात् आत्ममात्रमेवानुपश्यति । |
| ३० च० | ब्रह्म सम्पद्यते तथा | ब्रह्मैव भवति तस्मिन् काले (यदा एकस्थं तत एव विस्तारं च पश्यति तदा) | अनविच्छिन्नं ज्ञानैकाकारमात्मानं प्राप्नोति तदैव | ——— | सजातीयविजातीयभेददर्शनाभावात् ब्रह्मैव सर्वानर्थशून्यं भवति (गू० दी०) । |
| ३१ द्वि० | अयं परमात्मा | सर्वदेहात्मत्वेन वर्तमानः एकः आत्मा | जीवात्मा प्रकृतिविमुक्तावस्थायां परमात्म | अन्तर्यामी विष्णुः | परमश्चासावात्मेति हेतुगर्भितमिदं विशेषणद्वयम् (ता० बो०) । |

| | | | | | |
|---|---|---|---|---|---|
| | | | वदिति परमात्मा-इत्युच्यते । | | |
| ३४ तृ० | भूतप्रकृतिमोक्षम् | भूतानां प्रकृतिरविद्या-लक्षणाव्यक्ताख्या तस्याः भूतप्रकृतेर्मोक्षणमभाव-गमनम् । | भूताकारपरिणतप्रकृति-मोक्षोपायममानित्वा-दिकम् । मोक्ष्यते अने-नेति मोक्षः अमानित्वा-दिमोक्षोपायः अत्रो-च्यते । | भूतेभ्यः प्रकृतेश्च मोक्षसाधनम्मानि-त्वादिकम् । भूतानां जीवानां प्रकृतेरचेत-नप्रकृतेर्मोक्षः-तम् । | भूतशब्देन व्यक्तं जगत्, प्रकृतिशब्देनाव्यक्तम् सच्छ-ब्दवाच्यं चोच्यते, तयोर्भूत-प्रकृत्योर्मोक्षम् (ता० बो०) । |

चतुर्दशोऽध्यायः

| | | | | | |
|---|---|---|---|---|---|
| २ द्वि० | साधर्म्यमागताः | मत्स्वरूपतामागताः प्राप्ता इत्यर्थः । न तु समानधर्मतां साधर्म्यंक्षेत्र-क्षेत्रज्ञयोर्भेदानभ्युपगमात् गीताशास्त्रे । | मत्साम्यं प्राप्ताः । | ——— | षड्गुणवत्तया साम्यं प्राप्ताः (त० दी०) । पूर्णत्वमागताः मद्भावं प्राप्ताः....महदादि-प्राकृतसृष्टावपि नोपजायन्ते, जनिबीजं प्रकृतिमतीत्य चिदे-करसतां प्राप्तत्वात् महा-सृष्टावपि नोत्पत्तिरित्यर्थः । (ता बो०) |

| | | | | | |
|---|---|---|---|---|---|
| ३ प्र० | महद् ब्रह्म | सर्वकार्येभ्यो महत्त्वात् कारणत्वात् बृंहणाच्च (भरणाच्च) स्वविकाराणां, महद् ब्रह्मेति योनिरेव विशिष्यते | महदहङ्कारादिविकाराणां कारणतया महद् ब्रह्म इत्युच्यते । | महद्ब्रह्मशब्दवाच्यापि प्रकृतिरेव | ब्रह्मांशभूतत्वात् महद् ब्रह्मेत्युच्यते (ता० दी०) । महत्तत्त्वस्य प्रथमकार्यस्य ब्रह्म बृंहकं कारणमव्यक्ताव्याकृतापरपर्यायं त्रिगुणात्मकमायाख्यम् । (भा० भा० दी०) |
| ३ द्वि० | गर्भं दधाम्यहम् | हिरण्यगर्भस्य जन्मनो बीजं सर्वभूतजन्मकारणं बीजं निक्षिपामि । | चेतनपुञ्जरूपा या परा प्रकृतिः निर्दिष्टा सैव सकलप्राणिबीजतया गर्भशब्देनोच्यते । चेतनपुञ्जगर्भं दधामि । अचेतनप्रकृत्या भोगक्षेत्रभूतया भोक्तृवर्गपुञ्जभूतां चेतनप्रकृतिं संयोजयामि । | चित्प्रकृतौ गर्भमुत्पादयामि, श्री मद्गर्भ्यः सर्वप्रपञ्चोत्पत्तिः । | स्वप्रतिबिम्बरूपं गर्भं दधामि मय्यर्पयामि अहं चिदात्मा (भा० भा० दी०) । स्वाभासलक्षणं प्रकृतितद्गुणविकारविजृम्भणकारणं निदधामि । (ता० बो०) । प्रलये मयि लीनमविद्याकामकर्मानुशयवन्तं क्षेत्रज्ञं सृष्टिसमये भोग्येन क्षेत्रेण कार्यकारणसंघातेन योजयितुं चिदाभासाध्येतःसेकपूर्वकं मायावृत्तिरूपं गर्भमहमादधामि (सु० दी०) |

| | | | | | |
|---|---|---|---|---|---|
| ४ तृ० | ब्रह्म महद्योनिः | ब्रह्म सर्वावस्थं योनिः कारणम् | मया संयोजितचेतनवर्गा महदादिविशेषान्ता प्रकृतिः कारणमित्यर्थः । | महद्योनिरहं ब्रह्म वासुदेवः । | मायैव योनिरित्यर्थः । (भा० भा० दी०) |
| ५ द्वि० | प्रकृतिसम्भवाः | भगवन्मायासम्भवाः | प्रकृतेः स्वरूपानुबन्धिनः स्वाभावविशेषाः प्रकाशादिकार्यैकनिरूपणीयाः प्रकृत्यवस्थायामनुद्भूताः तद्विकारेषु महदादिषु उद्भूताः । | सत्वरजस्तमसामभिमानिदेवता चित्प्रकृतिः श्रीभूदुर्गारूपा । | त्रयाणां गुणानां साम्यावस्था प्रकृतिर्माया भगवतस्तस्याः सकाशात्परस्पराङ्गाङ्गिभावेन वैषम्येण परिणताः प्रकृतिसम्भवा इत्युच्यन्ते । (गू० दी०) |
| ५ तृ० | निबध्नन्ति | अविद्यात्मकत्वात् क्षेत्रज्ञं निबध्नन्तीव । तमास्पदीकृत्यात्मानं प्रतिलभन्त इति निबध्नन्तीत्युच्यते । ननु देही न लिप्यत इत्युक्तं तत्कथमिह निबध्नन्तीत्यन्यथोच्यते ? परिहृतमस्माभिरिव शब्देन निबध्नन्तीव इति । | देहे वर्त्तमानत्वोपाधिना निबध्नन्ति । | चित्प्रकृतिरूपाः श्रीभूदुर्गाः जडप्रकृतिसंभवाः सत्वादिगुणाश्च जीवसमूहान् सुखदुःखमोहैर्बध्नन्ति । सत्वाभिमानिनी लक्ष्मी देवान् । रजोऽभिमानिनी भूदेवी मनुष्यान्, तमोऽभिमानिनी दुर्गा दैत्यांश्च बध्नन्ति । | अध्यासत एव बन्धो न वस्तुतोऽस्ति । देहेन्द्रियादिष्वहं ममाध्यासः एव बन्धः (ता० बो०) । निर्विकारमेव सन्तं स्वविकारवत्तयोपदर्शयन्तीव भ्रान्त्या जलपात्राणीव दिवि स्थितमादित्यं प्रतिबिंबाध्यासेन स्वकम्पादिमत्तया । (गू० दी०) |

| | | | | | |
|---|---|---|---|---|---|
| ६ तृ० | सुखसङ्गेन | अविद्ययैव स्वकीयधर्मभूतया विषयविषय्यविवेकलक्षणया अस्वात्मभूते सुखे सज्जयतीव, आसक्तमिव करोति, असङ्गसक्तमिव करोति। | पुरुषस्य सुखसङ्गं जनयति...सङ्गे हि जाते तत्साधनेषु लौकिकवैदिकेषु प्रवर्तते। | सत्वाभिमानिनी लक्ष्मी सुखज्ञानाभ्यां सङ्गमुत्पादयति ताभ्यां बध्नाति। | अत्र सुखज्ञानशब्दाभ्यामन्तःकरणपरिणामो तद्व्यञ्जकावुच्येते। तत्रान्तःकरणधर्मस्य सुखस्य ज्ञानस्य चात्मन्यध्यासः सङ्गः अहं सुखी अहं जान इति च। |
| ६ च० | ज्ञानसङ्गेन च | ज्ञानमिति सुखसाहचर्यात् क्षेत्रस्यैव विषयस्यान्तःकरणस्य धर्मः, नात्मनः। | ज्ञानसङ्गं जनयति। तत्साधनेषु प्रवर्त्तते। | | न हि विषयधर्मो विषयिणो भवति। तस्मादविद्यामात्रमेतदिति शतश उक्तं प्राक्। (गू० दी०) |
| १९ तृ० | गुणेभ्यः परम् | गुणव्यापारसाक्षिभूतम् | कर्तृभ्यो गुणेभ्यश्च परमन्यमात्मानमकर्तारम्। | परिणामिकर्त्तारं गुणेभ्योऽन्यं न पश्यति। | गुणेभ्यश्च तत्तदवस्थाविशेषेणपरिणतेभ्यः परं गुणतत्कार्यासृष्टं तद्भासकम्। (गू० दी०) |
| १९ तृ० | मद्भावम् | मम भावं वासुदेवाख्यं वासुदेवः सर्वम्, इत्येवं पश्यन् सन् स द्रष्टा अधिगच्छति। | अपरिच्छिन्नज्ञानैकाकारमात्मानमनुभवति। एवं मद्भावमधिगच्छतीत्यर्थः। (मत्समान- | मयि स्थितिम्। | ब्रह्मभावम्। (भा० भा० दी०) |

| | | | | | |
|---|---|---|---|---|---|
| | | | धर्मो भवति दुःखरहित-त्वात्) | | |
| २५ तृ० | सर्वारम्भपरि-त्यागी | दृष्टादृष्टार्थानि कर्माण्यारभ्यन्त इति आरम्भाः, सर्वानारम्भान् परित्यक्तुं शीलमस्येति। देहधारणमात्र-निमित्तव्यतिरेकेण सर्व-कर्मपरित्यागी। | देहित्वप्रयुक्तसर्वारम्भ-परित्यागी। | वैष्णवकर्मव्यतिरि-क्तसर्वकर्मपरि-त्यागी। | सर्वारम्भसाध्यशून्यत्वबुद्ध्या परित्यक्तुं शीलमस्यास्तीति। (त० बो०) |
| २६ च० | ब्रह्मभूयाय कल्पते | ब्रह्मभवनाय मोक्षाय समर्थो भवति | ब्रह्मत्वाय कल्पते। ब्रह्मभावयोग्यो भवति। यथावस्थितमात्मानममृतमव्ययं प्राप्नोति। | ब्रह्मवत्प्रकृतिवत् भग-वत्प्रियत्वं ब्रह्मभूयम्। न तु तावत् प्रियत्वं, किन्तु प्रियत्वमात्रम्। भूयाय भवाय। | अक्षरब्रह्मभावाय। (ता० दी०) |
| २७ प्र० | ब्रह्मणो हि प्रतिष्ठाऽहम् | परमात्मनो हि यस्मा-त्प्रतिष्ठाऽहम्। प्रतिष्ठ-त्यस्मिन्निति प्रत्यागा-त्मा। अथवा ब्रह्मशब्द-वाच्यत्वात्सविकल्पकं | हि शब्दो हेतौ, यस्मा-दहमव्यविचारिभक्ति-योगेन सेवितो मृतस्या-व्ययस्य च ब्रह्मणः प्रतिष्ठा। | ब्रह्मणो मायायाः प्रतिष्ठा आश्रयः। चित्प्रकृतेर्लक्ष्म्याः। आधारोऽहम्। | प्रतिष्ठा मूलस्थानम्। तद्येन प्रतिष्ठितं वा सोऽहम् ऐश्व-र्यधामत्वात्तस्येत्यर्थः। आत्म-स्वरूपात्मकस्य अहमभिन्न आश्रयः प्रतिष्ठा (त०दी०)। |

| | | | | | |
|---|---|---|---|---|---|
| | | ब्रह्म, तस्य निर्विकल्पकोऽहमेव नान्यः प्रतिष्ठा आश्रयः । | | | |

पञ्चदशोऽध्यायः

| | | | | | |
|---|---|---|---|---|---|
| १ प्र० | ऊर्ध्वमूलम् | कालतः सूक्ष्मत्वात्कारणत्वात् नित्यत्वान्महत्वाच्च ऊर्ध्वमुच्यते ब्रह्माव्यक्तं मायाशक्तिम् तन्मूलमस्येति । | सप्तलोकोपरिनिविष्टचतुर्मुखादित्वेन तस्योर्ध्वमूलत्वम् । | उर्ध्वो विष्णुः ऊर्ध्वं उत्तमः सर्वतः | ऊर्ध्वं ब्रह्मपर्यन्तं मूलं यस्य (त० दी०) । ऊर्ध्वमुत्कृष्टं मूलं कारणं स्वप्रकाशपरमानन्दरूपत्वेन नित्यत्वेन च ब्रह्म, अथवोर्ध्वं सर्वसंसारबाधेऽप्यबाधितं सर्वसंसारभ्रमाधिष्ठानं ब्रह्म तदेव मायया मूलमस्येति । (गू० दी०) |
| १ प्र० | अधश्शाखम् | महदहङ्कारतन्मात्रादयः शाखा इवास्याधो भवन्तीति सोऽयमधश्शाखः । | पृथिवीनिवासिसकलनरपशुमृगपक्षिकृमिकीटपतङ्गस्थावरान्ततया अधश्शाखात्वम् । | अधो निकृष्टं शाखा भूतानि । | अर्वाचीनाः कार्योपाधयो हिरण्यगर्भादयो गृह्यन्ते, ते तु शाखा इव शाखा यस्य तम् (सु० बो०) । |

| | | | | | |
|---|---|---|---|---|---|
| १ द्वि० | अव्ययं प्राहुः | संसारमायामयमनादिकालप्रवृत्तत्वात् सोऽयं संसारवृक्षोऽव्ययो नाद्यनन्तदेहादिसन्तानाश्रयः | असङ्गहेतुभूतान् आसम्यग्ज्ञानोदयात् प्राक् प्रवाहरूपेणाच्छेद्यत्वेनाव्ययत्वम् । | न प्रवाहव्ययः । पूर्वं ब्रह्मकाले यथास्थिति, तथा सर्वत्रापीत्यव्ययता । | परमकाष्ठापन्नवस्तुकृतिसाध्यत्वात् तदंशत्वं तद्रूपेण सनातनत्वम् (त० दी०) । व्ययो नाशस्तद्रहितमव्ययं नित्यमिति प्राहुः । प्ररोचनोक्तिप्रमोहिताः कामिनो मीमांसकाः जगन्नित्यमिति वदन्ति (ता० बो०) । |
| १ च० | वेदवित् | न हि संसारवृक्षादस्मात् समूलाज्ज्ञेयोऽन्योऽणुमात्रोऽप्यवशिष्टो ऽस्ति, अतः सर्वज्ञः सर्ववेदार्थविदिति समूलसंसारवृक्षज्ञानं स्तौति । | वेदो हि संसारवृक्षच्छेदोपायं वदति; छेद्यवृक्षस्वरूपज्ञानं छेदनोपायज्ञानोपयोगीति वेदविदित्युच्यते । | ——— | वेदो हि भगवत्कार्यभूते प्रपञ्चे अविद्यालिङ्गतज्जीवकृताहंममत्वकल्पितकर्मादिपर्यावर्त्तसंसारविवर्त्तछेदोपायं वदति । तस्य चान्तरालिकस्य स्वरूपज्ञानं छेदनोपयोगीति वेदविदुच्यते । (त० दी०) |
| १५ च० | वेदान्तकृत् | वेदान्तार्थसम्प्रदायकृत् | वेदानाम् 'इन्द्रं यजेत' इत्येवमादीनामन्तफलम् । फले हि ते सर्वे | वेदनिर्णयात्मिका मीमांसा वेदान्ताः । वेदव्यासरूपेण ब्रह्म- | मूढानाममूढानां च वेदान्तोपदेष्टरि गुरौ च ब्रह्मविद्यपि च परमेश्वरत्वबुद्धिरवश्यं |

| | | | | | |
|---|---|---|---|---|---|
| | | | वेदाः पर्यवस्यन्ति । अन्तकृत्, फलकृत् । वेदोदितफलस्य प्रदाता । | सूत्राणां कर्ता । | कर्तव्येति बोधयति विशेषणद्वयेन (ता० बो०) । |
| १६ प्र० | क्षरः | समस्तं विकारजातम् | पुरुषः जीवशब्दाभिलपनीयब्रह्मादिस्तम्बपर्यन्तक्षरणस्वभावाचित्संसृष्टसर्वभूतानि । अत्र अचित्संसर्गरूपैकोपाधिना पुरुष इत्येकत्वनिर्देशः । | ब्रह्मादीनि भूतानि | भूतशब्दो भवनधर्मवत् वस्तुमात्रवाची । सर्वकार्यजातमित्यर्थ (ब्र० गि०) । क्षरतीति क्षरो विनाशी कार्यराशिरेकः पुरुषः । (गू० दी०) |
| १६ च० | कूटस्थः | कूटो राशिः, राशिरिव स्थितः अथवा कूटो माया, वञ्चना जिह्मता, कुटिलतेति पर्यायाः अनेकमाया वञ्चनादिप्रकारेण स्थितः । | अचित्संसर्गविमुक्तः स्वेन रूपेणावस्थितो मुक्तात्मा, सचित्परिणामविशेषब्रह्मादिदेहासाधारणो न भवतीति कूटस्थः । | कूटस्था प्रकृतिः | मूलभूतः महदादिषष्टः कूटे भूतसमुदाये तिष्ठतीति वा (ता० दी०) । महदादिपृथिव्यन्तःसमष्टिव्यष्ट्यात्मकः स्थूलसूक्ष्मप्रपञ्चलक्षणः कार्यराशिः कूटः । तत्र स्वकार्ये कारणत्वेन व्याप्य तिष्ठतीति (ता० बो०) । |

| | | | | | |
|---|---|---|---|---|---|
| १७ द्वि० | परमात्मेत्युदाहृतः | परमश्चासौ आत्मा च सर्वभूतानां प्रत्यक् चेतनः । | सर्वासु श्रुतिषु परमात्मेति निर्देशादेव बद्धमुक्तपुरुषाभ्याम् अर्थान्तरभूतः इत्यवगम्यते । | —— | अन्नमयादिभ्यः पञ्चभ्योऽविद्याकल्पितात्मभ्यः परमप्रकृष्टो कल्पितो 'ब्रह्मपुच्छं प्रतिष्ठा' इत्युक्त आत्मा च । (गू० दी) |
| १७ च० | बिभर्ति | स्वरूपसद्भावमात्रेण बिभर्ति । | तस्मात् व्याप्यात् धरति । भर्तव्यात् च अर्थान्तरभूतः बिभर्ति । | | सत्तास्फूर्त्तिप्रदानेन धारयति पोषयति च । (गू० दी०) |
| १९ च० | सर्वभावेन | सर्वात्मचित्ततया । | ये मत्प्राप्त्युपायतया मद्भजनप्रकाराः निर्दिष्टाः तैः सर्वैः भजनप्रकारैः । | —— | 'वासुदेवः सर्वमिति' उक्तरीत्या सर्वात्मकत्वेन मां भजते, कृतकृत्यो भवतीत्यर्थः (ब्र० गि०) । सर्वं ब्रह्मैवेति सर्वत्र ब्रह्मैकदृष्ट्या (ता० बो०) |

## षोडशो ऽध्यायः

| | | | | | |
|---|---|---|---|---|---|
| १ द्वि० | ज्ञानयोगव्यवस्थितः | ज्ञानं शास्त्रत आचार्यतश्च आत्मादिपदार्था- | प्रकृतिवियुक्तात्मस्वरूपविवेकनिष्ठा । | ज्ञानोपाये निष्ठा | ज्ञानमात्मसाक्षात्कारः, योगो मनोनाशवासनाक्षयानुकूलः |

| | | | | | |
|---|---|---|---|---|---|
| | | नामवगमः अवगताना-मिन्द्रियाद्युपसंहारेण एकाग्रता स्वात्मसंवेद्य-तापादनं योगः तयोर्ज्ञान-योगयोर्व्यवस्थितिः व्य-वस्थापनं तन्निष्ठता । | | | पुरुषप्रयत्नः ताभ्यां विशिष्टा संसारविलक्षणावस्थितिर्जीव-न्मुक्तिर्ज्ञानयोगव्यवस्थितिः । (गू० दी०) |

## सप्तदशोऽध्यायः

| | | | | | |
|---|---|---|---|---|---|
| ६ तृ० | मां चैवान्तः-शरीरस्थम् | तत्कर्मबुद्धिसाक्षिभूत-मन्तःशरीरस्थम् । | मदंशभूतं जीवमन्तः-शरीरस्थम् । | तत्तदभिमानिदेवताः तन्नियामकभूतं मामपि । | शरीरं बुद्धिः तत्र सर्वप्रकाश-कतया विद्यमानम् । (ता० बो०) |
| १६ प्र० | मनः प्रसादः | मनसः प्रशान्तिः, स्वच्छतापादनम् । | मनसः क्रोधादिरहित-त्वम् । | ——— | स्वच्छता, विषयचिन्ताव्या-कुलत्वराहित्यम् । (गू०दी०) |

## अष्टादशोऽध्यायः

| | | | | | |
|---|---|---|---|---|---|
| २ तृ० | सर्वकर्मफल-त्यागम् | नित्यनैमित्तिकानामनु-ष्ठीयमानानां सर्वकर्म-णामात्मसम्बन्धितया | नित्यानां नैमित्तिकानां काम्यानां च सर्वेषां कर्मणां फलत्यागः । | सर्वकाम्यकर्मणां भग-वत्प्रीत्यन्यफल-त्यागः । | तथा सर्वेषां कर्मणां सर्वोत्प-त्तिविधिसिद्धानां प्रत्येकं वाक्येन तत्तत्फलसंयोगः तमे- |

| | | | | | |
|---|---|---|---|---|---|
| | | प्राप्तस्य फलस्य परित्यागः (नित्यानमपि फलवत्वस्य भगवत इष्टत्वात्) | | | तमिति वाक्येन विवदिषासंयोगश्च सिद्ध्यत इति । (गू० दी०) |
| ४ च० | त्रिविधः | तामसादिप्रकारैः | फलविषयतया, कर्मविषयतया कर्तृत्वविषयतया च | गुणैरपि त्रिविधः | विशेषणाभावाद्विशेष्याभावादुभयाभावाच्च । (गू० दी०) |
| ९ तृ० | फलं त्यक्त्वा | नित्यानां कर्मणां फलवत्वे भगवद्वचनं प्रमाणमवोचाम । अथवा यद्यपि फलं न श्रूयते नित्यस्य कर्मणः तथापि नित्यं कर्मकृतमात्मसंस्कारं वा फलं करोत्यात्मन इति कल्पयत्येवाज्ञः । तत्र तामपि कल्पनां निवारयति 'फलं त्यक्त्वा' इत्यनेन । | नित्यदीनि वर्णाश्रमविहितानि कर्माणि मदाराधनरूपताकार्याणि स्वयं प्रयोजनमिति मत्वा । | स्वर्गादिफलं | यद्यपि स्वर्गकामः पशुकामः इति वन्नित्यस्य कर्मणः फलं न श्रूयते तथापि फलाभावे अहरहः सन्ध्यामुपासीतं इत्यादिकर्मविधेरुन्मत्तवाच इवानर्थक्यं स्यात्ततो यत्किञ्चित्फलं कल्पनीयमुपात्तदुरितक्षयलक्षणं, तादृशफलं च फलकामनां च त्यक्त्वा । (ता० बो०) |

| | | | | | |
|---|---|---|---|---|---|
| १० तृ० | सत्वसमाविष्टः | यदा सत्वेनात्मना आत्म-विवेकविज्ञानहेतुना समाविष्टः संव्याप्तः संयुक्त इत्येतत् । | यथार्थज्ञानी | शुद्धसत्वगुणयुक्तः | सर्वकर्मसन्यासी, निष्कामः । (ता० बो०) । सत्वेनात्मानात्मविवेकज्ञानहेतुना चित्तगतेनातिशयेन सम्यग्ज्ञानप्रतिबन्धरजस्तमोमलराहित्येन आसमन्तात्फलाव्यभिचारेणाविष्टो व्याप्तः (गू०दी) । |
| ११ तृ० | कर्मफलत्यागी | अधिकृतः अज्ञः यः नित्यानि कर्माणि कुर्वन् कर्मफलाभिसन्धिमात्र-सन्यासी । | यस्तु तेषु महायज्ञादि-कर्मसु फलत्यागी । | न कर्मत्याग इति दृढीकरोति । | ——— |
| १२ तृ० | सांख्ये | ज्ञातव्याः पदार्थाः संख्या-यन्ते यस्मिन् शास्त्रे तत्साङ्ख्यं वेदान्तः | यथावस्थिततत्व-विषयया वैदिक्या बुद्ध्या अनुसंहिते निर्णये । वैदिकी हि बुद्धिः शरीरेन्द्रियप्राणजीवात्मोपकरणं परमात्मानमेव कर्तारमवधारयति । | ——— | सम्यक् ख्यायते निरुच्यत आत्मानात्मनोस्तत्वप्रकाश्यतेऽनेनेति साङ्ख्यं वेदान्त-शास्त्रं तस्मिन् (ता० बो०) । संख्यायन्ते व्युत्पाद्यन्तेऽस्मिन्निति सांङ्ख्यं वेदान्तशास्त्रं तस्मिन् (गू० दी०) । |

| | | | | | | |
|---|---|---|---|---|---|---|
| १६ प्र० द्वि० | कर्तारमात्मानम् | पञ्चसु कर्महेतुषु सत्सु तेष्वात्मानमनन्यत्वेनाविद्यया परिकल्प्य तैः क्रियमाणस्य कर्मणा 'अहमेव' कर्ता इत्यविद्वान् पश्यति आत्मानं शुद्धम् । | वस्तुतः परमात्मानुमतिपूर्वके जीवात्मनः कर्तृत्वे सति तत्र कर्मणि केवलमात्मानमेव कर्तारं यः पश्यति मौढ्यात् । | सर्वकर्मणां ईश्वराधीनत्वेन कर्तृत्वे जीवे निष्ठिते, स जीवः स्वतन्त्रः कर्तास्मीति । मौढ्यात् पश्यति । | एतेन यस्तार्किको देहादिव्यतिरिक्तमात्मानमेव कर्तारं केवलं पश्यति सोऽप्यकृतबुद्धित्वेन व्याख्यातः । (गू० दी०) |
| १७ प्र० | नाहंकृतो भावः | शास्त्राचार्योपदेशन्यायसंस्कृतात्मनो न भवत्यहंकृतः 'अहं कर्ता' इत्येवं लक्षणो भावः भावना प्रत्ययः । | परमपुरुषकर्तृत्वानुसन्धानेन यस्य भावः कर्तृत्वविशेषविषयो मनोवृत्तिविशेषो नाहङ्कृतः नाहमभिमानकृतः, 'अहं करोमि' इति ज्ञानं यस्य न विद्यते । | यस्त्वीषद्बध्यते स ईषदहङ्कारी ज्ञानिविषयो नाऽयं श्लोकः । | अहं तु उपाधितत्कर्मणोरुभयोः साक्षी तटस्थो निष्क्रिय एवास्मीति भावः (ता० बो०) । |
| १९ तृ० | गुणसङ्ख्याने | कापिले शास्त्रे, तदपि गुणसंख्यानशास्त्रं गुणभोक्तृविषये प्रमाणमेव, परमार्थब्रह्मैकत्वविषये | गुणकार्यगणने | गुणगणनप्रकरणे | गुणाः सम्यक् कार्यभेदेन ख्यायन्ते प्रतिपाद्यन्तेऽस्मिन्निति गुणसंख्यानं सांङ्ख्यशास्त्रम् (सु० बो०) । |

| | | | | | |
|---|---|---|---|---|---|
| | | यद्यपि विरुध्यते तथापि ते हि कापिलाः गुणगौण-व्यापारिनिरूपणेऽभि-युक्ताः । | | | |
| २२ प्र० द्वि० | एकस्मिन् कार्ये | देहे बहिर्वा प्रतिमादौ | एकस्मिन् कर्तव्ये कर्मणि प्रेतभूत-गणाधाराधनरूपे | जीवरूपे स्वस्मिन् (एकस्मिन् इति पदं सक्तमित्यनेनान्वेति) | ——— |
| ३७ च० | आत्मबुद्धि-प्रसादजम् | आत्मनो बुद्धिः आत्म-बुद्धिः तस्य प्रसादो नैर्मल्यं सलिलवत्स्व-च्छता, ततो जातम् | आत्मविषया बुद्धिः आत्मबुद्धिः तस्याः निवृत्तसकलेतरविषय-त्वं प्रसादः, तादृश्या प्रसन्नया बुद्ध्या विवि-क्तस्वभावात्मानुभ-वजनितम् । | विष्णुप्रसादजनितो आत्मबुद्धिप्रसादः येन विष्वितरस्याग्र-हणम् । तादृशप्रसा-दजम् । | प्रसादो निद्रालस्यादिराहि-त्येन स्वच्छतयाऽवस्थानम् (गू० दी०) । |
| ४५ द्वि० | संसिद्धिम् | स्वकर्मानुष्ठानादशुद्धि-क्षये सति कार्येन्द्रियाणां ज्ञाननिष्ठायोग्यतालक्ष-णाम् । | परमपदप्राप्तिम् । | ज्ञानद्वारा मुक्तिम् | सम्यक् सिद्धिं मत्प्रसादात्मि-काम् (अ० त०) । |

| | | | | | |
|---|---|---|---|---|---|
| ४९ तृ० | नैष्कर्म्यसिद्धिम् | निर्गतानि कर्माणि यस्मान्निष्क्रियब्रह्मात्मसम्बोधात्स निष्कर्मा, तस्य भावः, नैष्कर्म्यं च तत् सिद्धिश्च। निष्क्रियात्मस्वरूपावस्थानलक्षणस्य निष्पत्तिः। कर्मजसिद्धिविलक्षणां सद्योमुक्त्यवस्थानरूपाम्। | परमां ध्याननिष्ठां ज्ञानयोगस्यापि फलभूताम्। सर्वेन्द्रियकर्मोपरतिभूताम्। | नैष्कर्म्यफलां योगसिद्धिम् मोक्षोपयोगसिद्धिं प्रारब्धेतरानिष्टकर्मनाशम्। | ——— |
| ५० प्र० | सिद्धिम् | स्वकर्मणा ईश्वरं समभ्यर्च्य तत्प्रसादजां कार्येन्द्रियाणां ज्ञाननिष्ठायोग्यतालक्षणां सिद्धिम्। | आप्रयणादहरहरनुष्ठीयमानकर्मयोगनिष्पाद्यध्यानसिद्धिम्। | ——— | नैष्कर्म्यसिद्धिम् (भा० भा० दी०)। अन्तःकरणशुद्धिम् (गू० दी०)। |
| ५३ च० | ब्रह्मभूयाय कल्पते | ब्रह्मभवनाय कल्पते, समर्थो भवति। | ब्रह्मभावाय कल्पते सर्वबन्धविनिर्मुक्तो यथावस्थितमात्मानमनुभवत्। | ब्रह्मज्ञानाय कल्पते | ब्रह्मभूयस्य तदज्ञाननिवर्त्तकब्रह्मसाक्षात्कारमात्रपर्यवसायितया साक्षात्कारस्य ताच्छब्द्यं द्रष्टव्यम्। (ब्र० गि०) |

| | | | | | |
|---|---|---|---|---|---|
| ५४ प्र० | ब्रह्मभूतः | ब्रह्मप्राप्तः (अर्थात् जीवन्मुक्तः) | आविर्भूतापरिच्छिन्न-ज्ञानैकाकारमच्छेषतैक-स्वाभावात्मस्वरूपः । | ब्रह्मण्येव अवस्थापितं मनः यस्य, अर्थात् श्रियं प्रपन्नः । | ब्रह्मभवनसमर्थत्वात् (गू० दी०) । ब्रह्मण्यवस्थितः । (सु० बो०) |
| ५४ च० | परां मद्भक्तिम् | मयि परमेश्वरभक्तिं भजनं परामुत्तमां ज्ञान-लक्षणां चतुर्थीं लभते । 'चतुर्विधा भजन्ते माम्' इत्युक्ताम् । | मयि सर्वेश्वरे निखि-लजगदुद्भवस्थिति-प्रलयलीले........ स्वस्वामिन्यत्यर्थं प्रिया-नुभवरूपां परां भक्तिम् । | —— | —— |
| ५५ द्वि० | यावान् यश्चास्मि तत्वतः | यावानहमुपाधिकृतवि-स्तारभेदः, यश्चाहं विध्वस्तसर्वोपाधिभेदः उत्तमपुरुष आकाशकल्प-स्तं मामद्वैतचैतन्यमा-त्रैकरसम् अजमजरम-मरमगम्यं तत्वतः । | स्वरूपतः स्वभावतश्च योऽहं गुणतो विभूतितो-ऽपि यावांश्चाहं तं मां (एवंरूपया भक्त्या) तत्वतः | यावानस्मि यादृश-परिणामवानस्मि, यादृशैर्नामरूपेतोस्मि, अर्थात् सकलदेशका-लव्यापिनं पूर्णदिव्य-नामरूपोपेतं, मां तत्वतः स्वयोग्यतानु-सारम् । | किमहमणुपरिणामो वा... परिणामतस्तत्वतो मां तत्प-दार्थं जानाति, तथा च यश्चास्मीति देहेन्द्रियप्राणम-नसामन्यतः......आनन्दघनो वेति तत्वतः सर्वसंशयराहि-त्येन । (भा० भा० दी०) |
| ५५ च० | विशते तदनन्तरम् | मामेव विशते, नात्र ज्ञानान्तरप्रवेशक्रिये | मां प्रविशति । स्वरू-पस्वभावगुणविभूति- | ज्ञात्वा तदनन्तरं मां प्राप्नोति, अर्थात् | शुद्धं ब्रह्म विशते दर्पणापाये प्रतिबिम्बो बिम्बमिव प्रवि- |

| | | | | | |
|---|---|---|---|---|---|
| | | भिन्ने विवक्षिते ज्ञात्वा विशते तदनन्तरमिति । किं तर्हि ? फलान्तराभावात् ज्ञानमात्रमेव । | दर्शनोत्तरकालभाविन्या अनवधिकातिशयभक्त्या मां प्राप्नोतीत्यर्थः । | मुक्तिं प्राप्नोति | शति । तदनन्तरमिति जातेऽपि तत्वज्ञाने यावद्देहपातं प्रारब्धस्य प्रतिबन्धाद्विदेहकैवल्यं न प्राप्यते । (भा० भा० दी०) |
| ५६ द्वि० | मद्व्यपाश्रयः | अहं वासुदेव ईश्वरो व्यपाश्रयः यस्य सः । | मयि सन्यस्तकर्तृत्वादिकः । | मदाराधनारूपेण मयि निक्षिप्तकर्मा | मदेकशरणो मय्यर्पितसर्वात्मभावः (गू० दी०) । |
| ६६ प्र० | सर्वधर्मान् | धर्मशब्देनात्र अधर्मोऽपि गृह्यते नैष्कर्म्यस्य विवक्षितत्वात् । | कर्मज्ञानभक्तियोगरूपान् सर्वान् धर्मान् परमनिश्श्रेयससाधनभूतान् मदाराधनत्वेन अतिमात्रप्रीत्या यथाधिकारं कुर्वाण एव उक्तरीत्या फलकर्मककर्तृत्वादिपरित्यागेन परित्यज्य ।...एवम् एव सर्वधर्माणां शास्त्रीयपरित्याग इति 'यस्तु कर्मफलत्यागी स त्यागी- | साधनचतुष्टयवर्जं सर्वधर्मत्यागः अथवा सर्वकर्मफलत्यागः अवैष्णवधर्मत्यागो वा । | सर्वानपि धर्मान् परित्यज्य विद्यमानानविद्यमानान् वा शरणत्वेनानादृत्य । (गू० दी०) |

| | | | | | |
|---|---|---|---|---|---|
| | | | त्यभिधीयते' इत्युक्तत्वात् । | | |
| ६६ द्वि० | मामेकं शरणं व्रज | सर्वात्मानं समं सर्वभूतस्थमीश्वरमच्युतं मां गर्भजन्मजरामरणवर्जितम् 'अहमेव' इत्येवमेकं शरणं व्रज, न मतोऽन्यदस्तीत्यवधारय । | मामेकमेव कर्तारमाराध्यं प्राप्यमुपायं चानुसन्धत्स्व...भक्तियोगारम्भसिद्धये परमकारुणिकं मननालोचितविशेषाशेषलोकशरण्यमाश्रितवात्सल्यजलधिं शरणं प्रपद्यस्व । | मामेकमेव शरणं गच्छ | ——— |

# उद्धृतपद्यानां पादानुक्रमणी

# शुद्धिपत्रम्

| पृष्ठ संख्या | पंक्तिः | अशुद्धः | शुद्धः |
|---|---|---|---|
| ३ | १३ | तस्याः | तस्य |
| ९ | ५ | प्रसिद्धापु | प्रसिद्धासु |
| ११ | ३ | जिज्ञास्सस्ते | जिज्ञास्यते |
| १४ | १३ | फलेभ्योऽपि | फलेष्वपि |
| १४ | १४ | तं तं | तं |
| २७पादटिपणी | ६ | कृतो | कुतो |
| ३२ | २८ | प्रचययौ | प्रचयौ |
| ३३ | १७ | स्वशरीत्वात् | स्वशरीरत्वात् |
| ३८ | १० | स्वेच्छानवीन | स्वेच्छानधीन |
| ४२ | २२ | त्रतो | ततो |
| ४४ | ३ | अग्निष्टोयीय | अग्निष्ठोमीय |
| ४५ | १ | शत्नुवन्धः | शत्रुवधः |
| ४६ | १२ | परिहरिष्यन्ति भीतं | परिहसिष्यन्ति भीत- |
| ४७ | १२ | तत्नैवान्तत | तत्नैवान्तर्गत |
| ४९ | २१ | ते | तैः |
| ५५ | ८ | पूवोक्त | पूर्वोक्त |
| ५६ | १४ | योगस्य | योगस्थ |
| ५७ | २ | हृयवरं | ह्यवरं |
| ५७ | ३ | तत्वाज्ञान | तत्त्वज्ञान |
| ५८ | ९ | धर्मावुभावावपि | धर्मावुभावपि |
| | | बन्धको | बन्धकौ |
| ५८ | १० | युक्तः | युक्तं |

| | | | |
|---|---|---|---|
| ५९ | ३ | फलाधीनः | फलानधीनः |
| ५९ | ९ | मनीषिपदैः | मनीषिपदं |
| ६३ | १५ | प्रणोऽपि | प्रपाऽपि |
| ६४ | १० | तल्लणमनेन | तल्लक्षणमनेन |
| ६९ | २३ | आसीत् | आसीत |
| ७१ | ४ | भवन्ति | भवति |
| ७७ | ४ | मित्राणि | मिश्राणि |
| ८३ | १ | केवलमर्य | केवलमयं |
| ८६ | १ | शब्दे नज्ञान | शब्देन ज्ञान- |
| ९५ | १३ | त्रुति | श्रुति |
| ९७ | १ | तत्तिरीय | तैत्तिरीय |
| १०६ | २० | ज्ञाननत्वे | ज्ञानवत्वे |
| ११३ | १६ | निरीशीर्यत | निराशीर्यत |
| ११४ | १३ | पङ्गरेव | पङ्गुरेव |
| ११७ | १ | विधातकाः | विघातकाः |
| १३४ | १२ | वक्तं | वक्तुं |
| १३९ | २३ | चराचाणा | चराचराणा |
| १४० | १५ | भूतो | भूतौ |
| १४० | २१ | ईश्वरत्वस्येव | ईश्वरत्वस्यैव |
| १४० | २२ | बन्धस्येव | बन्धस्यैव |
| १४० | २६ | अनध | बन्ध |
| १४१ | १ | स्वाविकार | स्वविकार |
| १६६ | ९ | वदित | वदति |
| १६८ | २४ | चितप्रकृति | चित्प्रकृति |
| १६९ | २२ | श्चीमन्मध्वत | श्रीमन्मध्वमत |
| १७३ पादटिप्पणी | १३ | द्वतं | द्वैतं |
| १८३ | २० | भावनाभवित | भावनां भवित |
| १८४ | १४ | स्वरूपमधिक्रम्य | स्वरूपमतिक्रम्य |
| १८४ | २२ | तथैव | तयैव |

# सन्दर्भग्रन्थाः

अष्टोत्तरशतोपनिषदः—शिवप्रसाद-रघोराम-संपादितम्, वाराणसी, १९३८।

ईशादिदशोपनिषदः—श्रीशंकराचार्यग्रन्थावली, प्रथमो भागः, मोतीलाल बनारसीदास, दिल्ली, १९६४।

उपदेशसाहस्री—पदयोजनिकाव्याख्यायुता, निर्णयसागर प्रेस, मुम्बई, १९१८।

गीतार्थदीपिका, श्रीमद्भगवद्गीतायाः द्राविडी टीका, कोयम्बुत्तूर प्राड्विवाद-सभायां व्यवहर्त्तग्रिण्या विल्लवरम्बिल् कुप्पुस्वाम्यार्येण विरचिता। कलारत्नाकरमुद्रणालय, मद्रपुरी, तृतीयं संशोधनम्, १८९३।

गीतार्थसंग्रहरक्षा गीतातात्पर्यचन्द्रिका च– श्रीमद्रामानुजभाष्येण तात्पर्यचन्द्रिकाख्या वेदान्तदेशिककृतया टीकया चोपेता। श्रीवेदान्तदेशिक–ग्रन्थमाला काञ्चीपुरम्, १९४१।

गौतमधर्मसूत्राणि—मिताक्षरावृत्तियुतानि, चौखाम्बा संस्कृत सीरीज़्, वाराणसी, १९६६।

तैत्तिरीयारण्यकम्, आनन्दाश्रममुद्रणालयम्, मुम्बई, १९२७।

तैत्तिरीयवार्त्तिकम्—उपनिषद्भाष्यकल्याणविवरणव्याख्यासमुपेतम्, गुण्टूर, १९५०।

नारायणीयम्—नारायणभट्टपादरचितम्, श्रीराम प्रकाशनम्, मद्रास, १९६९।

न्यायकल्पलतिका—पण्डितराजसुब्रह्मण्यशास्त्रिणा सम्पादिता, केन्द्रीय-संस्कृत-विद्यापीठम्, तिरुपती, १९७१।

ब्रह्मसूत्रभाष्यम्—आनन्दतीर्थविरचितम्, जयतीर्थटीकया रघुनाथकृतशेषतात्पर्यचन्द्रिकया समलंकृतम्, पूर्णप्रज्ञट्रस्ट, बेङ्गलूर, १९६७।

ब्रह्मसूत्रशाङ्करभाष्यम्—कल्पतरु-भामतीपरिमलैरूपेतम्। म० म० अनन्तकृष्णशास्त्रिणा सम्पादितम्, निर्णयसागर प्रेस मुम्बई, १९१७।

मनुस्मृतिः—कुल्लूकभट्टटीकासहितम्, चौखाम्बा संस्कृत सीरीज़, वाराणसी, १९७०।

महाभारतम्—भण्डारकार-प्राच्य-विद्यासंस्थानम्, पूना, १९६१।

महाभारतम्—गीता प्रेस गोरखपुर।

योगवासिष्ठः—श्रीवाशिष्ठमहारामायणतात्पर्यप्रकाशसहितः, निर्णयसागर प्रेस, मुम्बई, १९१७।

रघुवंशम्,—मल्लिनाथटीकासहितम्, निर्णयसागर प्रेस, मुम्बई।

विवेकचूडामणिः—श्री पी० शङ्करनारायणार्यकृत-आङ्गलानुवादयुतः, भारतीयविद्याभवनम्, मुम्बई, १९६६।

विष्णुपुराणम्—वेङ्कटेश्वरमुद्रणालय, मुम्बई, १९१६।

वेदान्तपरिभाषा—विद्याभवनसंस्कृत-ग्रन्थमाला—१००, चौखाम्बा-संस्कृतपुस्तकालय, वाराणसी, १९६३।

वैशेषिकदर्शने प्रशस्तपादभाष्यम् उपस्करश्च, चौखाम्बा संस्कृतपुस्तकालय, वाराणसी, १९२३।

शतदूषणी—श्रीवत्साङ्काचार्येण सम्पादिता, मद्रपुरी, १९७४।

शतभूषणी—म० म० अनन्तकृष्णशास्त्रिकृता; भारतीविजयं प्रेस, मद्रास, १९५६।

शास्त्रसिद्धान्तलेशसंग्रहः—कृष्णालङ्कारव्याख्यया सहितः, श्रीमदप्पय्यदीक्षितेन्द्रग्रन्थावलीप्रकाशनसमितिः, सिकन्दराबाद, १९७१।

श्रीभाष्यम्—बडवूर-रङ्गनाथाचार्येण सम्पादितम्, प्रयाग, १९७२।

श्रीमद्भगवद्गीता—श्रीमच्छङ्करभाष्येण आनन्दगिरिकृत-व्याख्यायुजा संवलिता तथा नीलकण्ठीभाष्योत्कर्षदीपिका-श्रीधरीयसुबोधिनी-अभिनवगुप्ताचार्यव्याख्या - श्रीमधुसूदन-सरस्वतीस्वामिकृता गूढार्थदीपिकाख्यव्याख्यासहिता तद्व्याख्यानेन श्रीधर्मदत्तशर्म (प्रसिद्ध बच्चाशर्म) विरचितगूढार्थतत्वा-

लोकेन युना च। निर्णयसागर मुद्रणालय, मुम्बई, १९३६।

श्रीमद्भगवद्गीता—शाङ्करभाष्याद्येकादशटीकोपेता गुच्छद्वयात्मिका। गुजराती मुद्रणालय, मुम्बई, १९३५।

श्रीमद्भगवद्गीता—राघवेन्द्रविवृत्याद्यष्टव्याख्योपेता, गुजराती मुद्रणालय, मुम्बई, १९१५।

श्रीमद्भगवद्गीता—गीतातात्पर्यबोधिन्याख्यशंकरानन्दीव्याख्यासहिता। निर्णय-सागरमुद्रणालय, मुम्बई, १९३४।

श्रीमद्भगवद्गीता—वेङ्कटनाथकृत-ब्रह्मानन्दगिरिव्याख्योपेता। वाणिविलास-मुद्रणालय, श्रीरङ्गम्, १९१२।

श्रीमद्भगवद्गीता—श्रीधरीव्याख्यासंवलिता। निर्णयसागर-मुद्रणालय, मुम्बई, १९२५।

श्रीमद्गीतातात्पर्यनिर्णयः,–श्रीमदानन्दतीर्थविरचितः। प्राचीनं मुद्रणम-संग्रथितपुटात्मकम्।

श्रीमद्गीताभाष्यम्,–आनन्दतीर्थविरचितम्। प्राचीनं मुद्रणमसंग्रथितपुटात्मकम्।

श्रीमद्भागवतम्—गीता प्रेस, गोरखपुर।

सांख्यकारिका—तत्वकौमुदीसहिता, मोतीलाल बनारसीदास, दिल्ली, १९६७।

सिद्धित्रयम्—उभयवेदान्तग्रन्थमाला, मद्रास, १९७२।

सूतसंहिता—बालमनोरमा मुद्रणालय, मद्रास, १९३२।

A Comparative Study of the Commentaries on the Bhagavad-gītā. Prof. Mainkar; Motilal Banarsidas, Delhi, 1969.

A Concordance to the Principal Upanishads and Bhagavad-gītā, By Col. G. A. Jacob, Motilal Banarsi-das, Delhi, 1971.

Outlines of Indian Philosophy Prof. Hiriyanna.

The Minor Upaniṣads, Adyar Library, Madras, 1912.